धर्म्मेणाधिगतो येषां वेदः सपरिबृंहणः।
शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः॥

मत्सरः परोत्कर्षाऽसहिष्णुत्वं निरहङ्कारा निरभिमानाः कुम्भीधान्या अल्पसन्तुष्टा इह विवक्षिताः। अलोलुपा विषयालम्पटाः। दम्भः ख्यात्यर्थं धर्म्मानुष्ठानं धर्म्मेणाध्ययनेतिकर्त्तव्यतया, सपरिबृंहणः साङ्गेतिहासपुराणः। तदनुमानज्ञा वेदोहापोहकुशलाः। श्रुतिर्वेदः प्रत्यक्षः श्रवणेन्द्रियग्राह्यो हेतुरुपायो धर्म्मज्ञप्तौ येषां ते तथोक्ताः।

वसिष्ठः—

पारम्पर्य्यागतो येषां वेदः सपरिबृंहणः।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः॥

हारीतः—

शिष्टाः श्रुतिस्मृतिविहितावस्थिताः प्रतिपत्तव्याः।

अवस्थितज्ञानानुष्ठाननिष्ठाः।

आपस्तम्बः—

स्त्रीभ्यः सर्व्ववर्णेभ्यश्च धर्म्मशेषान् प्रतीयादित्येके।

एके ये पूर्व्वमापस्तम्बेन स्त्रीषु शूद्रेषु चाथर्व्वणस्य वेदस्य शेष इत्युपदिशन्तीत्युक्ताः, शिष्टाचारप्रामाण्येऽतिप्रसङ्गनिवारणायाह आपस्तम्बः—

दृष्टो धर्म्मव्यतिक्रमः साहसञ्चैव पूर्व्वेषाम्।
तेजोविशेषेण प्रत्यवायो न विद्यते।
तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरजोऽबलः॥

व्यतिक्रमो बुद्धिपूर्व्वका रागजा दुष्प्रवृत्तिर्यथेन्द्रस्याहल्यासङ्गः । साहसं क्रोधादिनाऽविमृश्यप्रवृत्तिर्यथा वसिष्ठस्य जलप्रवेशः । अवरज इदानीन्तनः, अबलो निषिद्धक्रियाजन्यानिष्टोदयविरोधिधर्म्मशून्यः, तेजोविशेषोऽपि पूर्व्वं स एव धर्म्मो विवक्षितः स तु प्रबलतरात्मतत्त्वसाक्षात्कारः । यथा पुष्करपलाश आपो न श्लिष्यन्ति[1] । एवमेवं विदितपापं कर्म्म न श्लिष्यत इत्यात्मतत्त्वसाक्षात्कारवतः पापानाश्लेषबोधकश्रुतेः ।

न प्रवृत्तिः प्रतिसन्धानाय क्षीनक्लेशस्य देहिनः ।

इति स्मृतेश्च ।

शङ्खलिखितौ—

आपत्स्वपि हि कष्टासु परमं नैव कामयेत् ।
नाभक्ष्यं भक्षयेत् किञ्चित् न पूर्व्वचरितं चरेत् ॥
तेजोमयानि पूर्व्वेषां नवीनानीन्द्रियाणि च ।
पापैस्ते नोपलिप्यन्ते पद्मपत्रमिवाम्भसा ॥
सुरां पिबन्ति त्रिदशा या चापेया द्विजातिभिः ।
हरन्ति वित्तं यत् सिद्धास्तच्चासिद्धे न विद्यते ॥

पूर्व्वचरितं निषिद्धं सुरां पिबन्तीत्यादि द्विजातीनां देवतात्वमुररीकृत्य ।

महाभारते—

कृतानि यानि कर्म्माणि सदैव[2] मुनिभिस्तथा ।
कर्म्माणि निषिद्धानि ।

---

(१) C—श्लिष्यन्ते । (२) C—दैवैश्च ।

नाचरेत्तानि धर्म्मात्मा श्रुत्वा चापि न विश्वसेत् ॥

सोऽयं पुरुषविशेषस्यैव व्यतिक्रमः। कश्चित्तु देशाचार-व्यतिक्रमरूपः।

तत्र बौधायनः—

पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः यानि दक्षिणतस्तानि व्याख्यास्यामः। यथैतदनुपनीतेन सह भोजनं स्त्रिया सह भोजनं मातुल-पितृस्वसृदुहितृपरिणयनमिति।

अथोत्तरतः—

उर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहारः, आयुधीयकं समुद्रयानमिति। इतर इतरस्मिन् कुर्व्वाणो दुष्यति इतर इतरस्मिन् तत्र देशप्रामाण्यमेव स्यात् मिथ्यैतदिति गौतमः। उभयन्त्वेतन्नाद्रियेत शिष्टस्मृतिविरोधदर्शनात्।

प्रतिपत्तिः—धर्म्मशास्त्रविरुद्ध प्रतिपत्तिः उभयतोदद्भिरुभयतोदन्तैः। तत्र देशप्रामाण्यमेव स्यादिति पूर्व्वपक्षः। शेषं सुबोधमिति।

देवलः—

शिक्षा-व्याकरण-निरुक्त-च्छन्दः-कल्प-ज्योतिषाणीति वेदाङ्गानि। तथा आर्षाः पूर्व्ववृत्तान्ताश्रयाः प्रवृत्तिफला इतिहासाः। आर्षा ऋषिप्रणीताः।

भविष्यपुराणे—

दृष्टार्था तु स्मृतिः काचिददृष्टार्था तथाऽपरा।
दृष्टाऽदृष्टार्थरूपाऽन्या न्यायमूला तथा परा॥

अनुवादस्मृतिस्त्वन्या शिष्टैर्दृष्टा तु पञ्चमी।
सर्व्वा एता वेदमूला दृष्टार्थां परिहृत्य तु॥

तथा—

षाड्गुण्यस्य प्रयोगे तु प्रयोगः कार्य्यगौरवात्।
सामादीनामुपायानां योगो व्याससमासतः॥
अध्यक्षाणाञ्च निक्षेपः कण्टकानां निरूपणम्।
दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभिर्गरुड़ाग्रज[1]!॥
सन्ध्योपास्तिः सदा कार्य्या [2]शुणो मांसं न भक्षयेत्।
अदृष्टार्था स्मृतिः प्रोक्ता ऋषिभिर्ज्ञानकोविदैः॥
पालाशं धारयेद्दण्डमुभयार्थां विदुर्बुधाः।
विरोधे तु विकल्पः स्याज्जपहोमश्रुतौ यथा॥
श्रुतौ दृष्टं तथा कार्य्यं स्मृतौ न तादृशं यदि।
अनुक्तवादिनी सा तु पारिव्राज्यं तथा गृहात्॥

षड्गुणाः सन्धिविग्रहादयः प्रयोगः कार्य्यगौरवात् षाड्गुण्यस्यैव व्याससमासाभ्यां कर्त्तव्य इत्यर्थः। सामादीनामपि कार्य्यगौरवात् व्याससमासाभ्यां प्रयोगः कर्त्तव्य इत्यर्थः। जपहोमश्रुताविति सूर्य्योदयावधिसावित्रीजपोऽनुदितहोमविषयो यथा।

---

(१) B—तत्त्वदर्शिभिः।
(२) A—श्वाममांसं।

अनुक्तवादिनौ यथा—

पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च (व्युत्थायाथ) यथाप्राप्त—भिक्षं चर्य्यं चरन्तीत्यनयाऽनूदितं ब्राह्मणः प्रव्रजेद्गृहा-दिति मनुस्मृतिर्वदति विधत्ते इत्यर्थः।

गौतमः—

तुल्यबलविरोधे विकल्पः।

जावालः—

श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी।
अविरोधे सदा कार्य्यं स्मार्त्तं वैदिकवत् सदा॥

गौतमः—

देशजातिकुलधर्म्माश्चाम्नायैरविरुद्धाः प्रमाणम्।

आम्नायैः श्रुतिस्मृत्यादिभिः।

श्रुतिमित्यनुवृत्तौ भविष्यपुराणे—

श्रुत्या सह विरोधे तु साध्यते विषयं विना।
व्यवस्थया विरोधेन कार्य्योऽन्यत्र परीक्षकैः॥
स्मृत्यर्थेन विरोधे तु अर्थशास्त्रस्य बाधनम्।
परस्परविरोधे तु न्याययुक्तं प्रमाणवत्॥
अदृष्टार्थे विकल्पस्तु व्यवस्थासम्भवेऽसति।
स्मृतिशास्त्रे विकल्पस्तु आकाङ्क्षापूरणे सति॥

विषयं विना कुत्रापि विषये अवकाशमन्तरेण स्मृत्यर्थेन धर्म्म-शास्त्रार्थेन अर्थशास्त्रस्य दण्डनीत्यादेः। परस्परं अर्थशास्त्रयोरेव न्याययुक्तं प्रामाणिकम्, अदृष्टार्थे धर्म्मशास्त्रार्थे विकल्पः, व्यवस्था-

सम्भवे विशेषव्यवस्थितिसम्भवेऽसति, सति तु व्यवस्थैव स्मृतिशास्त्र-विकल्पः ।

धर्म्मशास्त्रयोर्विरोधे विकल्प आकाङ्क्षापूरणे आकाङ्क्षायां सत्यां तदुपबृंहणे समुच्चय एव तेन साकाङ्क्षत्वात् स्मृत्यादीनां समुच्चयः सूचितः ।

मनुः—प्रत्यक्षमनुमानञ्च शाब्दञ्च विविधागमम् ।
[1]त्रयं सुविदितं कार्य्यं धर्म्मसिद्धिमभीप्सता ॥
आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः ॥

शाब्दं शब्दज्ञानानन्तरजं विविधागमं विविध आगमः श्रुतिस्मृत्यादिरूपः करणतया यस्य, आर्षं ऋषिप्रणीतं तर्केण न्यायविमर्षेणेति केचित् ।

अन्ये प्रसङ्गरूपेणेति पूजितविचारया मीमांसयेत्यपरे भेदेऽभेदे वा सहकारित्वानुवादात् सर्व्वमिदमविरोधि ।

कल्पतरुकारस्तु—

प्रमाणमात्रोपकारकतयैव तर्कमवतारयति स्म सर्व्वस्यैव प्रमाणस्य यथायथं तर्कसहकारित्वात् प्रमाणविभागविवाद-स्त्वन्य [2]एव ।

व्यासः—धर्म्मशुद्धिमभीप्सुभिर्न वेदादन्यदिष्यते ।
धर्म्मस्य कारणं शुद्धं मिश्रमन्यत् प्रकीर्त्तितम् ॥

---

(१) B—एवं । (२) C—अन्यत एव ।

अतः स परमो धर्मो यो वेदादवगम्यते।
अपरः स तु विज्ञेयो यः पुराणादिषु स्थितः॥
एतेभ्योऽपि यदन्यस्य किञ्चिद्धर्माभिधायकम्।
तदद्भुतवचो विद्धि मोहस्तस्याश्रयो मतः॥
वेदार्थवित्तमैः कर्म यत् स्मृतमृषिभिः पुरा।
तद्यत्नेनानुतिष्ठेत तन्निषिद्धञ्च वर्ज्जयेत्॥
ते हि वेदार्थतत्त्वज्ञा लोकानां हितकारिणः।
प्रदिष्टवन्तो यं धर्मं तं धर्मं न विचारयेत्॥
वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेद्यदि।
ऋषिभिर्निश्चिते[1] तत्र का शङ्का स्यान्मनीषिणाम्॥

शङ्खलिखितौ—

रागद्वेषादि[2]दग्धानामज्ञानविषपायिनाम्।
चिकित्सा धर्मशास्त्राणि व्याधीनामिव भेषजम्॥

रागद्वेषादिदग्धानां सतामज्ञानविषपायिनां भ्रमरूपज्ञानभाजां चिकित्सा धर्मशास्त्राणि वैषयिकज्ञानाधानद्वारा मोहनिवर्त्तकत्वात्।

यमः—यथा हि मृन्मयं भाण्डं दुष्टं वर्षशतैरपि।
पुनः पाकेन शुध्येत धर्मशास्त्रैस्तथा द्विजाः॥

हारीतः—अज्ञानतिमिरान्धानां भ्रामितानां कुदृष्टिभिः।
धर्मशास्त्रप्रदीपोऽयं धार्य्यो मार्गप्रदर्शकः॥

---

(१) A—निर्णीते। (२) B—द्वेषाग्नि-।

कुदृष्टिभिर्मन्दरागैर्वेदविद्वेषिभिः ।

यमः—वेदाः प्रमाणं स्मृतयः प्रमाणं
धर्म्मार्थयुक्तं वचनं प्रमाणम् ।
यस्य प्रमाणं न भवेत् प्रमाणं
कस्तस्य कुर्य्याद्वचनं प्रमाणम् ॥
न यस्य वेदा न च धर्म्मशास्त्रं
न वृद्धवाक्यं हि भवेत् प्रमाणम् ।
[1]स धर्म्मकार्य्यान्निहतो दुरात्मा
नात्मापि तस्येह भवेत् प्रमाणम् ॥

वेदाः प्रमाणमिति समुदायस्य प्रमाकरत्वविवक्षया एकवचनं धर्म्मार्थयुक्तं वचनमिति च सद्वचनाभिप्रायम् । यस्य प्रमाणं न भवेत् प्रमाणमनन्तरोक्तं वेदादि यस्य प्रमाणं न भवेदित्यर्थः ।

वसिष्ठः—

त्रैविद्यवृद्धा यं ब्रूयुर्धर्म्मं धर्म्मविदो जनाः ।
पतने[2] पावने चैव स धर्म्मो नात्र संशयः ॥

त्रैविद्यवृद्धाः शिष्टाः पतने अधर्म्मे पावने धर्म्मे यं ब्रूयुः स धर्म्मः ।

मनुः—

अनाम्नातेषु धर्म्मेषु कथं स्यादिति चेद्भवेत् ।
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्म्मः स्यादशङ्कितः ॥

---

(१) C—सोऽधर्म्मकृत् पापकृतः । (२) B—पवने ।

## अथ निमित्ततः।

तत्र शङ्खलिखितौ—

तत्र धर्म्मलक्षणानि—देशः काल उपायो द्रव्यं श्रद्धा पात्रं त्याग इति समस्तेषु धर्म्मोदयः साधारणोऽन्यथा विपरीतः। श्रद्धापात्रसम्पन्नो धर्म्मः कालापेक्षः श्रद्धा द्रव्योत्पत्तिरिति कालस्तन्मूलो देश आर्य्यावर्त्तादिः, कालः संक्रान्त्यादिः, उपाय इतिकर्त्तव्यता द्रव्यं त्याज्यमाज्यादि, श्रद्धा शास्त्रार्थेऽतिप्रत्ययः।

पात्रं विद्यातपोवृत्तसम्पन्नं, त्यागो जपादेरप्युपलक्षणम्। समस्तेषु सर्व्वेषु सत्सु धर्म्मोदयो धर्म्मोत्पादः साधारणः सर्व्वेषु सत्सु भवति, भवति चैकेनापि विना, एवञ्च देशादीनामपि यथासम्भवं प्रत्येकं कारणत्वमुक्तम्, अन्यथा देशादीनामन्यतमस्याभावे विपरीतो धर्म्मानुदयो वैगुण्यं वा, विशेषविहितदेशकालविशेषं विनापि श्रद्धापात्रविशेषसम्पत्तिमात्रेण विशिष्टधर्म्मसिद्धिमाह श्रद्धामात्रसम्पन्नो धर्म्मः कालापेक्षः श्रद्धापात्रविशेषाभ्यामेव तावत् सम्पद्यते धर्म्मः, यदि कालो लभ्येत कोऽसावित्यत आह।

श्रद्धाद्रव्योत्पत्तिरिति कालः श्रद्धापात्रसम्पत्तौ यदा द्रव्यं स्यात् स एव कालो विशिष्टधर्म्महेतुर्नापरो विषुवादिवदपेक्षणीयः। एवं देशोऽपीत्याह तन्मूलो देशः श्रद्धादिसम्पत्तिरेव मूलं धर्म्मजनकत्वेन सहकारि यस्य स तथोक्तः। तेन श्रद्धापात्रद्रव्यसम्पत्तौ विशेषविहितदेशकालव्यतिरेकेणापि निषिद्धेतरदेशकालयो र्धर्म्मो जायत इति समुदायार्थः।

विष्णुपुराणे—

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः॥

तथा—

अत्र जन्मसहस्राणां सहस्रैरपि सत्तम।
कदाचिल्लभते जन्तु[1]र्मानुष्यं पुण्यसञ्चयात्॥
नवयोजनसाहस्रो विस्तारोऽस्य महामुने।
कर्म्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम्॥

गायन्ति देवाः खलु गीतकानि
धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात्॥
कर्म्माण्यसङ्कल्पिततत्फलानि
सन्न्यस्य विष्णौ परमात्मरूपे।
अवाप्य तां कर्म्ममहीमनन्ते
तस्मिन् लयं ये त्वमलाः प्रयान्ति॥

भविष्यपुराणे—

ब्रह्मावर्त्तः परो देश ऋषिदेशस्त्वनन्तरः।
मध्यदेशस्ततो न्यून आर्य्यावर्त्तस्त्वनन्तरः॥

अनन्तर ईषन्न्यूनः, नञीषदर्थे अलवणा यवागुरितिवत्।

(१) A—जन्म।

मनुः—

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्म्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥
तस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः ।
वर्णानामाश्रमाणाञ्च[1] स सदाचार उच्यते ॥

आचारो वर्णाश्रमप्रतिबद्धो धर्म्मः पारम्पर्य्यक्रमागतः प्रथमो न तु भ्रमादिमूलः, अन्तरालाः सङ्करजातयः ।

कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः ॥
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्व्वमानवाः ॥
हिमवद्विन्ध्ययोर्मध्ये तत् प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥
आसमुद्रात्तु वै पूर्व्वादासमुद्रात्तु पश्चिमात् ।
तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं प्रचक्षते ।
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स एव यज्ञियो[2] देशो म्लेच्छदेशस्ततः परः ॥
एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः ।
शूद्रस्तु यस्मिन् तस्मिन्[3] वा निवसेद्वृत्तिकर्षितः ॥

---

(१) C—सान्तरालानां ।
(२) मूले—याज्ञिकः ।
(३) B—कस्मिन् ।

मत्स्यादिशब्दा बहुवचनान्ता देशपराः। मत्स्यो विराट-देशः पाञ्चालः कान्यकुब्जाहिक्षत्रादिदेशः। शूरसेनको मथुरादि-देशः, अग्रजन्मनो ब्राह्मणस्य, विनशनं सरस्वत्या अन्तर्द्धान-देशः। स्वभावतोऽन्नपानादिना, यज्ञियो यज्ञार्हः, म्लेच्छदेशो यज्ञानर्हदेशः, वृत्तिः कुटुम्बभरणोचितधनोपायः, तदभावेन कर्षितः पीड़ितः।

वसिष्ठः—

धर्म्मं आर्य्यावर्त्तं प्राग्दर्शनात् प्राक्कालवचनात् उदक्पारि-पात्रात् दक्षिणेन हिमवतः उत्तरेण विन्ध्यात् ये धर्म्मा ये आचारास्ते प्रत्येतव्याः। तत्र वसति धर्म्मोऽवश्यमिष्टापूर्त्तादि-रूपः तत्प्रतिपादकञ्च मुख्यतो धर्म्मशास्त्रमिति तद्धर्म्मशास्त्रं निबध्यते।

इति महासान्धिविग्रहिक-ठक्कुर-श्रीवीरेश्वरात्मज-महासान्धि-विग्रहिक-ठक्कुर-श्रीचण्डेश्वरविरचिते कृत्य-रत्नाकरे धर्म्मनिरूपणतरङ्गः॥

# अथ परिभाषा।

तत्र कर्त्तृधर्म्मेषु दक्षः—

उषःकाले तु सम्प्राप्ते शौचं कृत्वा यथार्थवत्।
ततः स्नानं प्रकुर्व्वीत दन्तधावनपूर्व्वकम्॥

नरसिंहपुराणे—

अलाभे दन्तकाष्ठानां प्रतिषिद्धदिने तथा।
अपां द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते॥

विष्णुः—

स्नातोऽधिकारी भवति दैवे पैत्रे च कर्म्मणि।
पवित्राणान्तथा जप्ये दाने च विधिदेशिते॥

आग्नेयपुराणे—

स्नानानामथ सर्व्वेषां वारुणेन च मानवः।
कर्त्तुमर्हति कर्म्माणि विधिवत् सर्व्वदा द्विजः॥
असामर्थ्याच्छरीरस्य कालशक्तिव्यपेक्षया[1]।
मन्त्रस्नानादिकाः सप्त[2] केचिदिच्छन्ति सूरयः॥
[3]अशक्तौ हि भवेत् स्नानमशिरस्कं हि कर्म्मिणाम्।
अशिरस्कं शिरोमार्ज्जनरहितं कर्म्मिणां कर्म्मचिकीर्षूणाम्।
आर्द्रेण वाससा वापि मार्ज्जनं सर्व्वकर्म्मसु।

---

(१) मूले—देशकालाद्यपेक्षया। (२) A—पञ्च।
(३) B—अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्म्मिणाम्।

अशक्ताशक्तस्त्रीपुंससाधारणञ्च गोशृङ्गप्रक्षालनजलस्नानम् । हरिवंशे तथैवोक्तेरिति सागरः ।

याज्ञवल्क्यः—

न कुर्य्यात् कस्यचित् पीड़ां कर्म्मणा मनसा गिरा ।
आचरन्नभिषेकन्तु कर्म्माण्यन्यानि चाचरन् ॥

मार्कण्डेयपुराणे—

सूर्य्योदयं विना नैव स्नानदानादिकाः क्रियाः ।
अग्नेर्विरहितश्चैव क्रतुस्तावन्न लभ्यते ॥

दक्षः—

देवकर्म्माणि पूर्व्वाह्णे मनुष्याणाञ्च मध्यमे ।
पितॄणामपराह्णे तु कार्य्याणीति विनिश्चयः ॥
सदोपवीतिना भाव्यं सदा बद्धशिखेन तु ।
विशिखो व्युपवीतश्च[1] यत् करोति न तत् कृतम् ॥

साम्बपुराणे—

क्रियां यः कुरुते लोभादनाचम्यैव नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियाः सर्व्वा न संशयः ॥

छन्दोगपरिशिष्टे कात्यायनः—

यत्र दिङ्नियमो नास्ति जपहोमादिकर्म्मसु ।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्याऽपराजिता ॥

सौम्या उत्तरा अपराजिता ऐशानी ।

---

(१) मूलपुस्तके व्यनुपवीती च ।

आसीन ऊर्द्धः प्रह्वो वा नियमो यत्र नेदृशः।
[1]तदासीनेन कर्त्तव्यं न प्रह्वेन न तिष्ठता ॥

न प्रह्वेन नावनतेन न तिष्ठता नोर्द्धजानुना।

यत्रोपदिश्यते कर्म्म कर्त्तुरङ्गं न तूच्यते।
दक्षिणस्तत्र विज्ञेयः कर्म्मणां पारगः करः ॥

वायुपुराणे—

दानं प्रतिग्रहो होमो भोजनं बलिरेव च।
साङ्गुष्ठेन सदा कार्य्यमसुरेभ्योऽन्यथा भवेत् ॥

साङ्गुष्ठेनाङ्गुलीसङ्गताङ्गुष्ठेन।

एतान्येव च कर्म्माणि दानादीनि विशेषतः।
अन्तर्जानुविशेषेण तद्वदाचमनं नृप ॥

लघुहारीतः—

जपे होमे तथा दाने स्वाध्याये पितृतर्पणे।
अशून्यन्तु करं कुर्य्यात् सुवर्णरजतैः कुशैः ॥

कूर्म्मपुराणे—

विना दर्भेण यत्कर्म्म विना सूत्रेण वा पुनः।
अग्राह्यं तद्भवेत् सर्व्वं नामुत्रेऽह फलप्रदम् ॥

सूत्रेण यज्ञोपवीतेन एतच्च त्रैवर्णिकानाम्।

योगियाज्ञवल्क्यः—

परिधानाद्वहिः कक्षा निबद्धा ह्यासुरी मता।
धर्म्मे कर्म्मणि विद्वद्भिर्वर्ज्जनीया प्रयत्नतः ॥

---

(१) C—तत्रासीनेन।

वहिःकच्छा असंवृतपरिधानवस्त्रान्तः ।

बौधायनः –

कर्म्मयुक्तो नरो नाभेरधःस्पर्शं विवर्ज्जयेत् ।
होमदेवार्च्चनाद्यासु क्रियास्वाचमने तथा ॥
नैकवस्त्रः प्रवर्त्तेत द्विजवाचनके जपे ।

वाचनके अभिवादनके ।

द्विवस्त्रस्याप्येकवस्त्रत्वे शातातपः —

सव्यादंशात् परिभ्रष्टं कटिदेशे धृताम्बरम् ।
एकवस्त्रन्तु तं विद्याद्दैवे पैत्रे च वर्ज्जयेत् ॥

शाट्यायनः—

दानमाचमनं होमं भोजनं देवतार्च्चनम् ।
प्रौढ़पादो न कुर्व्वीत स्वाध्यायं पितृतर्पणम् ॥
आसनारूढ़पादस्तु जान्वोर्वा जङ्घयोस्तथा ।
कृतावसक्थिको यश्च प्रौढ़पादः स उच्यते ॥

कृतावसक्थिको वद्धपर्य्यङ्कः ।

बौधायनः—

काषायवासाः कुरुते जपहोमप्रतिग्रहान् ।
न तद्देवगमं भवति हव्यकव्येष्वयो हविः ॥

व्यासः—

आर्द्रवासास्तु यः कुर्य्याद् जपं होमं प्रतिग्रहम् ।
सर्व्वं तद्राक्षसं विद्याद्वहिर्जानु च यत् कृतम् ॥

एतच्च काषायवाससा आर्द्रवाससा जपादिप्रतिषेधनमश्रुत-विषये, यत्र तु कर्म्मविशेषे काषायवाससैवार्द्रवाससैवानुष्ठानं श्रूयते तत्र तथैवानुष्ठानं कर्त्तव्यम् ।

वसिष्ठः—

जपहोमोपवासेषु धौतवस्त्रधरो भवेत् ।
अलङ्कृतः शुचिर्मौनी श्राद्धादौ विजितेन्द्रियः ॥

श्राद्धादावित्यादिशब्देन दानव्रतादिग्रहणम् ।

जपकाले न भाषेत व्रतहोमादिकेषु च ।
एतेष्वेवावसन्नान्तु यद्यागच्छेद्द्विजोत्तमः ।
अभिवाद्य तथा विप्रं योगक्षेमन्तु कीर्त्तयेत् ॥

बौधायनः—

अत्र मौनमुक्तं त्रैविद्यवृद्धैराचार्य्यैर्मुनिभिरन्यैर्वा सुमतिभिर्बहु-श्रुतै[र्दन्तै]र्दन्तान् सन्धायान्तर्मुख एव यावदर्थं सम्भाषेत न यज्ञलोपो भवतीति विज्ञायते ।

यज्ञो नियमः ।

योगियाज्ञवल्क्यः—

स्त्रीशूद्रपतितांश्चैव रासभञ्च रजस्वलाम् ।
जपकाले न भाषेत व्रतहोमादिकेषु च ॥
तूष्णीमासीत तु जपन् चाण्डालपतितादिकान् ।
दृष्ट्वा तान् [2]वार्य्युपस्पृश्याभाष्य स्नात्वा पुनर्जपेत् ॥

---

(१) D—[ ] चिह्नितस्थलं नास्ति । (२) A B—वायुं संस्पृश्य ।

विधिदृष्टन्तु यत् कर्म्म करोत्यविधिना तु यः ।
फलं न किञ्चिदाप्नोति क्लेशमात्रं हि तस्य तत् ॥
श्रद्धाविधिसमायुक्तं कर्म्म यत् क्रियते नृभिः ।
सुविशुद्धेन भावेन तदानन्त्याय कल्पते ॥
विधिहीनं भावदुष्टं कृतमश्रद्धया तु यत् ।
तद्धरन्त्यसुरास्तस्य मूढस्य दुष्कृतात्मनः ॥

अथ सप्रमादकर्त्तृकधर्म्माः ।

तत्र छन्दोगपरिशिष्टे कात्यायनः—

पित्र्ये मन्त्रार्थहरणे आत्मालम्भे त्ववेक्षणे ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥

अनुहरणे पाठे आत्मालम्भे आत्महनने आत्मप्रशंसायाञ्चेति सागरः । आत्माधिष्ठानभूहृदयस्पर्शे अवेक्षणे तस्यैव, एते च स्पर्शावेक्षणे यज्ञादौ विहित इति कल्पतरुः ।

मार्ज्जारमूषिकस्पर्शे आक्रुष्टे क्रोधसम्भवे ।

आक्रुष्टं परुषभाषणम् ।

निमित्तेष्वेषु सर्व्वेषु कर्म्म कुर्व्वन्नपः स्पृशेत् ।

अप आचामेत् स्पर्शमात्रमित्येके ॥

प्रवृत्तमन्यथा कुर्य्याद् यदि मोहात् कथञ्चन ।
यतस्तदन्यथाभूतं तत एव समापयेत् ॥

प्रवृत्तमनुष्ठीयमानं प्रधानाङ्गभूतं कर्म्म ।

समाप्ते यदि जानीयान्मयैतदन्यथा कृतम् ।
तावदेव पुनः कुर्य्यान्नावृत्तिः सर्व्वकर्म्मणः ॥

प्रधानस्याक्रियायान्तु साङ्गं तत् क्रियते पुनः ।
तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत्क्रिया ॥

अत्र तदङ्गस्याङ्गाङ्गस्योपवीतित्वादेः, तत्र प्रायश्चित्तविशेषाश्रुतेर्विष्णुस्मरणमेव कार्य्यम् । एवन्तु कर्त्तृधर्म्मादिषु ज्ञान-मोहाभ्यामङ्गाङ्गाननुष्ठानेऽनुक्तप्रायश्चित्तं[1] विष्णुस्मरणमेव कार्य्यम् । तथाच योगियाज्ञवल्क्यः—

यदि वाग्यमलोपः स्याज्जपादिषु कथञ्चन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥
अज्ञानादथवा मोहात् प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥

इति सागरः ।

लक्ष्मीधरस्तु—

तदङ्गस्याकरणे न साङ्गप्रधानावृत्तिर्नापि तावन्मात्रस्याङ्गस्य करणं किन्तु प्रायश्चित्तमेव कार्य्यमित्याह ।

विष्णुधर्म्मे—

पाखण्डिनो विकर्म्मस्थान् नालपेच्चैव नास्तिकान् ।

पाखण्डिनो वेदविपरीतधर्म्मोपदेष्टारः, विकर्म्मस्था दम्भेन वैदिककर्म्मानुष्ठानकर्त्तारो नास्तिका धर्म्मासत्त्ववक्तारः ।

सम्भाष्यैतान् शुचिपदं चिन्तयेदच्युतं बुधः ।
द्रष्टव्योदाहरेत् सम्यक् कृत्वा तवत्परं मनः ॥

---

(१) D—प्रायश्चित्ते ।

14452

शरीरमन्तःकरणं तथाङ्गो
वाचश्च विष्णुर्भगवानशेषं ।
शमं नयत्वस्तु ममेह शर्म्मं
पापादनन्ते हृदि सन्निविष्टे ॥
अन्तःशुद्धिं बहिःशुद्धिं शुद्धान्तर्मानसोऽच्युतः ।
करोतु विमले तस्मिन् शुद्ध एवास्मि सर्व्वदा ॥
बाह्योपघातमनघो बुद्धेश्च भगवानजः ।
शुद्धिं नयत्वनन्तात्मा विष्णुश्चेतसि संस्थितः ॥
एतत् सम्भाष्य वक्तव्यं पाखण्डादीनुपोषितैः ।
उपोषितैर्नियमस्थैः ।

विष्णुधर्म्मोत्तरे—

उपविष्टो जपन् स्नातः क्षुतप्रस्खलितादिषु ।
पूजायां नाम कृष्णस्य सप्तवारान् प्रकीर्त्तयेत् ॥
आदिशब्देन काशजृम्भादिग्रहणम् ।

---

## अथाशक्तकर्त्तृधर्म्माः ।

तत्र ब्रह्मपुराणे—

व्रतस्थः प्राणरक्षार्थं कदाचिदुदकं पिबेत् ।
फलमूलेऽथवा क्षीरं यज्ञशिष्टञ्च वा हविः ॥
व्रतमध्ये च रोगार्त्तो वैद्यप्रोक्तमथौषधम् ।
करोति च गुरोर्वाक्यं व्रतस्थस्तत्क्षणादपि ॥

ब्राह्मणस्याभिलषितं साधयेदविचारयन्।

एतान्यष्टौ व्रतस्यानामव्रतघ्नानि[1] कुत्रचित्॥

एतानि च ब्रह्मपुराणीयवाक्यानि कल्पतरुकामधेनुपारिजाते-ष्वस्मिन् प्रकरणे लिखितानि। आग्नेयपुराणे च - चान्द्रायणादि-प्रायश्चित्तानन्तरं दृष्टानीति दानसागरीये तत् सामान्यलिखितं[2] न निर्विशङ्कम्।

देवलः—

सर्व्वभूतभयं व्याधिः प्रमादो गुरुशासनम्।

अव्रतघ्नानि कथ्यन्ते सकृदेतानि शास्त्रतः॥

सर्व्वभूतभयं व्याघ्रादिदुष्टजन्तुभयं व्याधिः तत्प्रतिबन्धचमः, प्रमादो विस्मरणं गुरुशासनं गुरोराज्ञा सकृदित्यभिधानादेतेषा-मावृत्तौ व्रतलोप एव कामतस्तु त्यागे प्रत्यवायोऽपीति॥

---

## अथोपवासादिग्रहणपरिभाषा।

तत्र भविष्यपुराणे—

उपावृत्तस्य दोषेभ्यो यस्तु वासो गुणैः सह।

उपवासः स विज्ञेयः सर्व्वभोगविवर्ज्जितः॥

वासो गुणैः सहेति चमादिभिः सह वासो नियमेना-वस्थानम्।

---

(१) D—न व्रतघ्नानि। (२) D—लिखनं।

तथा—

यां तिथिं नियमं कर्त्तुं भक्त्या समनुगच्छति ।
तस्यां तिथौ विधानं यत्तन्निबोध जनाधिप ! ॥
यदा तु प्रतिपद्याञ्च गृह्णीयान्नियमं नृप ! ।
चतुर्द्दश्यां कृताहारः सङ्कल्पं परिकल्पयेत् ॥
अमावस्यां न भुञ्जीत त्रिकालं स्नानमाचरेत् ।
पवित्राणि जपेन्नित्यं सावित्रीशिरसा[1] सह ॥

सावित्रीजपश्च त्रैवर्णिकानां स्त्रीशूद्रयोः पौराणिकस्तुतिपाठस्तदशक्तौ नारायणस्मरणमिति दानसागरः ।

---

## अथ व्रतधर्म्माः ।

तत्र महाभारते—

गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासन्तु गृह्णीयाद्यद्वा सङ्कल्पयेद्बुधः ॥

तत्र कल्पतरुः—यद्वा अन्यन्नक्तादिकम् ।

पारिजातस्तु—यद्वेत्यनेन सङ्कल्पमात्रमपि कर्त्तव्यमित्याह ।

देवलः—

अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः ।
सूर्य्याय देवताभ्यश्च निवेद्य व्रतमाचरेत् ॥

अत्रापि पारिजातः—

---

(१) A—सावित्रीं शिरसा ।

प्रातर्व्रतमाचरेदिति सम्बन्धः प्रधानपदार्थान्वयस्याभ्यर्हितत्वात् अभुक्त्वा आहारमित्यर्थात् पूर्व्वदिने एकवचनानुरोधादेकाहारमभुक्त्वेत्यर्थादेकभक्तत्वमायातीति लिखित्वा—

अत्राहुः—यद्यस्मादेकवाक्यात् पूर्व्वदिन एकाहारविधिस्तदा वाक्यभेदो दोषः, अनुप्राप्तानुवादे त्वेकभक्तविधायकं वाक्यमनुसन्धेयं तस्मात् प्रातराहारमभुक्त्वेति योजनीयम्। तेन प्रातराहारकरणात् पूर्व्वं व्रतं गृह्णीयादित्यर्थ इत्याह।

अत्रोभयोरपि पक्षयोः प्रातरेव व्रतग्रहणम् एकभक्तत्वाभिधायकत्वे परं विशेषः। एकभक्तत्वस्य च वाक्यान्तरात् प्राप्तिव्यतिरेके वाक्यभेदोऽपि श्रेयान् विशिष्टमर्थमादायैकवाक्यतापि स्यादिति प्राचीन एव पक्षः।

चतुर्द्दश्यां कृताहारः सङ्कल्पं परिकल्पयेत्।
अमावस्यां न भुञ्जीत त्रिकालस्नानमाचरेत्॥

इत्यत्र वाक्ये कृताहारस्य सङ्कल्पविधानमसङ्गतमिति चेत्, न, चतुर्द्दश्यां कृताहारः सङ्कल्पविधिं कल्पयेत् इत्यत्रामावस्यामित्यन्वयात्।

पूर्व्वापरान्वययोरुत्तरान्वयो न बलीयानिति चेत्; न, देवलवाक्ये प्रातःशब्दसार्थकत्वान्यथानुपपत्त्या तस्यापि युक्तत्वात्। प्रातराहारनिषेधेनैकभक्तविधानात् सार्थकत्वमिति चेत् नः प्रथमभोजनमात्रेणैकभक्तस्याशास्त्रार्थत्वापत्तेः। प्रातराहारशब्देनैकाहारी विवक्षित इति चेत् न अशब्दार्थत्वात्। तस्मादुपपत्त्या आचारेण च तिथिव्रतादौ प्रातरेव व्रतग्रहणम्।

यत्र तु विशिष्टे तद्बाधकावतारस्तत्र त्यज्यतेऽपि यथा प्रायश्चित्तव्रते।

व्रतं निशामुखे ग्राह्यं बहिस्तारकदर्शनात्।

इत्येकभक्तानन्तरं रात्रौ सङ्कल्पविधानम्। न च तदेतत्परमपि बाधकस्योक्तत्वात्, देवताभ्य इति सूर्य्यस्य स्वपदोपात्तत्वात् तद्व्यतिरिक्तदेवलोक्तसकलकर्म्मसाक्षिसोमादिदेवताभ्यः।

तथाच देवलः—

सूर्य्यः सोमो यमः कालो महाभूतानि पञ्च च।
देवा एव हि जानन्ति वृत्तं जन्तोः शुभाशुभम्॥ इति।

मत्स्यपुराणे—

तस्मात् कृतोपवासेन स्नानमभ्यङ्गपूर्व्वकम्।
वर्ज्जनीयं प्रयत्नेन रूपघ्नं तत्परं स्मृतम्॥

वृद्धशातातपः—

उपवासं द्विजः कृत्वा ततो ब्राह्मणभोजनम्।
कुर्य्यात्तेनास्य सगुण उपवासो हि जायते॥

भोगविशेषान् प्रतिप्रसौति शातातपः—

गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम्।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम्॥

गन्धः सुगन्धिद्रव्यमनुलेपनं समालभनमेतानि न दुष्यन्त्युपवासे दोषान् न यान्तीत्यर्थः। अयञ्च प्रतिप्रसवो निषिद्धाञ्जनादिस्त्रीकर्त्तृकोपवासातिरिक्तोपवासे।

दानसागरे तु—

उपवासेनेति तृतीयान्तमुररीकृत्य दुष्यन्ति दोषतां यान्तीत्यर्थो व्रतसागरीयमुखबन्धस्थस्तोभश्चैचर्य्यायामञ्जनदन्तधावनादिनिषेधादित्युक्तं, तन्न।

व्रतचर्य्याविशेषनिष्ठनिषेधेऽत्र प्रतिप्रसवबाधात् उपवासेनेति दुष्यन्ति सर्व्वभोगनिषेधवदित्युपवासे विशेषनिषेधे वैयर्थ्याच्च।

देवलः—

उपवासो विनश्येत दिवास्वप्नाच्चमैथुनैः।
अत्यये जलपानेन नोपवासः प्रणश्यति॥

अत्यये सम्भाव्यमाने।

---

## अथ नक्तपरिभाषा।

तत्र भविष्ये—

उपवासात् परं भैक्ष्यं भैक्ष्यात् परमयाचितम्।
अयाचितात् परं नक्तं तस्मान्नक्तेन वर्त्तयेत्॥

नक्तस्तुतिः।

नक्षत्रदर्शनान्नक्तं केचिदिच्छन्ति मानवाः।
मुहूर्त्तोनं दिनं केचित् प्रवदन्ति मनीषिणः॥
नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप।

तथा—

हविष्यभोजनं स्नानं सत्यमाहारलाघवम्।
अग्निकार्य्यमधःशय्यां नक्तभोजी षडाचरेत्॥

उपवासादित्यादौ वाक्ये पूर्ववाक्ये व्यर्थत्वस्यार्थत्वा[1]दुपवासात् परं भैक्ष्यमित्याद्यपि विधिगर्भमेव। तथा—उपवासात् परं भैक्ष्यमुपवासासामर्थ्ये सत्यल्पायासेन तत्फलजनकमित्यर्थः।

भैक्ष्यात् परमयाचितं ततो बलवद्दुःखसाध्यं अयाचितात् परं नक्तमित्यपि तथा। तथा उपवासासामर्थ्ये ततोऽल्पदुःखसाध्यं नक्तं कुर्य्यात्। तदसामर्थ्यपक्षे अल्पदुःखमयाचितं तदसामर्थ्ये ततोऽल्पदुःखं भैक्ष्यम्।

अतएव—

एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन भैक्ष्येन नैवाद्वादशिको भवेत्॥

इति वाक्यम्।

तथाचाशक्तकर्त्तृणामुपवासासामर्थ्ये नक्तं तदशक्तावयाचितं तदशक्तौ भैक्ष्यमिति परिभाषा सङ्गच्छते इत्येके।

पारिजातस्तु—

नक्तमात्रविधिरेवायं उपवासात् परं भैक्ष्यमित्यादिखण्डत्रयमनुवादमात्रमित्याह।

इदन्तु युक्तं भोजभूपाललिखितनक्तवाक्यसन्दर्भान्तर्गतत्वेन नक्तविधायकत्वेऽस्य स्थितेऽसङ्गतमपीदं नक्ते प्रवृत्तिमतिशयेनाधातुमुक्तम्।

(१) D—अन्याय्यत्वात्।

उपवासापेक्ष-भद्रभैक्ष्य, तदपेक्षभद्रायाचित, तदपेक्षभद्रनक्त-मिति। अतएवैतत्तात्पर्य्यविशुद्धया आप्तोपदेशतापि सङ्गता वैषम्याभावात्।

एकभक्तेनेत्यादि नैवाद्वादशीको भवेदित्यन्तवाक्यं तद्वादशी-व्रतावश्यकत्वबोधनपरं समूलकञ्चेति[1]।

---

## अथ होमपरिभाषा।

तत्र छन्दोगपरिशिष्टं कात्यायनः—

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः॥

मन्त्रस्यानादेशे प्रजापतिदेवताको महाव्याहृतिमन्त्रः, देवताया अनादेशे प्रजापतिर्देवता इत्येकस्य प्रजापतिरित्यस्यार्थः। एतदर्थ-स्वरसस्य कल्पतरुपारिजातयोर्नेतव्यः।

पाण्याहुतिर्द्वादशपर्व्वपूरिका
रसादिना चेत् स्रुवमात्रपूरिका।
दैवेन तीर्थेन च हूयते हविः
स्वङ्गारिणि स्वर्च्चिषि तच्च पावके॥

आदित्यपुराणे—

क्षुत्तृट्क्रोधत्वरायुक्तो हीनमन्त्रैर्जुहोति यः।
अप्रवृद्धे सधूमे वा सोऽन्धः स्यादन्यजन्मनि॥

---

(१) D—असूलकञ्च।

क्षुत्तृट्क्रोधत्वरायुक्त इति बुभुक्षा-पिपासा-क्रोधनिमित्तत्वरा-युक्तः । एतच्च दृष्टप्रयोजननिमित्तत्वरो'पलक्षकं तेन होमिना त्वरा न कर्त्तव्या जुहोतीत्युपलक्षणं तेन [2]जपादिष्वप्यदृष्टप्रयोजनेषु त्वरा न कार्य्येति बोद्धव्यम् ।

रूक्षे रुक्षे सस्फुलिङ्गे वामावर्त्ते भयानके ।
आर्द्रकाष्ठे (स्व)सुसम्पूर्णे फुत्कारवति पावके ॥
कृष्णार्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम् ।
आहुतीर्जुहुयाद्यस्तु तस्य नाशो भवेद् ध्रुवम् ॥

छन्दोगपरिशिष्टे कात्यायनः—

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च दरिद्रश्चैव जायते ॥
तस्मात् समिद्धे होतव्यं नासमिद्धे कदाचन ।
आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीं तथा ॥
जुह्वतश्च गते[3] चैव पाणिसूर्पास्य दारुभिः ।
न कुर्य्यादग्निधमनं कुर्वीत व्यजनादिना ॥

तथा—

नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतमा क्वचित् ।
न विमुक्तत्वचा चैव न सकीटा न पाटिता ॥

---

(१) A C—निमित्ततया ।
(२) A D—प्रयाजादिषु ।
(३) C D—हुते ।

प्रादेशान्नाधिका न्यूना न तथा स्याद्विशाखिका ।
विशाखिका विविधशाखायुक्ता ।
न सपर्णा न निर्वीर्य्या होमेषु च विजानता ॥

मरीचिः—

प्रागग्राः समिधो देयास्ताश्च काम्येषु पाटिताः ।
शान्त्यर्थेषु सशल्काद्रा विपरीता जिघांसतः ॥
विशीर्णा विदला ह्रस्वा वक्राः सशुषिराः कृताः ।
दीर्घा स्थूला[२] घुणैर्जुष्टा कर्म्मसिद्धिविनाशिकाः ॥

सशल्काः सत्वचः । समिध इत्यनुवृत्तौ ब्रह्मपुराणे—

पलाशाश्वत्थन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
अश्वत्थोडुम्बरौ बिल्वश्चन्दनः सरलस्तथा ॥

अश्वत्थन्यग्रोधः अश्वत्थे संपृक्तो वटः, अश्वत्थस्य पुनरुपादाना-दिति सागरः ।

पारिजाते तु पुनरश्वत्थोपादानं यज्ञोपयुक्तेध्मादावपि सम्बन्धार्थ-मित्युक्तं विकङ्कतो रुषकटायीति प्रसिद्धा ।

शालश्च देवदारुश्च खदिरश्चेति यज्ञियाः ।

हारीतः—

नाशुचिक्लिन्नपूतिभिर्दारुभिरग्निमिन्धीत ।

आपस्तम्बः—

नाप्रोक्षितमिन्धनमग्नावादध्यात् ।

(२) D—स्थूनाः ।

विष्णुधर्म्मोत्तरे—

दूर्व्वाहोमः परः प्रोक्तस्तेन स्वर्गं महीयते ।
तस्माद्दशगुणं पुण्यमिधाभिः प्राप्नुयात् कृते ॥
तस्माद्दशगुणं शस्यैर्व्रीहिभिर्द्विगुणं तथा ।
तावदेव तथा पुण्यं होमे सिद्धार्थकैः स्मृतम् ॥
यवैस्तद्गुणं तस्मात् तिलैर्दशगुणं स्मृतम् ।
तावदेव फलैर्ज्ञेयं विल्वैर्दशगुणं ततः ॥
पद्मैश्च तावदेवोक्तं दध्ना क्षीरेण च द्विजाः ।
परमान्नेन धर्म्मज्ञा घृतेनाष्टगुणं ततः ॥

एवं छन्दोगपरिशिष्टकृता अत्यन्तप्रचुरफलत्वादनादिष्टहविर्विशेषे होमे (१)हव्यशब्दमुपन्यस्तम् । तस्मादनादिष्टद्रव्यविशेषेषु दूर्व्वादीनामन्यतमस्य हविष्ट्वं बोद्धव्यम् ।

मन्त्रेणोङ्कारपूतेन स्वाहान्तेन विचक्षणः ।
स्वाहावसाने जुहुयात् ध्यायन् वै मन्त्रदेवताम् ॥

---

## अथ जपपरिभाषा ।

श्रीनरसिंहपुराणे—

त्रिविधो जपयज्ञः स्यात्तस्य भेदान्निबोधत ।
वाचिकश्च उपांशुश्च मानसश्च त्रिधा मतः ।
त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः ॥

---

(१) D—आज्य— ।

यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः।
मन्त्रमुच्चारयेद्व्यक्तं जपयज्ञः स वाचिकः॥
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत्।
किञ्चित् शब्दं स्वयं विद्यात् उपांशुः स जपः स्मृतः॥
धिया यदक्षरश्रेण्या वर्णात् वर्णं पदात् पदम्।
शब्दानुचिन्तनाभ्यासः स उक्तो मानसो जपः॥

योगियाज्ञवल्क्यः—

उपांशुजपयुक्तस्य शंस्यात् शतगुणो भवेत्।
साहस्रो मानसः प्रोक्तो यस्माद्ध्यानसमो हि सः॥

शंस्यादुच्चैः पठनीयात् शाब्दिकादिति यावत्। जपः शतगुणो-भवेत् इत्यन्वयः।

न चंक्रमन्न च हसन्न पार्श्वानवलोकयन्।
नाश्रिताश्रितो न जल्पंश्च नाप्रावृत्तशिरस्तथा॥
न पदा पादमाक्रम्य न चैव तु तथाकरौ।
न चासमाहितमना न संश्रावयन् जपेत्॥
प्राक्तनेषु कुशेष्वेवमासीनश्चासने शुभे।

प्राक्तनेषु आसनोर्द्ध्वं प्रागग्रारोपितेषु—

नात्युच्छ्रिते नातिनीचे दर्भपाणिः स्वयं यतः।
स्फटिकेन्द्राक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः।
अक्षमाला तु कर्त्तव्या उत्तमा चोत्तरोत्तरा॥
कोट्यधिका भवेद्वृद्धिरक्षमाला विशेषतः।
जपस्य क्रियमाणस्य तस्माच्छ्रेष्टः परः परः॥

अभावे त्वक्षमालायाः कुशग्रन्थ्याऽथ पाणिना ।
जप एव हि कर्त्तव्य एकाग्रमनसैव हि ॥

कोट्यधिका भवेद्वृद्धिरिति स्फाटिकमालात इन्द्राक्षमालाजपे कोटिगुणमतिरिक्तं फलम् ।

एवमुत्तरायाः पूर्व्वपूर्व्वापेक्षया कोटिगुणः फलोत्कर्षः ।

कूर्म्मपुराणे—

जपकाले न भाषेत नान्यानि प्रेक्षयेद्बुधः ।
न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रचालयेत् ॥
गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं भयात् ।
एकान्ते च शुभे देशे तस्माज्जप्यं समाचरेत् ॥

जप्यं जपम् ।

अङ्गिराः—

विना दर्भैस्तु यत् स्नानं यच्च दानं विनोदकम् ।
असंख्यातन्तु यज्जप्तं सर्व्वं तन्निष्फलं भवेत् ॥

असंख्यातं अज्ञातसंख्यं तथा च यज्जप्यं तन्निर्ज्ञातसंख्यं कर्त्तव्यम् ।

तेन अत्युच्छ्रितानतिनीचप्रागग्रकुशास्तीर्णशोभनासनोपविष्टेन दर्भपाणिना शोभनचित्तेन उत्तरोत्तरात्यन्तप्रशस्तस्फटिकेन्द्राक्ष-रुद्राक्षपुत्रञ्जीवाक्षमालावता किमप्यनवलोकयता शिरोग्रीव-मकम्पयता सम्वृतदशनेन विविक्तशुभे देशे जपः संख्याज्ञानपूर्व्वक एव कर्त्तव्य इत्युक्तम् ।

तथाच शैवपुराणे—

अङ्गुल्या जपसंख्यानमेकमेकमुदाहृतम् ।
रेखयाऽष्टगुणं विद्यात् पुत्रदीपैर्दशाधिकम् ॥

पुत्रदीपैः पुत्रञ्जीवैः ।

शतं स्यात् शङ्खमालाभिः प्रवालैस्तु सहस्रकम् ।
स्फटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥
पद्माक्षैर्दशलक्षन्तु सौवर्णैः कोटिरुच्यते ।
कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं भवेत् ॥

कुशग्रन्थ्या फलोत्कर्षाभिधानं जपविशेषविषयम् ।

---

## अथ द्रव्यगणपरिभाषा ।

तत्र छन्दोगपरिशिष्टे कात्यायनः—

हरिता यज्ञिया द(र्भाः)र्भाः पीतकाः पाकयज्ञियाः ।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः ॥
ह्रस्वाः प्रचरणीयाः स्युः कुशा दीर्घाश्च बर्हिषः ।
दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्म्मणि ॥

कल्माषाः कर्वुराः ह्रस्वाः प्रकरणोक्तारत्निप्रमाणन्यून-परिमाणा गोकर्णप्रमाणा वाक्यान्तरस्वरसात् ।

प्रचरणमनुष्ठानं तत्साधनीभूताः प्रचरणीयाः, दीर्घा अरत्न्य-धिकप्रमाणाः । दर्भाः पवित्रमित्यादिवाक्यमनूद्य पारिजाते कल्प-

तरोरनुसारात् लिखितम् । यतो यज्ञादौ हरिताविशेषविधिरतः सन्ध्यादिकर्म्मस्वनुष्ठानमात्रविहितकृशदर्भमात्रं शुचि न तु पवित्र-लक्षणमेतत् अत [१]इत्यनन्वयाद्वक्ष्यमाणलक्षणविरोधाच्च ।

तथाहि—

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥
एतदेव हि पिञ्जल्या लक्षणं समुदाहृतम् ।
आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु ॥
एतत्प्रमाणामेवैके कौशीमेवाग्रमञ्जरीम् ।
शुष्कां वा शीर्णकुसुमां पिञ्जलीं परिचक्षते ॥ इति ।

तदियं कल्पतरुपारिजातयोर्व्यवस्था ।

श्रीदत्तोपाध्यायैस्तु—सन्ध्यादिकर्म्मणि कुशाः पवित्रमित्यनेन कुशत्रयस्यापि पवित्रत्वेन प्रतिपादनादनन्तर्गर्भिणमित्यादिना सर्व्व-कर्म्मणि कौशद्विदलस्याप्युपात्तत्वात् सन्ध्यादिकर्म्मणि कुशत्रयं कौशं द्विदलं पवित्रञ्च व्यवस्थापितं लिखितञ्च सन्ध्याप्रयोगे । एतच्च कल्पतरुपारिजातविरोधादत इत्यसङ्गतेश्च नादेयम् ।

न चात्रापीतिपदानुपपत्तिरित्यत इत्यन्वयस्य विवक्षितत्वात् ।

गृह्यपरिशिष्टम्—

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥

---

(१) D—इत्यन्वयात् ।

हविरोदनादिव्यतिरिक्तमाचारात्, अयातयामान्यपरिभुक्तानि कृतकर्म्माण्यपि कर्म्मान्तरार्हाणीति तात्पर्य्यम्।

मरीचिः—

मासे नभस्यमावस्या तस्यां दर्भोच्चयो मतः।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः॥
ये च पिण्डे स्तृता[1] दर्भाः यैः कृतं पितृतर्पणम्।
अमेध्यलिप्ता ये तेषां परित्यागो विधीयते॥

लघुहारीतः—

पथि दर्भाचितौ दर्भा ये दर्भा यज्ञभूमिषु।
स्तरणासनपिण्डेषु षट् कुशान् परिवर्ज्जयेत्॥
पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम्।
मूत्रोच्छिष्टैः कृता ये च तेषां त्यागो विधीयते॥

केचित्तु—

उच्छिष्टीकृतमात्र एव निषेधमाहुः।
नीवीमध्ये तु ये दर्भा ब्रह्मसूत्रे च ये कृताः।
पवित्रांस्तान् विजानीयाद् यथा कायास्तथा कुशाः॥
आचम्य प्रयतो नित्यं पवित्रेण द्विजोत्तमः।
नोच्छिष्टस्तु भवेत्तत्र भुक्तशेषन्तु वर्ज्जयेत्॥

---

(१) D—स्थिताः।

भुक्तशेषं यस्मिन् कुशे परिधृते भुक्तं तदित्यर्थः। जपहोम इत्यादौ पूर्व्वलिखितलघुहारीतवाक्ये अशून्यमित्यादिना सुवर्णादीनां विशिष्टधारणविधानादर्थात् सुवर्णादिसमुच्चयः। तत्र च दक्षिणकरानामिकायां सुवर्णधारणस्य—

अनामिकाङ्गुलिकायां धारयेद्दक्षिणे करे।

इति हेमप्रकरणस्थदेवीपुराणसिद्धत्वात्तत्समभिव्याहारात् रजतादिधारणमपि तत्रैव।

तर्ज्जन्यां रजतं धार्य्यमितिवाक्यमनादेयमनाकरत्वात्॥

---

## अथ कनकपरिभाषा।

तत्र विष्णुधर्म्मोत्तरे—

सकृत् कृष्णलदानेन स्वर्गे नित्यं सुखी भवेत्।

तथाच नन्दिपुराणे—

प्रमादतस्तु तन्नष्टं तावन्मात्रं नियोजयेत्।
अन्यथा स्तेययुक्तःस्याद्देवमदत्ते विनाशिनि॥

ब्राह्मणायोत्सृष्टं ब्राह्मणायाप्रतिपादितमेव चेदपगतं तदा तावन्मात्रं तावदेव पुनर्नियोजयेत् प्रतिपादयेदिति सागरः, एवमदत्तइत्यत्राप्यप्रतिपादित इति नेयम्॥

---

## अथौषधिगणः।

विष्णुपुराणे—

व्रीहयःसयवा माषा गोधूमा अणवस्तिलाः।
प्रियङ्गुसप्तमा ह्येते अष्टमास्तु कुलत्थकाः॥
श्यामाकास्त्वथनीवारा जर्त्तिना:(लाः) सगवेधूकाः।
तथा वेणुयवाः प्रोक्तास्तथा मर्कटका मुने॥
ग्राम्यारण्याः स्मृता ह्येता ओषध्यस्तु चतुर्दश।
जर्त्ति(लाः)नाः स्वयंजातास्तिलाः वेणुयवाः वंशबीजानि॥

——

## अष्टादश धान्यानि।

वायुपुराणे—

व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः।
प्रियङ्गवो ह्युदाराश्च कोरदूषाः सचीनकाः[1]॥
माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः।
आढ़क्यश्चैव चणका रङ्काः सप्तदश स्मृताः॥

व्रीहिः षष्टिका प्रियङ्गुः कामली कङ्गलि इति प्रसिद्धा, उदारो देवधान्यं, कोरदूषः कोद्रवः, सतीनकः कलायः निःपावः श्वेतसिम्यः, आढ़की तुवरी राहनि लिति प्रसिद्धा, एवं मुख्य-धान्येन सममष्टादश धान्यानि भवन्ति। ०।

---

(१) A—सतीनकाः।

## अथ सप्तौषधिगणः ।

तत्र छन्दोगपरिशिष्टे कात्यायनः—

व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः ।
यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः ॥

---

## अथ सप्तधान्यानि ।

यव गोधूम धान्यानि तिलाः कङ्गुस्तथैव च ।
श्यामाकं देवधान्यञ्च सप्तधान्यमुदाहृतम् ॥
अत्र देवधान्यस्थाने चीनकं केचित् पठन्ति ।

---

## अथ सर्व्वौषधिगणः ।

मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।
शठी चम्पक मुस्तञ्च सर्व्वौषधिगणः स्मृतः ॥
मुरा भोटखड्व इति प्रसिद्धा मांसी जटामांसी शैलेयं
सन इति प्रसिद्धं रजनीद्वयं हरिद्रा दारुहरिद्रा ।

---

## अथ सर्व्वगन्धः ।

गन्धशास्त्रे—

कस्तूरिकाया द्वौ भागौ चत्वारः कुङ्कुमस्य च।
षोड़शः चन्दनस्यैकः कर्पूरस्य चतुष्टयम् ॥
सर्व्वगन्ध इति प्रोक्तं समस्तसुरदुर्लभम् ।

कल्पतरुलिखितसर्व्वगन्धस्तु—

कुङ्कुमागुरुकर्पूर कस्तुरी जातीफलानि ।

---

## अथ सर्व्वरत्नगणो रत्नाचलोक्तः ।

सच—मुक्ता हीरक गोमेदेन्द्रनील पुष्पराग
वैदूर्य्य विद्रुम मरकत पद्मरागाख्यः ।

---

## अथ पञ्चरत्नानि ।

तत्र कालिकापुराणे—

कनकं कुलिशं नीलं पद्मरागश्च मौक्तिकम् ।
एतानि पञ्चरत्नानि ।
कनक-रजत-मुक्ता-राजपट्ट-प्रवाल रूपाणि
पञ्चरत्नानीति गौड़ाः । कुलिशं हीरकम् ।

---

## अथ सर्व्वरसाः।

रसा लवणादयः "रसाश्च लवणादयः" इति विश्वचक्र-महादाने श्रवणात्।

ते च लवण तिक्त मधुर कटु कषायाम्लरूपाः॥

---

## अथ सर्व्वधातुगणाः।

मत्स्यपुराणे—

तालकञ्च शिलावज्रमञ्जनं श्याममेव च।

काची कासीस माक्षिकं गैरिकञ्चादितः क्रमात्॥

तालकं हरितालं शिलावज्रं मनःशिला वज्राभ्रकं तथा-युर्वेदप्रसिद्धम्।

तथाचायुर्वेदे—

वज्रं भेकवपुः[1] कृष्णमभ्रकं त्रिविधं स्मृतम्।

तत्र वज्राभ्रकस्य लक्षणम्—

अप्रस्तरं कठोराङ्गं तद्वकज्जलसन्निभम्।

यत्र शब्दायते वह्नौ नैवोच्छुनं भवेदपि।

सदाकरसमुद्भूतं वज्रेति प्रथितं घनम्॥ इति।

श्याममञ्जनं कृष्णरसाञ्जनं काची सौराष्ट्रमृत्तिका कासीसं स्वनामप्रसिद्धम्।

---

(१) D—भेदभवम्।

## अथ मुख्यद्रव्यालाभे तत्प्रतिनिधि परिभाषा ।

तत्र छन्दोगपरिशिष्टे कात्यायनः—

यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि च ।
यवानामिव गोधूमा व्रीहीनामिव शालयः ॥

पैठीनसिः—

काण्ड मूल पर्ण पुष्प फल प्ररोह रस गन्धादीनां सादृश्येन प्रतिनिधिं कुर्य्यात् ।

काण्डं नालः, प्ररोहोऽङ्कुरः ।

तथा—सर्व्वालाभे यवः प्रतिनिधिर्भवति ।

मैत्रावरुणीयपरिशिष्टम्—

आज्याभावे[1] तैलं प्रतिनिधिरलाभे दधि पयसी तदलाभे तण्डुलपिष्टानि वा अद्भिः संसृज्याज्यार्थे कुर्व्वन्ति ।

अत्र गव्यमाज्यं प्रथमं तदभावे माहिषं तदभावे आविकं तदभावे तैलं तैलेऽपि प्रथमं तिलजं[2] तदभावे कौसुम्भं तदभावे सार्षपं तदभावे दधि पयो वा तदभावे तण्डुलपिष्टानि यवपिष्टानि वा । अयञ्च गव्यादीनामन्वयः—

आज्यहोमेषु सर्व्वत्र गव्यमेव भवेद्धुतम् ।
तदभावे महिष्यास्तु आजमाविकमेव वा ॥

---

(१) D—आज्यार्थे पयो वा ।
(२) D—तदभावे अर्त्तिजम् ।

तदभावे तु तैलं स्यात् तदभावे तु जार्त्तिलम् ।
तदभावे च कौसुम्भं तदभावे तु सार्षपम् ॥

इति बौधायनवाक्याद्बोद्धव्यः । बौधायनोपरोधात्तु कल्पतरु-पारिजातावप्येवं नेतव्यौ ।

अन्येतु—

वाक्यमिदं लक्ष्मीधरादिभिरनङ्गीकारान्मन्दं मन्यमाना यथा-श्रुताभ्यामेव कल्पतरु-पारिजाताभ्यां व्यवस्थामाहुः ।

तथा दर्भास्तरणे काशः प्रतिनिधिः, तदभावे पर्व्ववतीभिः काण्डवतीभिरोषधीभिः स्तरणार्थान् कुर्व्वन्ति कटोशीर-चूष-नल वल्वज नीप धववर्ज्जम् ।

कटादयस्तृणविशेषाः, इध्मार्थे—पलाशाश्वत्थखादिररोहितको-दुम्बराणां तदभावे सर्व्ववनस्पतीनां चिल्वक-धव-नीप-निम्ब-राजवृक्ष-शाल्मली श्लेष्म-कपित्थ-कोविदार-विभीतक-श्लेष्मातक-सर्व्वकण्टकिवर्ज्जम् ।

चिल्वकं चिन्दुक इति प्रसिद्धः, नीपः कदम्बः, राजवृक्ष आरग्वध इति प्रसिद्धः । अयमेव कान्यकुब्जकिरिमालक इति ख्यातः । श्लेष्मः सज्जोन इति प्रसिद्धः श्लेष्मातको बहुमारः ।

तथा व्रीहि-यवौ पुरोडाशस्तदभावे तुषवतीभिस्तण्डुलवतीभि-रोषधिभिः पुरोडाश्यान् कुर्व्वन्ति । अनुचानक कुरक माष मसूर-कोद्रव कोरदूषकवर्ज्जम् ।

पुरोडाश्यान् पुरोडाशान् अनवो मलका इति प्रसिद्धाः

कुरकः पीतकुलत्थः कोरदूषको वनकोद्रवः, माषशब्दोऽत्र कृष्णेतरमाषपरः।

तथा—दक्षिणालाभे मूलानां भक्षणं[1] ददाति न त्वेवं यजेत अदक्षिणं न यजेत इत्यर्थः। एतच्च ब्राह्मणेऽप्युक्तम्।

तथाच ब्राह्मणम्—

श्लेष वा एतद्यज्ञस्य यद्दक्षिणा नवाऽश्लेषा रथो वहत्यथ श्लेषवता यं कामं कामयते तमभ्यश्नुते[2] एवमेतेन दक्षिणावता यं कामं कामयते तमभ्यश्नु(श्नु)ते शुभो वा एता यज्ञस्य दक्षिणां दक्षिणावता यजते शुभमेवास्मिन् दधाति।

अस्यार्थः—

श्लेष रथकीलः श्लेष रथ वै रथस्येव कीलकमेतत् यद्‌यज्ञस्य दक्षिणा नवेति न वै अश्लेषा कीलकशून्यो रथो वहति गच्छति यथा श्लेषवता रथेन रथी यं कामं कामयते तमभ्यश्नुते प्राप्नोति तत् साध्यमेव तेन दक्षिणावता यज्ञेन याज्ञिको यं कामं कामयते तमभ्यश्नुते शुभो वा शुभो वै यज्ञस्य दक्षिणा। शुभः शुभहेतुः, यद्दक्षिणावता यज्ञेन यजेत शुभमेवास्मिन् दधाति अस्मिन् दक्षिणावति यज्ञे शुभभाजनं भवति।

---

(१) D—भक्ष्याणां।

(२) D—अभ्यश्नुते।

तदयं तात्पर्य्यार्थः—

यथा कीलकप्रतिहतो रथो नोद्देश्यं प्राप्नोति एवमिष्टसिद्धि-रनिष्टनिवृत्तिर्वा न दक्षिणाशून्याद्यज्ञाद्भवतीति ।

---

## अथ स्नानपरिभाषा ।

तत्र छन्दोगपरिशिष्टं कात्यायनः—

स्नानक्रियायामुक्तायामनुक्ते स्नानकर्त्तरि ।
स्नानकृद्यजमानःस्याद्विदुषामेष निश्चयः ॥
अङ्गुष्ठाङ्गुलिमानन्तु यत्र यत्रोपदिश्यते ।
तत्र तत्र बृहत्पर्व्वग्रन्थिभिर्मीयिते[१] सदा ॥

शवलिङ्गमुपक्रम्य भविष्ये—

स्नाने शतपलं ज्ञेयमभ्यङ्गे पञ्चविंशतिः ।
पलानां द्वे सहस्रे तु महास्नाने प्रकीर्त्तितम् ॥

ब्रह्मपुराणे—

देवानां प्रतिमा यत्र घृताभ्यङ्गक्षमा भवेत् ।
पलानि तस्यै देयानि श्रद्धया पञ्चविंशतिः ॥
अष्टोत्तरं पलशतं स्नाने देयञ्च सर्व्वदा ।
द्वे सहस्रे पलानान्तु महास्नाने तु संख्यया ॥

स्नाने तु संख्यया घृतपदमुपलक्षणं तेन दुग्धादावपीयं संख्याऽनुगतेति पारिजातः ।

---

(१) D—मित्तुयात् ।

मनुः—

पञ्चकृष्णलको माषस्ते सुवर्णस्तु(न्तु) षोड़श।
पलं सुवर्णाश्चत्वार इति गोपथब्राह्मणे॥

माषकं पञ्चकृष्णलम्।

माषकाणि चतुःषष्टिः पलमेकं विधीयते।
द्वात्रिंशत्पलिकं प्रस्थमुक्तं स्वयमथर्व्वणा॥
आढ़कस्तु चतुःप्रस्थैश्चतुर्भिर्द्रोणमाढ़कैः।
द्रोणप्रमाणं विज्ञेयं ब्रह्मणा निर्म्मितं पुरा।
द्वादशाभ्यधिकैर्नित्यं यवानां पञ्चभिः शतैः॥

कुम्भपरिमाणमप्यनेनोक्तं—

घृतद्रोणेन पूरितं कुम्भमिति भारपरिमाणञ्चाभिधान-कोषादौ प्रसिद्धम्।

तथाहि—

तुला पलशतं ज्ञेयं भारः स्याद्विंशतिस्तुला। इति।

---

## अथ धूपादिपरिभाषा।

तत्र भविष्यपुराणे—

वृषणं सिह्लकं विप्र श्रीखण्डमगुरुन्तथा।
कर्पूरञ्च तथा मुस्तां शर्करां सत्वचं द्विज॥
इत्येष विजयो धूपः स्वयं देवेन निर्म्मितः।

तृषणं कस्तूरीत्वचागुरुत्वचौ।

अगुरुश्चन्दनं मुस्तं सिह्लकं तृषणं तथा।
समभागन्तु कर्त्तव्यं धूपश्चामृतसम्भवम्॥
अयमेव धूपः पञ्चरसनामकः।
श्रीखण्डं ग्रन्थिसंयुक्तमगुरुं सिह्लकं तथा।
मुस्तां तथेन्दुभूतिश्च शर्कराश्च दहेत्त्वाहम्।
इत्येषोऽनन्तधूपश्च कथितो देवसत्तम!।

ग्रन्थिः ग्रन्थिपर्णम्।

कृष्णागुरुं सिह्लकञ्च वालकं तृषणं तथा।
चन्दनं तगरं मुस्तां प्रबोधं शर्करान्वितम्॥
कर्पूरं चन्दनं पुष्पमगुरुं तगरं तथा।
रञ्जनं शर्करा कुष्ठं महाङ्गं सिह्लकं तथा।
महाङ्गोऽयं स्मृतो धूपः प्रियो देवस्य सर्व्वदा॥

महाङ्गं मांसी।

श्रीखण्डं तृषणं मुस्तामगुरुं सिह्लकं शशी।
शर्करा च तथा विप्र महाधूप इति स्मृतः॥
अगुरुं सिह्लकं धूपं प्राजापत्यमिदं स्मृतम्॥

तथा—

पलाशपुष्पाणि धवो यच्चचन्दनमेव च।
कर्पूरं चन्दनं कुष्ठमुशीरं सिह्लकं तथा।

सग्रन्थिदूषणं भीमं कङ्कुमं रञ्जनं तथा।
हरीतकी तथा भीम एष यक्षाङ्क उच्यते॥

यक्षचन्दनमुच्यते इत्यर्थः।

---

## अथ दीपपरिभाषा।

महाभारते—

हविषा प्रथमः कल्पो द्वितीयश्चौषधिरसैः।
वसामेदोऽस्थिनिर्यासैर्न कार्य्यं पुष्टिमिच्छता॥

इति महासन्धिविग्रहिक-ठक्कुर श्रीवीरेश्वरात्मज महासान्धि-
विग्रहिक-ठक्कुर श्रीचण्डेश्वरविरचिते कृत्यरत्नाकरे
परिभाषातरङ्गः॥

---

## अथ मासपरिस्थितिः ।

इह मासाश्चत्वारश्चान्द्र-सावन-सौर-नाचत्राः ।

तत्र ज्योतिःशास्त्रे—

दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसस्तु सावनो मासः ।
रविसंक्रान्तिसुचिह्नः सौरो निगद्यते सद्भिः ॥

तथा—

चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ स्थितिर्यावत् कालं मासः स भास्करः ॥

शुक्लादीति वचनाद्दर्शाद्दर्श इत्यत्राप्यवधितावगतदर्शमना-दायैव शुक्लप्रतिपदादिपक्षद्वयात्मकः प्रायशश्चान्द्रमासः, अयञ्च मीनादिस्थादित्यावच्छिन्नप्रथमप्रतिपत्कत्वेन चैत्रादिसंज्ञां लभते अस्य च धर्मकृत्यौत्सर्गिकत्वम् । कृष्णादिरपि मासश्चान्द्र एव ।

एका तिथिः कापि तदादिभूता
तिथिस्तृतीयेति तिथिप्रबन्धः ।
मासः स चान्द्रस्तिथिनाम्नि यस्मा-
च्चान्द्रीं कलां प्राप्य सदा प्रवृत्तः ॥

तदादिभूतेति अव्यवहितादिभूता सा तृतीयेति—

सावनस्तु विवक्षितः त्रिंशद्दिवसात्मकः ।

नाक्षत्रस्तु ज्योतिःशास्त्रसिद्ध इहानुपयोगान्न चिन्तितः ।

तेन चैत्रादिमासोल्लेखितव्रतादौ

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः ।
अग्नीषोमौ स्मृतौ मध्ये समासौ पितृषोमकौ ॥

इति हारीतवचनात् सर्व्वत्र विशेषावलम्बिनां शुक्लादिपक्षद्वयात्मकश्चान्द्रो मास इति लक्ष्मीधरादयः ।

शुक्लादिमेव मासं पुरस्कृत्य ब्रह्मपुराणम्—

चैत्रे मासि जगद्ब्रह्मा ससर्ज्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रन्तु तदा सूर्य्योदये सति ॥
प्रवर्त्तयामास तथा कालस्य गणनामपि ।
ग्रहान्नागानृतून् मासान् वत्सरान् वत्सराधिपान् ॥ इति ।

तथा ब्रह्मसिद्धान्ते—

चैत्रसितादेरुदयाद्भानोर्दिनमासयुगकल्पाः ।
सृष्ट्यादौ लङ्कायां समं प्रवृत्ता दिनेऽर्कस्य । इति ।

योगीश्वरोऽपि—

संवत्सरादयश्चैत्रसितादि द्वादशमासपरिमिता गणितगम्याः शुभाशुभफलसूचका गणितकुशलेभ्योऽनुसन्धेया इत्याह ॥

ब्रह्मपुराणे तु—

यत्र कृष्णपक्षकृत्यमभिधाय शुक्लपक्षकृत्याभिधानं तत्र कृष्णादिरेव मासः तथाविधवचनानुसारतः । कृष्णपक्षकृत्यपूर्व्वकशुक्लपक्षकृत्यप्रतिपादकवाक्यानि चात्रैवाग्रे दर्शयितव्यानि ।

कार्त्तिकं सकलं मासमित्यत्र तु मासः सौर एव ग्राह्य आचारात् । विवाहकरणादौ सौरमासग्रहः प्रमाणान्तरात् । एवमन्यत्रापि । क्वचिच्छुक्लादिचान्द्रमासबोधो विशेषबलादेव ।

तद्यथा देवीपुराणे—

आश्विने वाऽथ माघे वा चैत्रे वा श्रावणेऽपि वा ।

कृष्णादारभ्य कर्त्तव्यं व्रतं शुक्लविधिं हरेत् ॥ इत्यादौ ।

यथाच—

आषाढ़ादिचतुर्मासमित्यत्र कार्त्तिक्यां समापनमित्यादौ । शुक्लादिमासपरिग्रहोदाहरणन्तु कार्त्तिकादिद्वितीयायामिति नभस्यमासस्य तमिस्रपक्षे त्रयोदशीत्यादि । अयञ्चार्थो गुरुमताचार्य्यचन्द्रादीनामप्यनुमतः ॥

इति महासान्धिविग्रहिक ठक्कुर श्रीवीरेश्वरात्मज महासान्धिविग्रहिक ठक्कुर श्रीचण्डेश्वरविरचिते कृत्यरत्नाकरे मासपरिस्थितितरङ्गः ॥

# अथ चैत्रमासकृत्यम् ।

वामनपुराणे—

चैत्रे विचित्रवस्त्राणि शयनान्यासनानि च ।
विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणेष्वथ ॥

अथ विचित्रवस्त्राणां शयनानामासनानाञ्च निरपेक्षश्रुति-बलात् बहूनि दानानि एकैकस्या दानव्यक्तेर्बहुत्वावच्छिन्नब्राह्मणा-नन्वयेऽपि कन्यका भोजयेदितिवत् बहुवचनोपपत्तिः, न हि तत्राप्येका भोजनव्यक्तिरनेककन्यकान्वितेति ।

दानमधिकृत्य विष्णुधर्म्मोत्तरे—

चैत्रे विचित्रवस्त्राणि सौभाग्यं महदश्नुते ।

वस्त्राणि दत्त्वेत्यनुषज्यते ।

मत्स्यपुराणे—

वर्जयेच्चैत्रमासन्तु यस्तु गन्धानुलेपनम् ।
शुक्तिं गन्धभृतां दद्याद्विप्राय सितवाससी ॥
गन्धभृतां सुगन्धिद्रव्यभृताम् ।
वारुणं पदमाप्नोति दृढव्रतमिदं स्मृतम् ।

व्रतान्ते चैतद्देयं षष्ठीव्रतान्तरेषु तथैव दर्शनात् ।

महाभारते—

चैत्रं तु नियतं मासमेकभक्तेन यः क्षिपेत् ।
सुवर्ण-मणि-मुक्ताढ्ये कुले महति जायते ॥

स्कन्दपुराणे—

क्षपयेदेकभक्तेन चैत्रमासं नरोत्तम ।
धन-धान्यसमृद्धे तु कुले जायेत रूपवान् ॥

ग्रहणमधिकृत्य देवीपुराणे—चैत्रे[1] पुष्या सरस्वती ।

भविष्यपुराणे—

कृत्वाऽरुणं तथा चैत्रे गन्धमाल्योपशोभितम् ।
स्थाप्य पात्रे यथोक्ते तु भास्कराय निवेदयेत् ॥

यथोक्ते ताम्रमये ।

शरदिन्दुप्रतीकाशैर्विमानैःसर्व्वकामिकैः ।
वर्षायुतशतं साग्रं सूर्य्यलोके महीयते ॥
कर्म्मक्षयादिहागत्य पुत्र-पौत्रसमन्वितः ।
अभीष्टपतिमासाद्य लभेद्भोगान् सुदुर्लभान् ।

अत्र चैत्रमासं व्याप्यैकभक्तं उभयोः षष्ठ्यां सप्तम्याञ्च उपवासः ।

क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।

सूर्य्यपूजाऽग्नि हवनानि कर्त्तव्यानि तथा करवीरैः सूर्य्यपूजा साज्यगुग्गुलुदानं उभयपक्षस्नानं अत्रेति नियमाः कार्त्तिके तेषामभिधानात् ।

अत्राप्याकाङ्क्षया तदन्वयौचित्यात् तथाच कृत्यसमुच्चये अत्रैव—

---

(१) A—चात्र ।

इत्येवं सर्व्वयज्ञेषु विधिस्तुल्यः प्रकीर्त्तितः।
एकभक्तोपवासस्य फलञ्च सदृशं भवेत्।
विशेषमिह वक्ष्यामि मासि मासि व्रतं प्रति॥

मार्गशीर्षं इत्यादि श्रवणश्चात्र पिष्टमयनैवेद्यो मार्गादौ पिष्टत्वस्य निवेद्यत्वदर्शनात्।

मत्स्यपुराणे—

चैत्रादिचतुरो मासान् जलं दद्यादयाचितम्।
व्रतान्ते मणिकं दद्यात् नववस्त्रसमन्वितम्॥
तिलपात्रं हिरण्यञ्च ब्रह्मलोके महीयते।
कल्पान्ते भूपतिर्नूनमानन्दव्रतमुत्तमम्॥

क्वचित् जले दद्यादयाचितमितिपाठस्तस्यापि जलविषयमयाचितं दानं कुर्य्यादिति स एवार्थः। मणिको मृत्तिकाभाण्डविशेषः।

मत्स्यपुराणे—

वर्जयित्वा मधौ यस्तु दधिक्षीरघृतेक्षुकान्।
दद्याद्वस्त्राणि सूक्ष्माणि रसपात्रैर्युतानि च।
सम्पूज्य विप्रमिथुनं गौरी मे प्रीयतामिति।
एतद्गौरीव्रतं नाम भवानीलोकदायकम्॥

मधुश्चैत्रः, रसपात्राणि दधिक्षीरेक्षुपात्राणि मिथुनं जायापती।

भविष्यपुराणे—

मासि चैत्रे तु संप्राप्ते यः कुर्य्यान्नक्तभोजनम्।
शाल्यन्नं पयसा युक्तं भुञ्जानः संयतेन्द्रियः॥

भानवे पाटलां दद्याद्वैष्णवीं तरुणीं नृप ।
पुष्परागमयैर्यानैर्नानाहंसाभियायिभिः ।
गच्छेत् सूर्य्यपुरं रम्यं दुष्प्रापमकृतात्मभिः ॥

अत्र नक्तभोजनं मासस्यापि, उभयोः सप्तम्योरुपवासः, द्वितीय सप्तम्यां नियमवता भानवे विष्णुदैवतत्वेन पाटलायास्तरुण्या गोर्दानम् ।

भविष्यपुराण एव—

चैत्रे मासि तु संप्राप्ते यः कुर्य्यान्नक्तभोजनम् ।
पिष्टकं पयसा युक्तं भुञ्जानः शालिसम्भवम् ॥
पूजयेद्भर्गवीं[1] देवीं भक्त्या वै चन्दनस्य च ।
गन्धमाल्योपहारैश्च विंशार्द्धभुजसंस्थिताम् ॥

चन्दनस्य भगवतीं कृत्वेत्यर्थः ।

ज्वालामुखीस्तु वै नाम्ना कुङ्कुमागुरुचन्दनैः ।
धूपं सागुरुकर्पूरं भगवत्यै निवेदयेत् ॥
दद्यात् पांशुमुखान् भक्त्या नैवेद्यं विधिवन्नृप ।
स्नाने कुशोदकं धन्यं प्राशने[2] च नराधिप ॥
इत्थं सम्पूज्य देवेशीं कुमारीर्भोजयेत्ततः ।
ब्राह्मणांश्च तथा भक्त्या ततो भुञ्जीत वाग्यतः ॥
पद्मरागगणैर्युक्तं सौवर्णमणिवेदिकम् ।
विमानवरमारूढ़ो विष्णुलोके महीयते ॥

---

(१) D.—भगवतीम् । (२) B.—प्रयाने ।

अत्राष्टम्यां पक्षयोर्द्वयोरुपवासः नवम्यां घृतादिभिर्भगवत्याः स्नपनं नक्तभोजनं मासव्यापि प्रकरणात्।

मत्स्यपुराणे—

नारद उवाच—

भगवन् देवदेवेश ब्रह्मविष्णुविनायक।
श्रीमदारोग्य-रूपायुर्भोग-सौभाग्यसम्पदा।
संयुक्तस्तव विष्णोर्वा पुमान् भक्तः कथं भवेत्॥
नारी वा विधवा सर्व्वगुणसौभाग्यसंयुता।
क्रमान्मुक्तिपदं देव किञ्चिद्व्रतमिहोच्यताम्॥

ईश्वर उवाच—

सम्यक् पृष्टं त्वया ब्रह्मन् सर्व्वलोकहितावहम्।
श्रुतसम्पन्न देवर्षे व्रतमुत्तमभक्तिदम्॥
नक्षत्रपुरुषं नाम व्रतं नारायणात्मकम्।
पादादि कुर्य्याद्विधिवद्विष्णुनामानि कीर्त्तयन्॥
प्रतिमां वासुदेवस्य मूलर्क्षादिषु पूजयेत्।
चैत्रमासं समासाद्य कृत्वा ब्राह्मणवाचनम्।

मूले नमो विश्वधराय पादौ
गुल्फावनन्ताय च रोहिणीषु।
जङ्घेऽभिपूज्ये[1] वरदाय चैव
द्वे जानुनी चाश्विकुमारऋक्षे[2]॥

---

(१) D.—विपूज्ये। (२) D.—चार्क्षे।

पूर्व्वोत्तराषाढ़युगे तथोरू
नमः शिवायेत्यभिपूजनीयौ ।
पूर्व्वोत्तरा-फल्गुनिभद्वये च
मेढ्रं नमः पञ्चशराय पूज्यम् ॥
कटिं नमः शार्ङ्गधराय विष्णोः
सम्पूजयेन्नारद कृत्तिकासु ।
तथार्चयेद्भाद्रपदद्वये च
पार्श्वे नमः केशिनिसूदनाय ॥
कुक्षिद्वयं नारद रेवतीषु
दामोदरायेत्यभिपूजनीयम् ।
ज्येष्ठानुराधासु च माधवाय
नमस्तथोरःस्थलमेव पूज्यम् ॥
पृष्ठं धनिष्ठासु च पूजनीय-
मघौघविध्वंसकराय तद्वत् ।
श्रीशङ्ख-चक्रासि-गदाधराय
नमो विशाखासु भुजा हि पूज्याः ॥
हस्तेऽग्रहस्ता मधुसूदनाय
नमो हि पूज्या इह कैटभारेः ।
पुनर्व्वसावङ्गुलिपूर्व्वभागः
साम्नामधीशाय नमोऽभिपूज्याः ।
भुजङ्गनक्षत्रदिने नखानि
सम्पूजयेन्मत्स्यशरीरधातुः ।

कूर्म्मस्य पादौ शरणं व्रजामि
ज्येष्ठासु कण्ठे हरिरर्च्चनीयः ॥
श्रोत्रे वराहाय नमोऽभिपूज्ये
जनार्द्दनस्य श्रवणे च सम्यक् ।
पुष्ये मुखं दानवसूदनाय
नमो नृसिंहाय च पूजनीयम् ॥
नमो नमः कारण-वामनाय
स्वातीषु दन्ताग्रमथार्च्चनीयम् ।
आस्यं हरेर्भार्गवनन्दनाय
सम्पूजनीयं द्विज वारुणे तु ॥
नमोऽस्तु रामाय मघासु नासा
सम्पूजनीया रघुनन्दनस्य ।
मृगोत्तमाङ्गे नयनेऽभिपूज्ये
नमोऽस्तु ते राम विघूर्णिताक्ष ॥

मृगोत्तमाङ्गं मृगशिरानक्षत्रम् ।

बुद्धाय शान्ताय नमो ललाटं
चित्रासु संपूज्यतमं मुरारेः ।
शिरोऽभिपूज्यं भरणीषु विष्णो
र्नमोऽस्तु विश्वेश्वर कल्किरूप ॥
आर्द्रासु केशाः पुरुषोत्तमस्य
सम्पूजनीया हरये नमस्ते ।

उपोषितेनर्क्षदिने तु शक्त्या
संपूजनीया द्विजपुङ्गवाः स्युः ॥
पूर्णे व्रते सर्व्वगुणान्विताय
वाग्रूपशीलाय च सागमाय ।
हैमीं विशालायतबाहुदण्डां
मुक्ताफलेन्द्रोपलवज्रयुक्ताम् ॥
जलस्य पूर्णे कलसे निविष्टा
मर्च्चां हरेर्वैस्त्रगवा सहैव ।

मर्च्चां प्रतिमाम् ।

शय्यां तथोपस्करभाजनादि-
युक्तां प्रदद्याद्द्विजपुङ्गवाय ॥
यद्यत् प्रियं किञ्चिदिहास्ति देयं
तत्तद्द्विजायात्महिताय सर्व्वम् ।
मनोरथान्नः सफलीकुरुष्व
हिरण्यगर्भाऽच्युतरुद्ररूप ! ॥
शय्याञ्च दद्यान्मन्त्रेण ग्रन्थिभेदविवर्ज्जिताम् ।
सलक्ष्मीकं सभार्य्याय काञ्चनं पुरुषोत्तमम् ॥
यथा न विष्णुभक्तानां वृजिनं जायते क्वचित् ।
तथा सुरूपमारोग्यं वस्तं दद्याच्च केशवे ॥

---

(१) B.—विष्णौ ।

यथा लक्ष्म्या च शयनं तवाशून्यं जनार्द्दन।
शय्या ममाप्यशून्याऽस्तु कृष्ण जन्मनि जन्मनि॥
एवं निवेद्य तत्सर्व्वं वस्त्रमाल्यानुलेपनम्।
नक्षत्रपुरुषज्ञाय विप्रायाथ विसर्ज्जयेत्॥
भुञ्जीतातैललवणं सर्व्वेष्वप्युपोषितः।
भोजनन्तु यथाशक्त्या वित्तशाठ्यविवर्ज्जितः॥
इति नक्षत्रपुरुषमुपोष्य विधिवत् स्वयम्।
सर्व्वान् कामानवाप्नोति विष्णुलोके महीयते॥
ब्रह्महत्यादिकं किञ्चिद्यदत्रामुत्र वा कृतम्।
आत्मना वाथ पितृभिस्तत्सर्व्वं नाशमाप्नुयात्।

इति पठति शृणोति वातिभक्त्या
पुरुषवरो[1] व्रतमङ्गनाऽथ कुर्य्यात्।
कलिकलुषविदारणं मुरारेः
सकलविभूतिफलप्रदञ्च पुंसाम्॥

इति मत्स्यपुराणे नक्षत्रपुरुषव्रतं समाप्तम्॥

---

दमनाधिकारे देवीपुराणे—

ब्रह्मोवाच—

चैत्रादौ कारयेत् पूजां मम वत्स यथाविधि।
गन्धधूपार्च्चनैर्दीपैर्म्मालाभिर्दमनोद्भवैः॥

---

(१) D.—पुरुषवत्तृवा।

चैत्रादौ चैत्रशुक्लप्रतिपदि ।

सहोमं पूजयेद्देवं सर्व्वकामानवाप्नुयात् ।

देवं ब्रह्माणम् ।

हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।

अग्निकार्य्यमधःशय्यां नक्तभोजी षडाचरेत् ॥

इत्यत्र कल्पतरावग्निकार्य्यं महाव्याहृतिभिराज्यहोम इत्यभिधानात् ।

क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।

इत्यादिवाक्यस्याग्निहवनमपि तादृशमेवाभीष्टम्, अनादिष्ट मन्त्रद्रव्यकहोमत्वात् । युक्तं चैतत् "न व्याहृतिभ्यः[1] परं होमः" इति सामान्यत एव शङ्खवचनात् ।

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।

इति परिशिष्टवचनाच्च ।

अतः सहोममित्यत्रापि तथा ।

पारिजातोऽपि—

महामन्त्रैराज्यहोममग्निहवनं (वदन्)[2] तथैवाह ।

सागरे तु अनादिष्टमन्त्रहोमे प्रजापतये स्वाहेतिमन्त्रेण होम उक्तः । स च पारिजात-कल्पतरुविरोधाल्लघुः ।

मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ।

इति वाक्यस्यान्यथापि सार्थकत्वेन सागरमतार्थासमर्थकत्वात् ।

---

(१) D.—न व्याहृतिभ्यः । (२) D—अधिकः ।

सर्व्वतीर्थाभिषेकस्य फलं प्राप्नोति मानवः।
उमां शिवं हुताशञ्च द्वितीयायान्तु पूजयेत्॥
हविष्यमन्नं नैवेद्यं देयं गन्धार्च्चनं पुरा।
फलमाप्नोति विप्रेन्द्र उक्थे यत् संप्रभाषितम्॥

उक्थो ज्योतिष्टोमप्रभेदः तस्मिन् हुते यत् फलं तत् फलमाप्नोतीत्यर्थः।

तृतीयायां यजेद्देवीं शङ्करेण समन्विताम्।
कुङ्कुमागुरुकर्पूर-मणि-वस्त्रसमन्विताम्॥
सुगन्धधूपपुष्पैश्च दमनेन[१] सुमालिना।
आन्दोले दोलयेद्यत्र शिवोमा तुष्यते सदा॥

आन्दोला हिन्दोल इति प्रसिद्धः। शिवसमन्विता उमा शिवोमा।

रात्रौ जागरणं कार्य्यं प्रातर्देया च दक्षिणा।
हेमवस्त्रान्नपानानि ताम्बूलानि स्रजस्तथा॥
सौभाग्याय सदा स्त्रीभिः कार्य्यं पुत्रसुखेप्सुभिः।
गणेशे कारयेत् पूजां लड्डुकादिभिरादरात्॥
चतुर्थ्यां विघ्ननाशाय सर्व्वकामसमृद्धये।
पञ्चम्यां पूजयेन्नागाननन्ताद्यान् महोरगान्।
क्षीरं सर्पिश्च नैवेद्यं देयं सर्पविषापहम्॥

---

(१) B—मदनेन।

अनन्त वासुकि तक्षक कर्कोटक पद्म महापद्म शङ्ख कुलिका नागा अष्टौ वराहपुराणे कथिताः ।

षष्ठ्यां स्कन्दस्य कर्त्तव्या पूजा सर्व्वोपहारिकी ।
इहैव सुखसौभाग्यमन्ते स्कन्दपदं व्रजेत् ॥
[1]भास्करस्य तु सप्तम्यां पूजां दमनकादिभिः ।
कृत्वा प्राप्नोति भोगादीन् विगताधिर्म्महातपाः ।
अष्टम्यां मातराणान्तु पूजां सर्व्वान्नगन्धिकीम्[2] ।
कृत्वैव जायते वत्स सिद्धिरिष्टा विमानजा ।
नवम्यां पूजयेद्देवीं महामहिषमर्द्दिनीम् ।
कुङ्कुमागुरु कर्पूरै र्धूपान्न-ध्वज दर्पणैः ॥
दमनैर्म्मरुपत्रैश्च विजयाख्यापदं लभेत् ।
धर्म्मराजे दशम्यान्तु पूजा कार्य्या सुगन्धिना ।
विगताधि र्निरातङ्क इह चान्ते परं पदम् ।
एकादश्यां वृषे कार्य्या पूजा सर्व्वोपकारिकी[3] ।
धनवान् पुत्रवांश्चान्ते वृषलोके महीयते ।
वृषो धर्म्मस्तस्य पूजा कार्य्येत्यर्थः ।
द्वादश्यां पूजयेद् विष्णुं कर्पूरागुरुचन्दनैः ।
हविष्यान्नैर्म्महावाहो कर्त्ता विष्णुपदं लभेत् ॥

---

(१) B—पुस्तके पद्यमिदं पतितं ।
(२) D—सर्व्वाद्यु— ।
(३) C—चारिकी B—हारिणी ।

कामदेवस्त्रयोदश्यां पूजनीयो यथाविधि ।
रति-प्रीतिसमायुक्तो अशोकमणिभूषितः ।
पूजनीयो यथान्यायं दमनैर्मन्त्रसंहितैः ।
मन्त्रसंहितैः कामदेवप्रकाशक मन्त्रसहितैः ॥
चतुर्द्दश्यान्तु कर्पूर कुङ्कुमागुरु चन्दनैः ।
वस्त्रादिमणिपूजा च कर्त्तव्या महती शिवे ॥
वितानध्वजकुत्रञ्च देयं कार्य्यस्तु जागरः ।
महापुण्यमवाप्नोति अश्वमेधशताधिकम् ॥
पौर्णमास्यान्तथा कार्य्यं सर्व्वकामसमृद्धये ।
इन्द्रार्चनञ्च सन्ध्यायां कामिकं लभते फलम् ॥
एवं पञ्चदशाहन्तु यस्तु पूजां,प्रकुर्व्वति ।
सर्व्वयज्ञतपोदानफलानीह समाप्नुयात् ॥
विचित्रभोगो देवेषु[1] क्रीड़ते दिवि चेच्छया ।
पुण्यचयादिहायातः पृथिव्यां जायते नृपः ॥
विगताधिर्न सन्देह इत्याह भगवान् शिवः ।
देवीपूजा तु चैत्रेऽथ दमनकेन विधीयते ।

---

## [2]शिष्टपरिगृहीतवाक्यानि ।

तिथिदानमिदानीन्ते कथयामि युधिष्ठिर ! ।
सर्व्वपापप्रशमनं देवलोकविधायकम् ॥

---

(१) B—विचित्रदेवभोगेषु ।   (२) B—मत्स्यपुराण ।

मानसं वाचिकं वापि कर्म्मजं यदघं भवेत्।
तत् सर्व्वं संक्षयं[१] याति दानेनानेन पार्थिव॥
श्रावणे कार्त्तिके चैत्रे वैशाखे फाल्गुने तथा।
सितपक्षात् प्रभृत्येतत् दानं पुण्यप्रवर्द्धकम्॥
प्रतिपत्सु द्विजान् पूज्य कारयित्वा प्रजापतिम्।
सौवर्णमरविन्दञ्च कारयित्वाष्टपत्रकम्॥
कृत्वा चौडुम्बरे पात्रे सुगन्धिघृतपूरिते।
पुष्पैर्धूपैश्च संपूज्य विप्राय प्रतिपादयेत्।
अनेन विधिना दत्वा द्विजाय कनकालयम्[२]॥
इप्सितान् लभते कामान्[३] निष्कामो ब्रह्म शाश्वतम्।
वह्निं द्वितीयां सम्पूज्य भूर्भुवः स्वरिति क्रमात्।
तिलाज्येन शतं हुत्वा दत्वा पूर्णाहुतिं ततः॥
वैश्वानरन्तु सौवर्णं स्थापयेत्ताम्रभाजने।
गुडाज्यपूरिते राजन् तोयपूर्णघटोपरि॥
पूजयित्वा वस्त्रमाल्यैर्भक्ष्यभोज्यैरनेकशः।
ततस्तं ब्राह्मणे दद्यात् वह्निर्मे प्रियतामिति॥
यावज्जीवकृतात् पापात् मुच्यते नात्र संशयः।
मृतो वह्निपुरं याति प्राहेमं नारदो विधिम्॥

---

(१) D—क्षयं पापप्रनाशनं।
(२) B—कामलालयम्।
(३) B—भोगान्।

तृतीयायां महाराज प्रतिमां स्वर्णसम्भवाम्।
रक्तवस्त्रयुगच्छन्नां कुङ्कुमेन विभूषिताम्॥
स्थापयित्वा ताम्रपात्रे लवणोपरि विन्यसेत्।
जीरकं कटुकं खण्डं गुडं पार्श्वे प्रदापयेत्॥
पुष्पगन्धैः सनैवेद्यैः पूजयेत्तान् द्विजानपि।
दत्त्वा यत्फलमाप्नोति तत्सर्व्वं केन कथ्यते॥
प्रासादा यत्र सौवर्णा नद्यः कनकसैकताः।
तत्रासौ मोदते नित्यं दिवि देवैः सुपूजितः॥
स्वर्गादिहैत्य संसारे सुरूपः सुभगो भवेत्।
दाता भोक्ता बहुधनः पुत्र-पौत्रसमन्वितः॥
नारी वा तद्गुणैर्युक्ता भवतीति न संशयः।
चतुर्थ्यां वारणं हैमं पलादूर्द्ध्वं सुशोभनम्॥
कारयित्वा कुशयुतं तिलद्रोणोपरि न्यसेत्।
वस्त्रैः पुष्पैः पूजयित्वा नैवेद्यं विनिवेदयेत्॥
ततस्तु ब्राह्मणे दद्याद्गणेशः प्रीयतामिति।
कार्य्यारम्भेषु सर्व्वेषु तस्य विघ्नो न जायते॥
वारणाः सप्तजन्मानि भवन्ति मदविह्वलाः।
वारणेन्द्रसमारूढस्त्रिलोकविजयी भवेत्॥
लवणं कटुखण्डञ्च जीरकं मरीचानि च।
हिङ्गु शुण्ठिसमायुक्तं सर्व्वं रससमन्वितस्तथा॥
चतुर्थ्यामेकभक्ताशी सन्त्यक्त्वा कुटुम्बिनाम्।
गृहेषु सप्तसु सदा शिलायुक्तानि भारत॥



CCTGR Lib
A 384
Library Reg. No. 217/21

एतच्छिलाव्रतं नाम लक्ष्मीलोकप्रदायकम् ।
कर्त्तव्यमिह यत्नेन सुखपाटवकारकम् ॥
पञ्चम्यां पन्नगश्रेष्ठं स्वर्णनैकेन कारयेत् ।
क्षीराज्यपाचमध्यस्थं पूज्य विप्राय दापयेत् ॥
द्विजं सम्पूज्य वासोभिः प्रणिपत्य क्षमापयेत् ।
इह लोके परे चैव दानमेतत् सुखावहम् ॥
नागोपद्रवविद्रावि सर्व्वदुष्टनिवर्हणम् ।
प्रायश्चित्तं तथा प्रोक्तं नागदष्टस्य शम्भुना ॥
पन्नगश्रेष्ठं पञ्चफणम्[१] ।

तथा भविष्यपुराणे—

कृत्वा पञ्चफणं नागं गैरिकेण कृतं [२]नयेत् ॥

गैरिकेण सुवर्णेनेत्यर्थः ।

सर्व्वौषध्युदकस्नातः पञ्चम्यां पूज्य पन्नगीम्[३] ।
सप्तोपस्करदानञ्च यः करोति गृहाश्रमी ॥
गृहाट्टोदूखलं सूर्प-शिरः स्थाली च पञ्चमी ।
उदकुम्भश्च चुल्ली च एतेषामनुगश्च यत् ॥
एतानि गृहिणां गेहे प्रस्थाप्य पुरुषोत्तम ।
उपस्करकृते नारी न सीदति कदाचन ॥
गृहाट्टो यन्त्रकः शिर आढ़क इति ।
एतद्गृहव्रतं नाम सर्व्वसौख्यप्रदायकम् ॥
ऋषिणा ह्यनसूयायाः कथितं पाण्डुनन्दन ! ।

---

१ A B पञ्चकर्णम् । २ B यदि । ३ D पन्नगाम् ।

षष्ठ्यां शक्तिसमोपेतं कुमारं शिखिवाहनम् ।
कारयित्वा यथाशक्त्या हैमं मालाविभूषितम् ॥
तण्डुलं शैलशिखरे वासोभिः पूज्य शक्तितः ।
नमस्कृत्य ततो दद्याद्ब्राह्मणाय कुटुम्बिने ॥
इह भूतिं परां प्राप्य प्रेत्य स्वर्गे महीयते ।
शूद्रो ब्राह्मणतामेति द्विजो वर्षेण मोदते ॥
सप्तम्यामर्च्चितं[1] दद्याद्द्विजायाश्वमलङ्कृतम् ।
गन्धर्व्वाः पुष्टिमायान्ति दत्तेऽश्वे समलङ्कृते ॥

गन्धर्व्वा अश्वाः ।

[2]अष्टम्यां वृषभं श्वेतमव्यङ्गाङ्गं धुरन्धरम् ।
सितवस्त्रयुगच्छन्नं घण्टाभरणभूषितम् ॥
दद्यात् प्रणम्य विप्राय प्रीयतां मे वृषध्वजः ।
प्रदक्षिणं ततः कृत्वा आहारार्थमनुव्रजेत् ॥
दानेनानेन नृपते शिवलोको न दुर्लभः ।
वृषस्कन्धे प्रतिष्ठन्ति भुवनानि चतुर्द्दश ॥
तस्माद्वृषप्रदानेन दत्ता भवति भारती ।
नवम्यां काञ्चनं सिंहं कारयित्वा स्वशक्तितः ॥
मुक्ताफलाष्टकयुतं नीलवस्त्रावगुण्ठितम् ।
दद्याद्देवीमनुस्मृत्य दुष्टदैत्यनिवर्हणम् ॥
द्विजातिप्रवरायेत्थं सर्व्वान् कामान् समश्नुते ।
कान्तारवनदुर्गेषु चौरव्याघ्रा(ला)कुले पथि ॥

---

१ D चर्च्चितम् । २ B पुस्तके अष्टमीदाने वाक्यं पतितं ।

हिंसकाश्च न हिंसन्ति दानस्यास्य प्रभावतः।
मृतो देवपुरं याति पूज्यमानः सुरासुरैः।
[1]पुण्यक्षयादिहागत्य राजा भवति धार्म्मिकः॥
दशम्यां नृपशार्दूल दशाख्याः स्वर्णनिर्म्मिताः।

दशाख्याः सरभाः।

लवणे गुड़े जीरके च निष्पावेषु तिलेषु च॥
गव्यचये तण्डुलेचूर्णां (?) सर्व्वेषामुपरि स्थिताः।
सम्पूज्य पुष्पवस्त्राद्यैर्द्विजाय प्रतिपादयेत्॥
अनेन विधिना या तु नारी वा यदि वा नरः।
निर्व्वापयति राजेन्द्र तस्य पुण्यफलं शृणु॥
इह काम्यानवाप्याथ प्रेत्य स्वर्गं महीयते।
सफलास्तस्य सर्व्वाशा यत्किञ्चिन्मनसेच्छति॥
एकादश्यां गरुत्मन्तं कारयित्वा हिरण्मयम्।
यः शक्त्या ताम्रपात्रेण घृतस्योपरि पूजितम्॥
पञ्चाग्न्यभिरते विप्रे पुराणज्ञे विशेषतः।

पञ्चाग्नयो गार्हपत्य दक्षिणाग्न्याहवनीय सत्यावसथ्याः।

दत्वा किं बहुनोक्तेन स्वर्गलोके महीयते॥
गां वृषं महिषीं हेम सप्तधान्यं यवाधिकम्।
वड़वां गुड़जान् सर्व्वान् तथा बहुफलान् फलान्॥

बहुफलान् [2]बहिन्द्रियभोग्यानि फलानि।

पुष्पाणि च विचित्राणि गन्धांश्चोच्चावचान् बहून्॥

---

१ D कर्म्म—। २ D बहिरिन्द्रिय—।

यथावन्मेलयित्वा तु वस्त्रैराच्छादयेन्नरैः।
द्वादश्यां द्वादशैतानि ब्राह्मणेभ्यो निवेदयेत्॥
एवं कृते महाराज यत्फलं तन्निशामय।
इह कीर्त्तिं परां प्राप्य भुक्ता भोगान् यथेप्सितान्॥
ततो विष्णुपुरं प्राप्य सेव्यमानोऽप्सरोगणैः।
[1]कर्म्मक्षयादिहाभ्येत्य राजा भवति धार्म्मिकः॥
यज्ञयाजी दानपति र्जीवेच्च शरदां शतम्।
स्नापयेत् ब्राह्मणान् प्रातस्त्रयोदश्यां त्रयोदश॥
तानाच्छाद्य नवैर्वस्त्रैर्गन्धपुष्पैरथार्चयेत्।
भोजयेच्च सुमिष्टान्नं दक्षिणा विनिवेदयेत्॥
यथाशक्त्या हेमखण्डान् धर्म्मो मे प्रीयतामिति।
धर्म्मराजाय कालाय चित्रगुप्ताय दण्डिने।
मृत्यवे चयरूपाय घातकाय [2]यमाय च॥
प्रेतनाथाय रौद्राय तथा वैवस्वताय च॥
महिषस्थाय देवाय नामानीह त्रयोदश।
उच्चार्य्य श्रद्धया युक्तः प्रणिपत्य विसर्ज्जयेत्॥
यः करोति महाराज पूजामेनां मनोहराम्।
यमाय च सुखं मन्ये स्नात्वा व्याधिविवर्ज्जितः॥
[3]यममार्गगतः पश्चाद्दुःखं नाप्नोत्यसौ पुमान्।
न पश्यति प्रेतसुखं पितृलोकञ्च गच्छति॥
पुण्यक्षयादिहागत्य स सुखी नीरुजो भवेत्।

---

१ A. धर्म्म—। २ B C नमो नमः। ३ B चय—।

सहेम सुशुभं कुम्भं चतुर्द्दश्यां पयोहृतम् ॥
करकेणैकेन संयुक्तं हेम्नः सहस्रवेष्टितम् ।
घण्टाभरणशोभेन वृषभेण समन्वितम् ॥
यो दद्याच्छिवभक्ताय ब्राह्मणाय कुटुम्बिने ।
एतत्कृत्वा नरश्रेष्ठ शिवलोके महीयते ॥
तत्र स्थित्वा चिरं कालं क्रमादेत्य महीतले ।
अरोगे धनयुक्ते च कुले महति जायते ॥
सर्व्वकामसमृद्धात्मा यावज्जन्मशतत्रयम् ।
पौर्णमास्यां वृषोत्सर्गं कारयित्वा विधानतः ॥
चन्द्रं रजतनिष्पन्नं पलेनैकेन शोभनम् ।
पूजयेत् कुन्दकुसुमै र्नैवेद्यं विनिवेदयेत् ॥
दद्यात् विप्राय सत्कृत्य वासोऽलङ्कारभूषणैः ।
मन्त्रेणानेन राजेन्द्र निबोधाऽथ मयोदितम् ॥
चीरोदार्णवसम्भूतं त्रैलोक्याङ्गनदीपकम् ।
उमापतेः शिरोरत्नं शिवं यच्छ नमो नमः ॥
दानेनानेन नृपते भ्राजते चन्द्रवद्दिवि ।
अप्सरोभिः परिवृतो यावदाहूतसंप्लवम् ॥
दानान्यमूनि विधिवत् प्रतिपत्क्रमेण
यच्छन्ति ये द्विजवराय विशुद्धसत्वाः ।
ते ब्रह्मविष्णुभुवनेषु सुखं[1] विहृत्य
यान्त्यऽक्षतां सह शिवेन न संशयोऽत्र ॥

---

१ C स्वयं ।

ब्रह्मपुराणे।

चैत्रे मासि जगद्ब्रह्मा ससर्ज्ज प्रथमेऽहनि।
शुक्लपक्षे समग्रन्तु तदा सूर्य्योदये सति॥
ततः प्रभृति यो धर्म्मः पूर्व्वैः पूर्व्वतरैः स्मृतः।
अद्यापि गूढ़ः सुतरां कर्त्तव्योऽसौ प्रयत्नतः॥

गूढो गुप्तः।

तत्र कार्य्या महाशान्तिः सर्व्वकल्मषनाशिनी।
सर्व्वोत्पातप्रशमनी कलिदुःस्वप्ननाशनी॥
आयुःप्रदा पुष्टिकरी धनसौभाग्यवर्द्धिनी।
मङ्गल्या च पवित्रा च लोकद्वयसुखावहा॥
यस्यामादौ तु सम्पूज्यो ब्रह्मा कमलसम्भवः।
पाद्यार्घ्यधूपपुष्पैश्च वस्त्रालङ्कारभोजनैः[1]॥
होमैर्बल्युपहारैश्च तथा ब्राह्मणतर्पणैः।
तथा क्रमेण देवेभ्यः पूजा कार्य्या पृथक् पृथक्॥

देवेभ्यो वक्ष्यमाणेभ्यः कालादिभ्यः।

कृत्वोङ्कारं नमोऽन्तञ्च कुशोदकतिलाक्षतैः।
पुष्पधूपप्रदीपैश्च भाजनैश्च यथाक्रमम्।
मन्त्रं सम्पूजनार्थन्तु बह्वरूपं पठेत्ततः॥
ओँ नमोऽस्तु ब्रह्मणे तुभ्यं कालाय परमात्मने।
नमस्तेऽस्तु निमेषाय त्रुटये च नमो नमः॥
नराय च नमस्तुभ्यं नमस्तेऽस्तु क्षणाय च।

---

१ A भूषणैः।

नमो नमस्ते काष्ठायै कलायै चाथ सर्व्वदा ॥
नालिकायै सुपक्षायै[1] मुहूर्त्ताय नमो नमः ।
नमो निशाभ्यः पुण्याभ्यो दिवसेभ्यश्च नित्यशः ॥
पक्षाभ्यामथ मासेभ्य ऋतुभ्यः षड्भ्य एव च ।
अयनाभ्याञ्च पञ्चभ्यो वत्सरेभ्यश्च सर्व्वदा ॥
नमः कृतयुगादिभ्यो ग्रहेभ्यश्च नमो नमः ।
अष्टाविंशतिसंख्येभ्यो नक्षत्रेभ्यो नमो नमः ॥

अष्टाविंशति नक्षत्राणामभिजिता सह ।

राशिभ्यः करणेभ्यश्च व्यतीपातेभ्य एव च ॥
प्रतिवर्षाधिपेभ्यश्च विज्ञानेभ्यो नमः सदा ।
नमोऽस्तु कुलनागेभ्यः सानुयात्रेभ्य एव च ॥

सानुयात्रेभ्यः सानुचरेभ्यः ।

नमश्चतुर्द्दशभ्यस्तु मनुभ्यश्च पुनः पुनः ।
नमः पुरन्दरेभ्यश्च तत्संख्येभ्यो नमो नमः ॥

तत्संख्येभ्यश्चतुर्द्दशसंख्येभ्यः ।

पञ्चाशते नमो नित्यं दक्षकन्याभ्य एव च ।
नमो नित्यं[2] सुव्रतायै जयायै चाथ सर्व्वदा ॥
कृशाश्वाय नमस्तुभ्यं सर्व्वास्त्रजनकाय च ।
नमस्ते बहुपुत्राय पत्नीभिः सहिताय च ॥
नमो वृद्ध्यै[3] तथा ऋद्ध्यै निद्रायै धनदाय च ।
नलकूवरयक्षाय गुह्यकस्वामिने नमः ॥

---

१ B च सुलक्षायै । २ B दित्यै । ३ D ऋद्ध्यै ।

नमोऽस्तु शङ्खपद्माभ्यां निधिभ्यामथ सर्व्वदा ॥
भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः।
वेद वेदाङ्ग वेदान्त विद्यास्थानेभ्य एव च ॥
नाग-यक्ष-सुपर्णेभ्यो नमोऽस्तु गरुडाय च।
अरुणाय नमस्तुभ्यं सप्तद्वीपेभ्य एव च ॥
सप्तभ्यश्च समुद्रेभ्यः सागरेभ्यश्च सर्व्वदा।
उत्तरेभ्यः कुरुभ्यस्तु नमो हैरण्यकाय च ॥
भद्राश्व-केतुमालाभ्यां नम सर्व्वत्र सर्व्वदा।
[1]इलावृताय च नमो हरिवर्षाय चैव हि ॥
नमः किंपुरुषेभ्यश्च भारताय नमो नमः।
नमो भारतदेवेभ्यो नागेभ्यश्चैव सर्व्वदा ॥
पातालेभ्यश्च सप्तभ्यो नरकेभ्यो नमो नमः।
कालाग्निरुद्र-शेषाभ्यां हरये क्रोड़रूपिणे ॥
सप्तभ्यस्त्वथ लोकेभ्यो महाभूतेभ्य एव च।
तमसे बुद्धये चैव नमः प्रकृतये तथा ॥
पुरुषायाभिमानाय नमोऽस्त्वव्यक्तमूर्त्तये।
हिमवत्प्रमुखेभ्यश्च पर्व्वतेभ्यो नमः सदा ॥
पुराणेभ्यश्च गङ्गाभ्यः सप्तभ्यश्च नमो नमः।
नमोऽस्त्वग्रतनीभ्यश्च सप्तभ्यश्चाथ सर्व्वदा ॥
नमोऽस्तु पुष्करादिभ्यस्तीर्थेभ्यश्च पुनः पुनः।
निम्नगाभ्यो नमो नित्यं वितस्तादिभ्य एव च।

---

१ B इला—।

चतुर्द्दशभ्यो देवेभ्यो धारणेभ्यो नमो नमः ।
नमो धात्रे विधात्रे च छन्दोभ्यश्च नमो नमः ॥
सुरभ्यैरावणानाञ्च नमो भूयो नमो नमः ।
अप्सरोभ्यः सोमपेभ्यो देवेभ्यश्च नमो नमः ।
नमस्तथोच्चैःश्रवसे ध्रुवाय च नमो नमः ॥
नमोऽस्तु धन्वन्तरये शस्त्रास्त्राभ्यां नमः सदा ।
विनायक-कुमाराभ्यां विघ्नेभ्यश्च नमः सदा ॥
शिखाय च विशिखाय नैगमेयाय वै नमः ।
नमः स्कन्दग्रहेभ्यश्च स्कन्दमातृभ्य एव च ॥
धराय च गोपतये भस्मप्रहरणाय च ।
ऋषिभ्यो वालखिल्येभ्यः काश्यपाय नमः सदा ॥
अगस्त्याय नारदाय व्यासादिभ्यो नमो नमः ।
असोमपेभ्यश्च नमस्तुषितेभ्यो नमः सदा ॥
आदित्येभ्यो नमो नित्यं द्वादशभ्यस्तु सर्व्वदा ।
एकादशभ्यो रुद्रेभ्यः सगणेभ्यो नमो नमः ॥
दशभ्यो विश्वदेवेभ्यः पुण्येभ्यश्च नमः सदा ।
नमो वसुभ्यस्त्वष्टाभ्यो दिव्ययोगिभ्य एव च ॥
द्वादशभ्यो भृगुभ्यश्च नमः सर्व्वञ्च सर्व्वदा ।
दशभ्यस्त्वङ्गिरोभ्यश्च तपस्विभ्यो नमो नमः ॥
नमो नासत्यदस्राभ्यामश्विभ्यां नित्यमेव हि ।
साध्येभ्यो द्वादशभ्यश्च पुराणेभ्यो नमः सदा ॥
एकोनपञ्चाशद्भ्योऽथ मरुद्भ्यश्च नमो नमः ।

शिल्पाचार्य्याय देवाय नमस्ते विश्वकर्म्मणे ॥
अष्टाभ्यो लोकपालेभ्यः सायुधेभ्यश्च सर्व्वदा ।
आयुधेभ्यो वाहनेभ्यः पुराणेभ्यो नमः सदा ॥
आसनेभ्यो दुन्दुभिभ्यो देवीभ्यश्च नमो नमः ।
दैत्य-राक्षस-गन्धर्व्व-पिशाचेभ्यश्च नित्यशः ॥
पितृभ्यः सप्तभेदेभ्यः प्रेतेभ्यश्च नमो नमः ।
सुसूक्ष्मेभ्यश्च देवेभ्यो भागवतेभ्य एव च ॥
नमस्ते वर्णरूपाय विष्णवे परमात्मने ।
अथ किं बहुनोक्तेन मन्त्रेणानेन चार्चयेत् ॥
प्राङ्मुखोदङ्मुखो वापि देवानुद्दिश्य पूर्व्ववत् ।
अर्घ्यैः पुष्पैश्च धूपैश्च वस्त्रैर्माल्यैश्च हृष्टवान् ॥
धनधान्यानुविभवैर्दक्षिणाभिश्च सर्व्वदा ।
इतिहास-पुराणानां प्रवक्तृंश्च द्विजोत्तमान् ।
कालज्ञान् कालभेदज्ञान् भृत्यान् सम्बन्धिबान्धवान् ॥
अनेनैव तु मन्त्रेण स्वाहान्तेन पृथक् पृथक् ।
यविष्ठायाग्नये होमः कर्त्तव्यः सर्व्वतृप्तये ॥
वेदवच्चाङ्कतोर्द्दत्वा स्थाने प्राधानिके सति ।

वेदवच्चाङ्कतोरिति वेदेतिकर्त्तव्यतायुक्तस्थाने प्राधानिके प्रधानाङ्कतिस्थाने आज्यभागान्तइति यावत् ।

आत्मशोभा ततः कार्य्या मङ्गलालम्भनं तथा ।
भोजयित्वा द्विजान् सर्व्वान् मुनीन् सम्बन्धिबान्धवान् ॥

मुनयोऽत्र नियतात्मानः ।

विशेषेण तु भोक्तव्यं कार्य्यश्चापि महोत्सवः ।
नवसंवत्सरारम्भे सर्व्वसिद्धिप्रवर्त्तकः ॥

देवीपुराणे शक्र उवाच—

गौर्य्या विवाहो विधिना क्रियते केन मे वद ।
कस्मिन् काले दिने पक्षे प्रतिमालक्षणं तथा ॥

ब्रह्मोवाच—

शृणु शक्र प्रवक्ष्यामि यथापूर्व्वं मया श्रुतम् ।
कथितं देवदेवेन श्रीकण्ठेन महात्मना ॥
श्वेतचन्दने अर्के वा त्वशोके मधुके तथा ।
दरिद्राणां विधिरयमाढ्यानां शृणु साम्प्रतम् ॥
सौवर्णी राजती कार्य्या इन्द्रनीलमयी तथा ।
स्फाटिकी पद्मरागा वा यथा लक्षणभाविता ॥

श्वेतचन्दन इत्यादि दरिद्राणां विधिरयमित्यन्तस्य दरिद्रैरर्कादिप्रतिकृतिः प्रतिमा कार्य्येत्यर्थः । आढ्यानामित्यादेरिन्द्रनीलमयी वेत्यन्तस्य आढ्यैः सुवर्णादिप्रतिकृतिः प्रतिमा कार्य्येत्यर्थः ।

प्रतिमालक्षणं चाह—

सौवर्णी च उमा कार्य्या राजतः शङ्करस्तथा ।
चतुर्भुजस्तु देवेशो द्विभुजा च उमा भवेत् ॥
कमण्डलुः करे वामे अक्षसूत्रन्तु दक्षिणे ।
गौर्य्यास्तु रूपकं शक्र उर्द्धस्थं पद्मसंस्थितम् ॥

करे उमाकरे रूपकं प्रतिमा उर्द्धस्थं ऊर्द्धस्थितं ऊर्द्धजानुकमिति यावत् ।

चन्द्रार्द्धशेखरं देवं जटा-मुकुटधारिणम्।
नागयज्ञोपवीतञ्च वासुकिकृतकङ्कणम्॥
अभयं डमरुं शूलमचसूत्रञ्च दर्शयेत्।
एवन्तु प्रतिमां कृत्वा वृषभं पार्श्वसंस्थितम्॥
प्रतिमां कारयेच्छक्र यथा आगमभाषितम्।
गौर्य्या उपस्करान् वच्ये विवाहे च विशेषतः॥
वस्त्राणि सुमहार्हाणि केयूर-कटकानि च।
पर्य्यङ्कगेण्डुके द्वे च तूली श्वेताम्बरच्छदा॥
ध्वजानि दापयेद्दिचु तोरणानि विशेषतः।
कृचोपरि कृताटोपा वेदी स्तम्भविभूषिता॥

कचिच्चन्द्रोपरीति पाठः, तत्र चन्द्रस्तकौच इति प्रसिद्धः।

रक्ताम्बरसमायुक्तां हरिद्रां दापयेत्ततः।
विवाहविधिमाश्रित्य सर्व्वं कृत्यं यथोचितम्॥
चैत्रे मासि प्रकर्त्तव्यो विवाहः सुरपूजितः।
नान्यकाले प्रकर्त्तव्यः कृते दोषं समादिशेत्॥
तृतीया-विघ्नदिवसे तथा नागदिनेऽथवा।
विवाहः शक्र कर्त्तव्यो न नचत्रं निरूपयेत्॥

विघ्नदिवसस्तुर्थी नागदिनं पञ्चमी।

वृत्ते चैव विवाहे तु प्रतिमे तूलगेण्डुके।
वस्त्राणि होमद्रव्यञ्च तत् सर्व्वं स्थापके ददेत्॥

स्थापक आचार्य्यः।

तथा काञ्चनभूमौ च रत्नवस्त्रयुगानि च।

भोजयित्वा प्रदातव्यं स्थापको येन तुष्यति ॥

भोजयित्वा स्थापकमेव।

होमे च दक्षिणां दद्यात् ब्राह्मणाय युगां शुभाम्।
गौर्य्या विवाहे यत्किञ्चित् तत्सर्व्वं स्थापको लभेत् ॥
एवं कृत्वा विवाहन्तु शृणु यत् फलमाप्नुयात्।
अश्वमेधसहस्रस्य वाजपेयशतस्य च।
गवां कोटिप्रदानस्य यत्पुण्यं तदवाप्नुयात् ॥
अनेनैव नरो नारी कृतेन सुरपूजित!।
सौभाग्यं परमं लेभे विवाहेन न संशयः ॥
सुपुत्रा जीववत्सा च भर्त्तुस्वैव सदा प्रिया।
जायते नात्र सन्देहो गायत्री मे यथा प्रिया ॥
प्रतिमाभूमि[1]पर्य्यङ्कवस्त्राण्याभरणानि च।
एतानि यजमानस्तु स्थापकस्य प्रदापयेत् ॥
लोभात् स्नेहाद्भयादाथ यज्ञोपकरणादिकम्।
अन्यस्य ददतो मोहात् तत्पुण्यं स्थापके भवेत् ॥

लोभात् मोहात् भयात् स्नेहादन्यस्य ददत इत्यर्थः।

---

भविष्यपुराणे—

ईश्वर उवाच।

अतःपरं प्रवक्ष्यामि प्रतिमालक्षणं शुभम्।
श्वेतचन्दनकेऽर्कवा श्रीपर्णे च पियालके।

---

१ B—तूली—।

सिध्रकेऽशोकमधुके पुष्ये लोहमयेऽपि वा ॥

पुष्ये पुष्परागमणौ ।

वैदूर्य्ये कारयेद्देवीं महानीले च कारयेत् ।
विद्रुमे राजवर्त्ते च शुभेषु स्फटिकेषु च ।

महानील इन्द्रनीलः, राजवर्त्ती रावट इति प्रसिद्धः ।

यथावित्तानुसारेण श्लाघ्येन तु कारयेत् ॥
गौर्य्यास्तु प्रतिमां कुर्य्याच्छास्त्रदृष्टेन कर्म्मणा ।
एकपादः स्थितो भूमौ द्वितीयो जानुनि स्थितः ॥
दक्षिणे तु करे कुर्य्यादक्षसूत्रेण मालिकाम् ।
कुण्डिकां वामहस्तेन[1] यथावद्विधिना शुभाम् ॥
कर्णे तु दक्षिणे कुर्य्यात् कुण्डलन्तु सुशोभनम् ।

कुण्डिका कमण्डलुः ।

वामकर्णे तु कर्त्तव्यं तालीपत्रं सुशोभनम् ॥
तमालवसनञ्चैव मृगचर्म्म सुशोभनम् ।
योगपट्टञ्च कर्त्तव्यमुत्तरासङ्गिकं द्विजैः ।
वेणीबन्धसमायुक्तान् केशान् कुर्य्यात् विचक्षणः ॥
त्रिलोचनां तथा कुर्य्याद्द्विबाहुञ्च वराननाम् ।
तिलं कर्णललाटे वै कर्त्तव्यन्तु विजानता ॥
विजयाञ्च प्रतिष्ठाप्य देवीञ्च दिवसे शुभे ।
रोहिण्यामथवा पुष्ये धनिष्ठायां तथैव च ॥
यज्ञं कृत्वा तु पूर्व्वोक्तं प्रतिष्ठां कारयेद्बुधः ॥

---

१ C हस्ते तु ।

प्रतिष्ठायान्तु गौर्य्या वै विवाहं यदि कारयेत्।
घटोपरि तुमां स्कन्दं शङ्करं शूलपाणिनम्॥
पूर्व्वोक्तैर्दारुभिः कुर्य्यात्तथा वित्तानुसारतः।
त्र्यक्षं चतुर्भुजं देवं जटामुकुटधारिणम्॥
त्रिशूलहस्तखट्वाङ्गं चन्द्रार्द्धकृतशेखरम्।
गोवृषे तु समारूढं कटिसूत्रेण भूषितम्॥

गोवृषे वृषभश्रेष्ठे।

कटकैश्चैव केयूरैः कुण्डलाभ्यां विभूषितम्।
एवं कृत्वा हरं स्कन्दं देवदेवं जगद्गुरुम्॥
क्रियमाने तु वै वीर कुर्य्याद्वै मण्डलानि तु।
वेदमङ्गलशब्दैश्च गीतवादित्रनिस्वनैः॥
प्रतिष्ठाप्य यथान्यायं पूर्व्वोक्तविधिना भवेत्।
ततो विवाहं कुर्य्याद्वै पूर्व्वोक्तविधिना गुह॥
वेदिं कृत्वा तु पूर्व्वोक्तां सुविचित्रां मनोरमाम्।
ततो देवीं हरञ्चैव वेद्यां वै उपवेशयेत्॥
हस्तसंयोजनं कृत्वा विवाहं होमयेत्ततः।
वेदमङ्गलशब्दैश्च गीतवादित्रनिस्वनैः॥
मृदङ्ग सर्व्वशब्दैश्च काहलैः पटहादिभिः।
एवं वृत्ते विवाहे तु पश्चाद्यज्ञं समाचरेत्॥
आचार्य्यं पूजयेद्भक्त्या वित्तशाठ्यं विवर्ज्जयेत्।
हिरण्यपट्टयुक्तैश्च गोदानैश्च सुपुष्कलैः।
लवणेन गुड़ेनैव यवगोधूमयष्टिभिः॥

नानाविधैः पूजयेद्वै आचार्य्यं गौरीपुत्रक ॥
ब्राह्मणान् दर्चयेत् प्राज्ञो यथाशक्त्या षडानन!।
गुरुं वै पूजयेत् पश्चात् कर्त्तव्यं भोजनं गुह ॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च।
यत्पुण्यं तद्भवेत् सम्यक् ज्ञानश्चैव महामते ॥
कृते गौर्य्या विवाहे तु भवनस्य सुशोभनम्।
यथोक्तेन विधानेन नान्यथा प्राप्यते गुह!।
एष ते कथितो देव्या विवाहस्तु सविस्तरः ॥

---

## मत्स्य पुराणे।

मत्स्य उवाच।

वसन्तमासमासाद्य तृतीयायां जनप्रियम्।
शुक्लपक्षस्य पूर्व्वाह्णे तिलैः स्नानं समाचरेत् ॥

वसन्तमासस्थेचः प्राथम्यादिना।

तस्मिन्नहनि सा देवी किल विश्वात्मना सती।
पाणिग्रहणिकैर्मन्त्रैरुदूढ़ा वरवर्णिनी ॥
तया सहैव देवेशं तृतीयायामथार्च्चयेत्।
फलैर्नानाविधैर्दीपैर्धूपनैवेद्यसंयुतैः ॥
प्रतिमां पञ्चगव्येन तथा गन्धोदकेन च।
स्नापयित्वाऽर्च्चयेद्गौरीमिन्दुशेखरसंयुताम् ॥
नमोऽस्तु पाटलायै तु पादौ देव्याः शिवस्य च।

शिवायेति च सङ्कीर्त्त्य जयायै [1]देव जानुनी ॥
सङ्कीर्त्त्य हरिकेशाय तथोरू वरदे नमः।
ईशायै तु कटी देव्याः शङ्करायेति शङ्करम्[2] ॥
कुक्षिद्वयञ्च कोटव्यै शूलिनं शूलपाणये।
मङ्गलायै नमस्तुभ्यमुदरञ्चाभिपूजयेत् ॥
सर्व्वात्मने नमो रुद्रमीशान्यै च कुचद्वये[3]।
शिवं वेदात्मने तद्वत् रुद्राण्यै कण्ठमर्च्चयेत् ॥
त्रिपुरघ्नाय विश्वेशमनन्तायै करद्वयम्।
त्रिलोचनायेति हरं बाहू कालानलप्रिये ॥
सौभाग्यभवनायेति भूषणानि सदाऽर्च्चयेत्।

सदार्च्चयेदिति वचनात् पादादिपूजाकाले तु तत्तद्भूषणान्यपि पूजनीयानीति योगीश्वरः।

स्वाहा स्वधायै च सुखमीश्वरायेति शूलिनम् ॥
अशोकमधुराशिन्यै[4] पूज्यावोष्ठौ विभूतिदौ।
स्थाणवे च हरं तद्वदास्यञ्च क्रमुकप्रिये[5] ॥

आस्यमत्र मुखस्तु गौरं सुखपूजायाः पूर्व्वमभिहितत्वात्।

नमोऽर्द्धनारीशहरमसिताङ्गीति नासिकाम् ॥
नम उग्राय लोकेशं ललितेति पुनर्भ्रुवौ।
शर्व्वाय पुरहन्तारं वासुदेव्यै तथालकम् ॥
नमः श्रीकण्ठनाथाय शितिकेशानथार्च्चयेत्।

---

[1] B गुल्फयोर्द्वयोः। [2] C शङ्कुके। [3] B द्वयम्।
[4] A मधुवासिन्यै। [5] B चन्द्रमुखप्रिये।

सौमोग्रसोमरूपिण्यै शिरः सर्व्वात्मने नमः॥
हरमभ्यर्च्य विधिवत् सौभाग्याष्टकमग्रतः।
स्थापयेद्धृतनिष्पाव कुसुम्भक्षीरजीरकम्॥
[1]तवराजेक्षुलवणं कुस्तुम्बुरुमथाष्टकम्।
दत्तं सौभाग्यकृत् यस्मात् सौभाग्याष्टकमितऽतः॥
एवं निवेद्य तत्सर्व्वं देव्या देवस्य चाग्रतः[2]।
[3]रात्रौ शृङ्गोदकं प्राश्य स्वपेद्भूमावरिन्दम!॥
पुनः प्रभाते तु तथा कृतस्नानजपः शुचिः।
सम्पूज्य द्विजदाम्पत्यं वस्त्र-माल्य-विभूषणैः॥
सौभाग्याष्टकसंयुक्तं सुवर्णचरणद्वयम्।
प्रीयतामत्र ललिता ब्राह्मणाय निवेदयेत्॥

निष्पावः क्षीरघृतादिसाधितगोधूमान्नं कुसुम्भं कुसुम्भकुसुमम्। क्षीरं दुग्धं तवराजः सितशर्करा कुस्तुम्बुरुर्धान्याकः।

अत्र क्षीरघृतयोरेककोटिता।

तथा च सौभाग्याष्टकपरिगणने मत्स्यपुराणम्—

इक्षवस्तवराजस्तु निष्पावो जातिधान्यकम्।
विकारवत्त गोक्षीरं कुसुम्भकुसुमं तथा[4]॥
लवणञ्चाष्टमं तद्वत् सौभाग्याष्टकमुच्यते॥
एवं संवत्सरं यावत् तृतीयायां सदा मुने।
प्राशने दानमन्त्रे च विशेषोऽयं निबोध मे॥

---

१ C रस—। २ B निवेद्य शिवयोः पुनः। ३ A चैत्रे।
४ B विकारो यवगोक्षीरं कुसुम्भं कुङ्कुमं तथा।

गोशृङ्गोदकमाद्यं स्यात् वैशाखे गोमयं पुनः।
ज्यैष्ठे मन्दारपुष्पञ्च आषाढ़े बिल्वपत्रकम्॥
श्रावणे दधि सम्प्राश्यं भाद्रस्य च कुशोदकम्।
क्षीरमाश्वयुजे मासि कार्त्तिके पृषदाज्यकम्॥

पृषदाज्यं सदध्याज्यम्।

मार्गे तु मासि गोमूत्रं पौषे सम्प्राशयेद्घृतम्।
माघे कृष्णतिलांस्तद्वत् पञ्चगव्यञ्च फाल्गुने॥
ललिता विजया भद्रा भवानी कुमुदा शिवा।
वासुदेवी तथा गौरी मङ्गला कमला सती।
उमा से दानकाले तु प्रीयतामिति कीर्त्तयेत्॥

अत्र ललितादिद्वादशनामानि चैत्रादि प्रतिमासं यथासंख्यं कीर्त्तनीयानि।

मल्लिकाशोककमलं कदम्बोत्पलमालती।

उत्पलं नीलोत्पलादि।

कुब्जकं करवीरञ्च वाणमम्लानकुङ्कुमम्॥
सिन्धुवारञ्च सर्व्वेषु मासेषु क्रमशः स्मृतम्।
जवा कुसुम्भकुसुमं मालती शतपत्रिका॥
यथालाभं प्रशस्तानि करवीरञ्च सर्व्वदा।
एवं संवत्सरं यावदुपोष्य विधिवन्नरः॥
स्त्री वा भक्ता कुमारी वा शिवावभ्यर्च्च्य भक्तितः।

शिवश्च शिवा च शिवौ।

व्रतान्ते शयनं दद्यात् सर्व्वोपस्करसंयुतम्॥

उपस्करो गेण्डुकादिः।

उमामहेश्वरं हैमं वृषभञ्च गवा सह।

गोवृषभावपि हैमावेव।

स्नापयित्वाऽथ शयने ब्राह्मणाय निवेदयेत्॥
अन्यान्यपि यथाशक्त्या मिथुनान्यम्बरादिभिः।
धान्यालङ्कार-गोदानैरभ्यर्च्चेद् धनसंख्यया॥
वित्तशाठ्येन रहितः पूजयेद्गतविस्मयः।
एवं करोति यः सम्यक् सौभाग्यशयनव्रतम्॥
सर्व्वान् कामानवाप्नोति पदमानन्त्यमश्नुते।
फलस्यैकस्य च त्यागमेतत्कुर्व्वन् समाचरेत्॥

प्रियस्य कस्यापि फलस्य त्यागो बोद्धव्यः।

[१]यतः कीर्त्तिमवाप्नोति प्रतिमासं नराधिप!।
सौभाग्यारोग्यरूपायुर्वस्त्रालङ्कारभूषणैः।
न वियुक्तो भवेद्राजन्नब्दार्बुदशतत्रयम्॥
यस्तु द्वादशवर्षाणि सौभाग्यशयनव्रतम्।
करोति सप्त चाष्टौ वा श्रीकण्ठभवनेऽमरैः
पूज्यमानो भवेत् सम्यक् यावत् कल्पायुतत्रयम्॥
नारी वा कुरुते या तु कुमारी वा नरेश्वर!।
साऽपि तत्फलमाप्नोति देव्यनुग्रहलालिता॥
शृणुयादपि यश्चैवं प्रदद्यादथवा मतिम्।
सोऽपि विद्याधरो भूत्वा स्वर्गलोके चिरं वसेत्॥

---

१ B यत्र।

इदमिह मदनेन पूर्व्वमिष्टं
शतधनुषा कृतवीर्य्यसूनुना च ।
कृतमथ वरुणेन नन्दिना च
क्षितिजननाथ[१] तदद्भुतं भुवि स्यात् ॥

इति मत्स्यपुराणे सौभाग्यशयनव्रतं समाप्तम् ।

---

मत्स्यपुराणे ।

माघे मास्यथ चैत्रे वा गुड़धेनुप्रदो भवेत् ।
गुड़व्रतस्तृतीयायां गौरीलोके महीयते ॥
महाव्रतमिदं नाम परमानन्दकारकम् ।

गुड़व्रतो गुड़मात्रभोजी । मन्वन्तरादिश्चेयं[२] तृतीयेति अक्षय-फलकामनया श्राद्धमप्यत्र ।

आग्नेयपुराणे—

समुपोष्यार्च्चयेल्लक्ष्मीं पञ्चम्यां वत्सरे गते ।
चैत्रस्य कमलं दद्यात्तिलधेनुसमन्वितम् ॥
हैमं विष्णुपदं याति कल्पादेति पुनर्महीम् ।
राजराजो भवेच्छ्रीमान् भवेज्जन्मनि जन्मनि ।
एतल्लक्ष्मीव्रतं नाम दुःखशोकविनाशनम् ॥

चैत्रस्य पञ्चम्यां लक्ष्मीमर्च्चयेत् वत्सरे गते हैमं कमलं दद्यात् यदा महीमेति तदा राजराजो भवेत् श्रीमान् जन्मनि भवेदित्यर्थः ।

---

१ A जननाथ ।   २ D मन्वन्तरादिपाठे चेय

ब्रह्मपुराणे—

शुक्लायामथ पञ्चम्यां चैत्रे मासि शुभानना।
श्रीर्ब्रह्मलोकान्मानुष्यं सम्प्राप्ता केशवाज्ञया॥
तस्मात्तां पूजयेत्तत्र यस्तं लक्ष्मीर्न मुञ्चति।
एषा श्रीपञ्चमी कार्य्या विष्णुलोकगतिप्रदा॥

ब्रह्मपुराण एव—

अमावस्यायां सम्भूतः स्कन्दः पूर्व्वं हुताशनात्।
जातः पर्व्वणि षष्ठ्यान्तु शुक्लायाञ्चैत्रनामनि।
सैनापत्येऽभिषिक्तस्तु देवानां ब्रह्मणा स्वयम्॥
जितवांस्तारकं दैत्यं क्रौञ्चं शक्त्या बिभेद च।
तस्मात् स तत्र विधिना स्कन्दो माल्यैः सुगन्धिभिः॥
दीपालङ्कारवस्त्राद्यैकुक्कुटैः पूज्य एव हि।

कुक्कुटः क्रीड़ार्थं देयो न तु मारणीयः।

अन्यैः क्रीड़नकैरन्यैर्घण्टा चामर दर्पणैः॥
सर्व्वासु शुक्लषष्ठीषु पूज्यो वा श्रद्धया नरैः।
आरोग्यकामैर्बालानां पुत्रवद्भिर्विशेषतः॥

---

मत्स्यपुराणे—

ईश्वर उवाच।

अतःपरं प्रवक्ष्यामि तद्वत् कमलसप्तमीम्।
अस्याः सङ्कीर्त्तनादेव तुष्यतीह दिवाकरः॥
वसन्तामलसप्तम्यां स्नातः सन् गौरसर्षपैः।

तिलपात्रे च सौवर्णं विधाय कमलं शुभम् ॥
वस्त्रयुग्मान्वितं कृत्वा गन्धपुष्पैः समर्चयेत् ।
नमः कमलहस्ताय नमस्ते विश्वधारिणे ॥
दिवाकर नमस्तुभ्यं प्रभाकर नमोऽस्तु ते ।
ततो [1]द्विकालवेलायामुदकुम्भसमन्विताम् ॥
विप्राय दद्यात् सम्पूज्य वस्त्र-माल्य-विभूषणैः ।
शक्तिश्चेत् कपिलां दद्यादलङ्कृत्य विधानतः ॥
अहोरात्रे गते पश्चादष्टम्यां भोजयेद्विजान् ।
यथाशक्त्या च भुञ्जीत मांस-तैलविवर्ज्जितम् ॥
अनेन विधिना शुक्लसप्तम्यां मासि मासि च ।
सर्व्वं समाचरेद्भक्त्या वित्तशाठ्यविवर्ज्जितः ॥
व्रतान्ते शयनं दद्यात् सुवर्णकमलान्वितम् ।
गाश्चैव भक्तितो दद्यात् सुवर्णाश्याः[2] पयस्विनीः ॥
भोजनासन-दीपादीन् दद्यादिष्टानुपस्करान् ।

सुवर्णास्याः सुवर्णघटितमुखाकारयुक्ता इति कश्चित् । सुवर्ण-शृङ्गवतीरिति तु पारिजातस्वरसः ।

अनेन विधिना यस्तु कुर्य्यात् कमलसप्तमीम् ।
लक्ष्मीमनन्तामभ्येति सूर्य्यलोके च मोदते[3] ॥
कल्पे कल्पे ततो लोकान् सप्तगत्वा[4] पृथक् पृथक् ।
अप्सरोभिः परिवृतस्ततो याति परां गतिम् ॥

---

१ C D त्रिकाल— । २ B गाश्च दद्यात् स्वभक्त्या तु सुवर्णाद्यां ।
३ B महीयते । ४ B सप्तकल्पः ।

यः पश्यतीमां शृणुयान्मुहूर्त्तं[1]
पठेच्च भक्त्याऽथ मतिं ददाति।
सोऽप्यत्र लक्ष्मीमचलामवाप्य
गन्धर्व्वविद्याधरलोकभाक् स्यात्[2]॥

वसन्तस्थैचोऽत्र विवक्षितः।

इति मत्स्यपुराणे कमलसप्तमीव्रतं समाप्तम्।

---

भविष्ये सुमन्तुरुवाच—

शुक्लपक्षे तु चैत्रस्य षष्ठ्यां सम्यगुपोषितः।
पूजयेद्भास्करं भक्त्या पुष्पधूपानुलेपनैः॥
येन तं पूजयेद्देवं स विधिः कथ्यते तव।
सदा वैश्रावणीयेन[3] विधिना पूजयेन्नृप!॥

ॐ प्रज्वलने स्वाहा इत्यग्निप्राकारः। ॐ नमः शमी प्राकारः। ॐ सहस्रकिरणोज्ज्वलाय स्वाहा बन्धः। ॐ पृथिव्यै सर्व्वौषधिरूपिण्यै स्वाहा पृथिव्यस्त्वं नमः शकलीकरणमन्त्रः। आत्मनो देवशरीरे च—

ॐ धर्म्मात्मने नमः पूर्व्वतः। ॐ दण्डनायकाय नमः दक्षिणतः। ॐ रेवन्ताय नमः पश्चिमतः। ॐ सततोज्ज्वलरूपाय नमः, उत्तरतः। ॐ श्यामपिङ्गल लोहिताक्षाय नमः, ऐशान्याम्। ॐ नीललोहिताय नमः, आग्नेय्याम्। ॐ शनैश्चराय नमः, नैरृत्याम्। ॐ वज्रपाणये नमः, वायव्याम्।

---

१ मर्त्त्यः।  २ C—लोकमेति।  ३ D मैत्रायणी येन।

ॐ नमो हराय[1] देवाय महाबलपराक्रमाय सर्व्वतेजोऽधिपतये स्वाहा ॐ उत्तरशक्तिधराय नमः । प्रतीहारः । ॐ हर देवायोग्ररूपाय नमः । द्वितीयः प्रतीहारो दक्षिणतः । ॐ हरिताय नमः पश्चिमतो मतः । ॐ अश्वमुखाय नमः । उत्तरतोमतः । द्वारपालचतुष्टयम् ।

ॐ कुन्देन्दुक्षीरप्रभाय नमः प्रथमोऽश्वः । ॐ रक्ताचरक्तवर्णाय नमः, द्वितीयोऽश्वः । ॐ रक्तवर्णतेजस्विने नमः, तृतीयोऽश्वः । ॐ भिन्नाञ्जनवर्णाय नमस्तुर्थोऽश्वः । ॐ तीव्रतेजसे नमः पञ्चमोऽश्वः । ॐ व्योमवर्णाय दीप्तमालिने नमः षष्ठोऽश्वः । सर्व्ववर्णाधिपतये नमः सप्तमोऽश्वः ।

ॐ नमो द्वाराग्निकवचाय कश्यपपुत्राय नमः । ॐ प्रजापतये नमः, ॐ अनन्तदेवाय नमः, ॐ असाधारणतेजसे नमः । आवाहनमन्त्रः ।

ॐ भास्कर देवादिदेव गच्छ यथासुखं भवनं पुनरागमनाय । विसर्ज्जनमन्त्रः ।

गायत्र्या स्वागतार्घपाद्याचमनासनाभिमुख्यचरणगन्धपुष्पोपहारादिनिवेदनम् ।

मुकुली पद्ममुद्रा च निष्ठुरा च तथा परा ।
नागाख्या व्योममुद्रा च उषा चैवापरा स्मृता ॥
सम्प्रैतास्र परा मुद्राः कोटिमुद्रास्तथैव च ।

ॐ खखोल्काय नमः, हृदयं । ॐ चिपिटाय नमः शिरः ।

---

१ B D चरदेवाय ।

ॐ सुतेजसे नमः शिखा । ॐ आदित्याय तेजोऽधिपतये नमः कवचं । ॐ आदित्याय सहस्ररश्मये नमः, अस्त्रं । ॐ तेजोऽधिपतये नमः, मुखं । ॐ मेषवृषणाय नमः, गुह्यं । ॐ सहस्रकिरणाय नमः पादौ । ॐ दीप्त्यधिपतये नमः पृष्ठं ।

ॐ भास्कराय विद्महे सप्ताश्वाय धीमहि तन्नो भानुः प्रचोदयादिति गायत्री ।

अनेन विधिना पूज्य षष्ठ्यामुपवसेद्बुधः ।
पुरतः प्रथमं भानोः सप्तम्यां पूजयेत् पुनः ॥
भोजयेच्चापि विप्रांश्च दध्ना वा पायसेन वा ।
शक्त्या च दक्षिणां दद्यादाद्वारादाव्रजेच्च तान् ॥
पयः पीत्वा ततो गव्यं स्नातव्यं कुरुनन्दन ! ।
दन्तखाद्यं भवेद्यद्धि तदोदनमिति स्मृतम् ॥
भक्ष्यं[1] भोज्यं तथा लेह्यमोदनं त्रिः प्रकीर्त्तितम् ।
पेयञ्चानोदनं प्रोक्तं तस्मात्तं परिवर्ज्जयेत् ॥

तमोदनम ।

इत्येषाऽनोदना नाम सप्तमी भरतर्षभ ! ।
यामुपोष्य नरो भक्त्या धनधान्यमवाप्नुयात् ।
सर्व्वपापविनिर्मुक्तः सूर्य्यलोके महीयते ॥

एतच्च व्रतमेकचैत्रशुक्लसप्तमीसमाप्यमेव सम्वत्सराद्यनुल्लेखात् एकवचनस्वरसादावृत्तौ प्रमाणाभावाच्च ।

इत्यनोदना सप्तमी ।

---

१ D भोग्यं ।

## भविष्यपुराण एव ।

ब्रह्मोवाच—

अतःपरं प्रवक्ष्यामि रहस्यां नामसप्तमीम् ।
पवित्रां हि पवित्राणां महापातकनाशिनीम् ॥
सप्तमी कृतमात्रेयं नरांस्तारयते भवात्[१] ।
सप्तावरान् सप्त परान् पितृंश्चापि न संशयः ॥
रोगांश्छिनत्ति दुश्छेद्यान् दुर्ज्जयान् जयते रिपून् ।
अर्थं प्राप्नोति दुष्प्रापं यः कुर्य्यान्नामसप्तमीम् ॥
कन्यार्थी लभते कन्यां धनार्थी लभते धनम् ॥
पुत्रार्थी लभते पुत्रान् धर्म्मार्थी धर्म्ममाप्नुयात् ।
समयान् पालयन् सर्व्वान् कुर्य्याच्चेमां विचक्षणः ॥
समयान् शृणु भूतेश श्रेयसे गदतो मम ।
आदित्यभक्तः पुरुषः सप्तम्यां गणनायकम् ॥
मैत्रीं वै सर्व्वतः कुर्य्याद्भास्करञ्चापि चिन्तयेत् ।
सप्तम्यां न स्पृशेत्तैलं नीलं वस्त्रं न धारयेत् ॥
न चाप्यामलकैः स्नानं न कुर्य्यात् कलहं क्वचित् ।
[२]नात्मानमवमन्येत न मद्यानि पिबेद्बुधः ॥
न द्रोहं कस्यचित् कुर्य्यान्न पारुष्यं समाचरेत् ।
नावभाषेच्च चाण्डालं नैव स्त्रीञ्च रजस्वलाम् ॥
न चापि संस्पृशेत् श्वानं मृतकं नावलोकयेत् ।
नास्फोटयेच्चापि हसेद्गायेच्चापि न गीतकम् ॥

---

१ C भयात् ।  २ B न लोकमवमन्येत ।

न नृत्येदतिरागेण न वा वाद्यानि वादयेत् ।
न शयीत स्त्रिया सार्द्धं न सेवेत दुरोदरम् ॥
न रोदेदश्रुपातेन न चाद्यात् पञ्चशाकिकाम् ॥

एवञ्चात्र पञ्चशाकिकाऽन्यलघ्वाहारे न निषेधः[1] ।

नाकर्षेच्च शिरोयूकां न मृषा वादमाचरेत् ।
परस्यानिष्टकथनमतिशोकञ्च वर्ज्जयेत् ॥

समयान् नियमान् दुरोदरं द्यूतं, पञ्चशाकिका कन्द-मूल-फल-पुष्प-पत्राणि, यूका तु कोणकुणी ।

अथापरो विधिश्चात्र श्रूयतां त्रिपुरान्तक ! ।
चैत्रात्प्रभृति कर्त्तव्या सर्व्वदा नामसप्तमी ॥
धातेति चैत्रमासे तु पूजनीयो दिवाकरः ।
अर्य्यमेति च वैशाखे ज्यैष्ठे मित्रः प्रकीर्त्तितः ॥
आषाढ़े वरुणो ज्ञेय इन्द्रो नभसि कथ्यते ।
विवस्वांश्च नभस्ये तु पर्ज्जन्योऽश्वयुजि स्मृतः ॥
पूषा कार्त्तिकमासे तु मार्गशीर्षेंऽशुरुच्यते ।
भगः पौषे भवेत् पूज्यस्त्वष्टा माघे तु गद्यते ॥
विष्णुस्तु फाल्गुने मासि पूज्यो वन्द्यश्च भास्करः ।
सप्तम्यां चैत्रसप्तम्यां भोजयेत् भोजकान् बुधः ॥

सप्तम्यां चैत्रसप्तम्यामिति वीप्सया सर्व्वसप्तम्यामिति लभ्यते ।

सप्तम्यां भोजनं देयं भोजयित्वा विधानतः ।
भोजकायैव दातव्या दक्षिणा स्वर्णमाषकम् ॥

---

१ C अन्यलघ्वाहारेण विशेषः ।

सघृतं भोजनं देयं रक्तवस्त्राणि चैव हि ।
अलाभे भोजकानान्तु दक्षिणीया द्विजोत्तमाः ॥

भोजका मगाः ।

तथैव भोजनीयाश्च श्रद्धया परयान्वितैः ।
विशेषतो वाचकश्च ब्राह्मणः कल्पवित् सदा ॥

कल्पवित् सप्तमीकल्पवित् ।

इत्येषा कथिता तुभ्यं सप्तमी गणनायक ।
श्रुता सती पापहरा सूर्य्यलोकप्रदायिनी ॥

इति [1]नामसप्तमीव्रतम् ।

---

## महाजनपरिगृहीतवाक्यानि ।

पुनर्वसौ वृषे लग्ने चैत्रे मासि सिताष्टमीम् ।
लौहित्ये विधिवत् स्नात्वा वाजपेयफलं लभेत् ॥

स्नानमन्त्रः ।

ब्रह्मपुत्र ! महाभाग ! शान्तनोः कुलवर्द्धन ! ।
अमोघागर्भसम्भूत ! पापं लौहित्य ! मे हर ॥

लौहित्यो लोहितसमुद्रः ।

अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ ।
चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ॥

पानमन्त्रः ।

त्वामशोक हराभीष्ट मधुमाससमुद्भव ! ।

---

१ A B पुस्तकद्वये सर्व्वदा नाम इति पाठः ।

पिबामि शोकसन्तप्तो मामशोकं सदा कुरु ॥

तथा ।

पुनर्वसुबुधोपेता चैत्रे मासि सिताष्टमी ।
स्रोतःसु विधिवत् स्नात्वा वाजपेयफलं लभेत् ॥
चैत्राष्टम्यादि पूर्णान्तमशोकैर्मन्मथार्चनम् ।
तच्च कार्य्यमशोकार्थं ज्ञेया वासन्तिका हि सा ॥

देवीपुराणे—

चैत्राष्टम्यान्तु स्नायीत मातृस्थाने मृदाम्बुभिः ।
देवीं तीर्थजलैः स्नाप्य मदलेपेन लेपयेत् ॥
धूपं तुरुष्कं चोशीरं ह्यतिमुक्तैस्तु पूजयेत् ।
नैवेद्यं शालिजं भक्तं शर्कराः कन्यकास्वपि ।
आत्मनस्तच्च वै भोज्यं शक्तितो दक्षिणां ददेत् ॥
अजिता सर्व्वकामानां पूरणाय सुखाय मे ।
विप्रान् धन्यान् समासाद्य हेमदानफलं लभेत् ॥

अथ कृष्णादिमासपक्षोपक्रमकविरहात् शुक्लादिमासस्य व्यवस्थापितत्वात् शुक्लादिरेव मासः । अष्टम्यपि प्राथम्यानुरोधादेकवचनाच्च शुक्लैव । मातृस्थाने दुर्गास्थाने मदलेपनं, तुरुष्कं सिह्लकं, अतिमुक्तो माधवीपुष्पं शालिभक्तं शर्करा च नैवेद्यं कन्यासु भोज्यमिति सम्बन्धः ।

ब्रह्मपुराणे—

चैत्रे नवम्यां शुक्लायां भद्रकाली महाफला ।
योगिनीनान्तु सर्व्वासामाधिपत्येऽभिषेचिता ॥

तस्मात्तां पूजयेत्तत्र सोपवासो जितेन्द्रियः ।
विचित्रैर्बलिभिर्भक्त्या सर्व्वासु नवमीषु च ॥

ब्रह्मपुराणे—

एकादश्यां ततः स्त्रीभिर्देवी पूज्या च रुक्मिणी ।
पौराणी योगिनी काचिच्छक्तिर्नारायणाङ्गजा ॥
पुष्पालङ्कारधूपान्नशाकैश्च विविधैरपि ।
अपूपैर्विविधाकारैर्बलि-ब्राह्मण-तर्पणैः ॥
तत्रापराह्णे वास्तुस्य वेश्मनो वंशधारकः ।
अर्घ्यैर्माल्यैश्च वस्त्रैश्च पूज्यो रङ्गैः सुगन्धिभिः ॥
प्रदोषसमये तत्र पञ्चगव्यं विधानवत् ।
तिलसिद्धार्थकैर्युक्तं गृहीत्वा वेश्मनो बहिः ।
देयं दिक्षु च पर्य्युक्षेद्दुष्टप्राणिनिवारणम् ॥

पर्य्युक्षेत् तदेव पञ्चगव्यं प्रतिदिशं क्षिपेत् ।

कृतोपवासो द्वादश्यां ततो विष्णुञ्च पूजयेत् ।
अपराह्णे च तत्रैव कामदेवञ्च पूजयेत् ॥
घटस्थं विविधैर्माल्यैर्गन्धैरुच्चावचैरपि ।
ततस्तु शीतलं तोयं पुण्यमादाय वाग्यतैः ॥
कामदेवाग्रतः स्थाप्यं पुष्पच्छन्ने महाघटे ।
अर्घ्यादिपूजितं सम्यक् प्रशस्तैश्चूतपल्लवैः ॥
तस्यां रात्र्यां व्यतीतायां ततो गुप्ततरे गृहे ।
अनर्क्काभ्युदिते काले स्नाप्याः[1] सुस्तेन वारिणा ॥

---

[1] D स्नाप्याः ।

ख्याप्याः मूले वक्ष्यमाणा देवता एव।

विष्णुधर्म्मोत्तरे।

द्वादश्यां चैत्रशुक्लस्य चैत्रवस्त्रप्रदो नरः।
अक्षयं फलमाप्नोति नागलोकञ्च गच्छति॥
वैशाखमासद्वादश्यां रुक्मदानं तथैव च।
छत्रोपानद्द्वयोर्द्दानात् ज्येष्ठे मासि द्विजोत्तमाः॥

तथैव चेति प्रथममासोक्तफलानुषङ्गः।

आस्तीर्णं शयनं दत्त्वा प्रीणयेद्भोगशायिनम्।
आषाढ़शुक्लद्वादश्यां श्वेतद्वीपे महीयते॥

भोगशायिनं विष्णुं आस्तीर्णं शयनं दत्त्वा महीयते इति सम्बन्धः।

श्रावणे वस्त्रदानेन विष्णुलोके महीयते।
गोदः प्रयाति गोलोकं मासि भाद्रपदे तथा॥
प्रीणयेदश्वशिरसमश्वं दत्त्वा तथाश्विने।

अश्वशिरसं हयग्रीवं देवम्।

विष्णुलोकमवाप्नोति कुलमुद्धरति स्वकम्॥
सरोमवस्त्रदानेन कार्त्तिके वस्त्रमाप्नुयात्।
प्रदानं लवणानान्तु मार्गशीर्षे महाफलम्।

रोमवस्त्रं तूलपटी।

धान्यानाञ्च तथा पौषे दारुणाञ्चाप्यनन्तरे।
फाल्गुने सर्व्वगन्धानां नात्र कार्य्या विचारणा॥

अनन्तरे माघे दानं महाफलमित्यनुषज्यते। अत्र यद्यपि द्वादश्युल्लेखो नास्ति तथापि समभिव्याहाराद्द्वादश्येव विवक्षिता।

भाग्यर्क्षसंयुता चैत्रे द्वादशी स्यान्महाफला।

भाग्यर्क्षं पूर्व्वफल्गुनी उत्तरफल्गुनी वा।

पूर्व्वायां विजयं विद्यादुत्तरायां भगन्तथा॥

इति भविष्यपुराणे नक्षत्रदेवताकथनात्।

हस्तयुक्ता तु वैशाखे ज्येष्ठे च स्वातिना तथा।

ज्येष्ठया च तथाषाढ़े मूलोपेता च वैष्णवे॥

वैष्णवे श्रावणे।

तथा भाद्रपदे मासि श्रवणेन तु संयुता।

आश्विने द्वादशी पुण्या भवत्याजर्क्षसंयुता॥

आजर्क्षं पूर्व्वभाद्रपदा।

कार्त्तिके रेवतीयुक्ता सौम्ये कृत्तिकया तथा।

सौम्ये मार्गे।

पौषे मृगशिरोपेता माघे चादित्यसंयुता॥

आदित्यं पुनर्वसु।

फाल्गुने पुष्यसहिता द्वादशी पावनी परा।

नक्षत्रयुक्तास्वेतासु तथा दानमुपोषितम्।

सर्व्वं महाफलं ज्ञेयमनन्तं द्विजसत्तमाः।

तथा दानमुपोषितमिति— अत्र पूर्व्वं चैत्रशुक्लद्वादश्यादि द्वादशद्वादशीविहितदानफलाधिकफलत्वं महाफलत्वं दाने उपोषिते च अनन्तफलमिति वचनादत्युत्कर्षः फले एतानि द्वादशमासशुक्ल-

द्वादशीषु प्रत्येकं द्वादशदानानि तत्र तत्र लिखितान्यपि मासा-न्तरद्वादशीफलानुषङ्गार्थमेकत्रापि सङ्कलय्य लिखितानि ।

एवञ्च द्वादशनक्षत्रयोगेनापि द्वादशद्वादशीषु द्वादशदानान्यु-पोषितानि च प्रत्येकं केवलतत्तद्द्वादशीदानफलापेक्षया अति-शयितफलसाधनानीति मन्तव्यम् ।

वराहपुराणे ।

सत्यतपा उवाच—

कोऽसौ धरण्यां सङ्कीर्ण उपवासो महामुने! ।
कानि व्रतानि च तथा एतन्मे वक्तुमर्हसि ॥

दुर्वासा उवाच—

एवमेव मुने मासि चैत्रे सङ्कल्प्य द्वादशीम् ।
उपोष्याराधयेद्भक्त्या देवदेवं जनार्दनम् ॥
वामनायेति वै पादौ विष्णवे कटिमर्चयेत् ।
वासुदेवेति जठरमुरः सम्पूर्णकाय च ॥
कण्ठं विश्वभृते पूज्यं शिरो वै व्योमरूपिणे ।
बाहू विश्वजिते पूज्यौ स्वनाम्ना शङ्खचक्रके ॥
अनेन विधिनाऽभ्यर्च्य देवदेवं सनातनम् ।
प्राग्वद्व्रणोदरं कुम्भं सयुग्मं पुरतो न्यसेत् ॥
प्राशुक्रपात्रे संस्थाप्य वामनं काञ्चनं बुधः ।
यथाशक्त्या कृतं छत्रं सितयज्ञोपवीतिनम् ॥
कुण्डिकां स्थापयेत् पार्श्वे क्वचिकां पादुके तथा ।
अक्षमालाञ्च संस्थाप्य वृषिकाञ्च विशेषतः ॥

एतैरुपस्करैर्युक्तं प्रभाते ब्राह्मणाय तम् ।
दापयेत् प्रीयतां विष्णुर्मत्स्यरूपीत्युदीरयेत् ॥
मासनाम्ना तु संयुक्तं प्रादुर्भावाभिधानकम्[१] ।
प्रीयतामिति सर्व्वत्र विधिरेष प्रकीर्त्तितः ॥
श्रूयते च पुरा राजा हर्य्यश्वः पृथिवीपतिः ।
अपुत्रः स तपस्तेपे पुत्रमिच्छंस्तपोधनः ॥
तस्यैव कुर्व्वतस्त्विष्टिं पुत्रार्थं मुनिसत्तम ।
आजगाम हरिर्देवो द्विजरूपसमन्वितः ॥
स उवाच नृपं राजन् किन्ते व्यवसितं त्विति ।
पुत्रार्थमिति चोवाच तं विप्रः प्रत्युवाच ह ॥
इदमेव विधानन्तु कुरु राजन् प्रयत्नतः ।
स विप्र एवमुक्त्वा च क्षणादन्तर्हितस्ततः ॥
राजापि तच्चकाराथ मन्त्रवित्तं द्विजातये ।
दरिद्राय स्वयं प्रादात् ज्योतिर्गर्भाय धीमते ।
यथाऽदितेरपुत्रायाः स्वयं पुत्रत्वमागतः ।
भगवांस्तेन सत्येन ममाप्यस्तु सुतो वरः ।
अनेन विधिनोक्तेन तस्य पुत्रोऽभवन्मुने ।
उग्राख्य इति ख्यातस्तु चक्रवर्त्ती महाबलः ।
अपुत्रो लभते पुत्रानधनो धनवान् भवेत् ।
भ्रष्टराज्यो लभेद्राज्यं मृतो विष्णुपुरं व्रजेत् ।

एवमेवेति वक्ष्यमाणमार्गशीर्षमासद्वादशीकृत्ये दशम्यां निय-

---

१ B विधानकं ।

नात्मवान्, स्नातो देवार्च्चनं कृत्वा, अग्निकार्य्यं यथाविधि इत्यादि “तत्राराध्य महायोगदेवं नारायणं प्रभुम्” इत्यन्तेन यदुक्तं तत्कृत्वेत्यर्थः। उपोष्यैकादश्यां वामनायेत्यर्चनीयम्।

ॐकारादि नमोऽन्तेन चतुर्थ्यन्तेन चार्चयेत्।

प्राग्वदिति जलपूर्णत्व-ससमाल्यत्व-सितचन्दनलेपितत्व तिलपात्र-स्थगितत्व पञ्चरत्नगर्भितत्वानां ग्रहणं। सयुग्मं सितवस्त्रयुग्म सहितं प्रागुक्तपात्रे यथाशक्त्या सौवर्ण रौप्य-ताम्राधाराणामन्यतमे वारिपूर्णे, काञ्चनं सौवर्णं कुण्डिका कमण्डलुः। हृषिका यत्या-सनं, मासनाम्नेत्यादि प्रादुर्भावाभिधानकं प्रीयतामित्यन्तस्य मार्ग-शीर्षे, द्वादशमासेषु केशव नारायण माधव गोविन्द विष्णु मधु-सूदन त्रिविक्रम वामन श्रीधर हृषीकेश पद्मनाभ दामोदरेति यथाक्रमं प्रत्येकं नामोच्चार्य्य केशवो मत्स्यरूपी प्रीयतां, नारायणः कूर्म्मरूपी प्रीयतामिति क्रमेण तत्तन्नामानि उदीरयेदित्यर्थः।

ज्योतिर्गर्भाय ब्रह्मविदे।

वराहपुराणे एव अप्सरसः प्रति नारद उवाच—

इदानीं कथयाम्याशु व्रतं येन हरिः स्वयम्।
वरं दद्याद्भर्त्तृभावं स च वै यातिं शोभनाः!॥

शोभना इति सम्बोधनं चकारस्वरसात् वरदान— हरिभर्त्तृ-भावौ द्वावपि फले।

वसन्ते शुक्लपक्षस्य द्वादशी या भवेत् शुभा।
तस्यामुपोष्य विधिवत् सश्रीकं हरिमर्च्चयेत्॥
पर्य्यङ्कास्तरणं कृत्वा नानास्तरणसंयुतम्।

तत्र लक्ष्मीपतिं देवं रूप्यं कृत्वा निवेशयेत् ।
तस्योपरि ततः पुष्पैर्मण्डलं कारयेद्बुधः ।
नृत्य-वादित्रघोषैश्च जागरन्तत्र कारयेत् ।
मनोभवायेति शिरस्त्वनङ्गायेति वै कटिम् ।
कामाय बाहुमूलन्तु कुसुमास्त्राय चोदरम् ।
मन्मथायेति वै पादौ हरये इति सर्व्वतः ।
पुष्पैः सम्पूज्य देवेशं मल्लिकाजातिभिस्तथा ।
पश्चाच्चतुर आदाय इक्षुदण्डान् सुशोभनान् ।
चतुर्द्दिक्षु न्यसेत्तस्य देवस्य प्रणतो नृप ।
एवं कृत्वा प्रभातेषु प्रदद्याद्ब्राह्मणाय च ।
वेद वेदाङ्ग युक्ताय सम्पूर्णाङ्गाय धीमते ।
ब्राह्मणांश्च ततो भोज्य व्रतमेतत् समापयेत् ।
व्रतस्यान्ते ततो विष्णुर्भर्त्ता वै भविता ध्रुवम् ।
कृत्वायत[1]प्रणामन्तु पृष्ठं गर्व्वेण च ध्रुवम् ।
व्रतेन देवदेवेशं पतिं लब्धाऽभिमानतः ।
अवसानेऽपहरणं गोपालैर्वो भविष्यति ।
पराहृतानां कन्यानां देवो भर्त्ता भविष्यति ॥

अत्र मल्लिकाजातीरूपकुसुमयोर्यद्यपि ग्रीष्मे पयोदागमे च निर्झरस्तथापि यथाकथञ्चिदनयोरन्वयो बोद्धव्यः ॥

इति भर्त्तृद्वादशीव्रतम् ॥

---

१ D अकृत्वा मत् ।

मत्स्यपुराणे—

चैत्रे मासि सिते पक्षे द्वादश्यां नियतव्रतः ।
स्थापयेदव्रणं कुम्भं सिततण्डुलपूरितम् ॥
नानाफलयुतं तद्वदिक्षुदण्डसमन्वितम् ।
सितवस्त्रयुगच्छन्नं सितचन्दनचर्च्चितम् ॥
नानाभक्ष्यसमाकीर्णं सहिरण्यञ्च शक्तितः ।
ताम्रपात्रं गुडोपेतं तस्योपरि निवेशयेत् ॥
तस्मादुपरि कामन्तु कदलीदलसंस्थितम् ।
कुर्य्याच्छर्करयोपेतां रतिन्तस्य च वामतः ॥
अग्रतोऽन्नं ततो दद्यात् गीतवाद्यञ्च कारयेत् ।
तदभावे कथां कुर्य्यात् काम-केशवयोर्नरः ॥
कामनाम्ना हरेरर्च्चां स्नापयेद्गुडवारिणा ।
शुक्लपुष्पाक्षततिलैरर्च्चयेन्मधुसूदनम् ॥
कामाय पादौ सम्पूज्य जङ्घे सौभाग्यदाय च ।
ऊरू स्मरायेति पुनर्मन्मथायेति वै कटिम् ॥
शुक्लोदरायेत्युदरमनङ्गायेत्युरो हरेः ।
मुखं पद्ममुखायेति बाहू पञ्चशराय वै ॥
पुनः सर्व्वात्मने मौलिमर्च्चयेन्मधु[1]सूदनम् ।
ततः प्रभाते तं कुम्भम्[2] ब्राह्मणाय निवेदयेत् ॥
[3][ब्राह्मणान् भोजयेद्भक्त्या यथा च लवणादृते ।
भक्त्या तु दक्षिणां दद्यादिमं मन्त्रमुदीरयेत् ।]

---

१ B D इति केशवम् । २ A उदकुम्भम् । ३ A [ ] पद्यं नास्ति ।

प्रीयतामत्र भगवान् कामरूपी जनार्द्दनः ।
हृदये सर्व्वभूतानां च आनन्दोऽभिधीयते ॥
अनेन विधिना सर्व्वं मासि मासि समाचरेत् ।
उपवासी त्रयोदश्यामर्च्चयेद्विष्णुमव्ययम् ॥
फलमेकञ्च सम्प्राश्य द्वादश्यां भूतले स्वपेत् ।
ततस्त्रयोदशे मासि घृतधेनुसमन्विताम् ॥
शय्यां दद्यादनङ्गाय सर्व्वोपस्करसंयुताम् ।
कालञ्च कामदेवञ्च शुक्लां गाञ्च पयस्विनीम् ॥
वासोभिर्द्दिजदाम्पत्यं पूज्य शक्त्या विभूषणैः ।
शय्यागवादिकं दद्यात् प्रीयतामित्युदीरयेत् ॥
होमः शुक्लतिलैः कार्य्यः कामनामानुकीर्त्तनात् ।
गव्येन सर्पिषा तद्वत् पायसेन च धर्म्मवित् ॥
विप्रेभ्यो भोजनं दद्यात् वित्तशाठ्यविवर्ज्जितः ।
इक्षुदण्डांस्तथा दद्यात् पुष्पमालाश्च शक्तितः ॥
यः कुर्य्याद्विधिनानेन मदनद्वादशीमिमाम् ।
सर्व्वपापविनिर्मुक्तः प्राप्नोति हरिसाम्यताम् ॥
इह लोके वरान् पुत्रान् सौभाग्यञ्च समश्नुते ।
यः स्मरः स स्मृतो विष्णुरानन्दात्मा महेश्वरः ॥
सुखार्थी कामरूपेण स्मरेत्तं जगदीश्वरम् ।

इति मदनद्वादशीव्रतम् ।

अत्र द्वादश्यां पूजा एकफलाशनं त्रयोदश्यामुपवासस्तुर्द्दश्यां पारणमिति प्रतिमासं क्रमः । त्रयोदशे मासि घृतधेन्वादिः ।

ब्रह्मपुराणे—

त्रयोदशीषु सर्व्वासु कामः पूज्योऽथ वा नरैः।
यात्रोत्सवश्च विधिवत् कर्त्तव्यश्चाथ विष्णवे॥
त्रयोदश्यान्तु दयिता स्वयं भर्त्त्रा प्रियेण तु।
आत्मपूजा च कर्त्तव्या पूजनीया गृहे स्त्रियः॥

लिङ्गपुराणे— कामेश्वरकुण्डमधिकृत्य।

चैत्रे मासि सिते पक्षे त्रयोदश्यान्तु मानवाः।
स्नानं ये तत्र कुर्व्वन्ति ते कामसदृशा नराः॥

अत्र कामसदृशनरत्वं काम्यम्।

महाजनपरिगृहीतवाक्यम्—

चैत्रशुक्लत्रयोदश्यां दमनं मदनात्मकम्[१]।
कृत्वा सम्पूज्य यत्नेन वीजयेद्व्यजनेन तु॥
ततः सन्तुष्टचित्तः कामः पुत्रपौत्रसमृद्धिदः।

पूजामन्त्रौ—

एह्येहि भगवन् काम रतिप्रीतिसदाकर।
[२]सर्व्वेषान्तु प्रियो भावस्त्वत्प्रसादान्मनोभव!॥
नमोऽस्तु पुष्पवाणाय जगदाह्लादकारिणे।
मन्मथाय जगन्नेत्र रतिप्रीतिकराय ते॥

अतिशयितपुण्या चेयं त्रयोदशी भविष्यपुराणोक्तेः।

शिष्टपरिगृहीतशैवागमः—

मधुमासे तु सम्प्राप्ते शुक्लपक्षे चतुर्द्दशी।

१ D चन्दनात्मकम्। २ D सर्व्वे शम्भुप्रिया भावाः।

ख्याता मदनभञ्जीति सिद्धिदा सुमहोत्सवा ॥
तत्र ये मूलनक्षत्रे समूलद्मनोच्चयम् ।
निवेदयति गौरीशे तेषां चैत्रार्चनाफलम् ॥

शिष्टपरिगृहीतवाक्यम्—

चैत्रे मासि चतुर्द्दश्यां भवेत्काममहोत्सवः ।
जुगुप्सितोक्तिभिस्तत्र गीतवाद्यादिभिर्नृणाम्[१]
श्रवणे तुष्यते कामः पुत्रपौत्रसमृद्धिदः ॥

ब्रह्मपुराणे—

उपोष्याथ चतुर्द्दश्यां पौर्णमास्यां हरिं यजेत् ।
पौर्णमास्यां निकुम्भस्तु पिशाचैः सहितो बली ॥
याति योद्धुं पिशाचांश्च सिकताद्वीपवासिनः ।
तदर्थं गच्छतां तेषां मध्याह्ने तु गृहे गृहे ॥
पूजा कार्य्या प्रयत्नेन नित्यं शक्त्या यथाक्रमम्
पिशाचं मृण्मयं कृत्वा रम्यं तृणमयञ्च वा ॥
गन्धैर्माल्यैस्तथा वस्त्रैरलङ्कारैर्मनोहरैः ।
भक्ष्यैरन्धोपिकापूपैर्मांसैर्द्दिव्यैश्च पानकैः ॥
स्वजातिविहितैः पेयैर्नैवेद्यैश्च पृथग्विधैः ।
आयुधैर्विविधाकारैः कुचोपानद्यष्टिभिः ।
शूकान्नपूरिकायुक्तैः सितैर्भक्ष्यैश्च भक्तया ॥

शूकान्नं यवादि भक्ता चर्म्मपुटः ।

---

१. D पुष्पैः ।

शिक्यकुन्दानविटपैर्बद्धनद्धैश्च चर्म्मणा ।
तन्त्रीवाद्यैर्मनोज्ञैश्च तथा पान्थोपयोगिभिः ।

चर्म्मणा बद्धनद्धैश्चर्म्मबन्धनबद्धैः पान्थोपयोगिभिः कृचोपानहा-
दिभिः ॥

मध्याह्नतस्तु सम्पूज्य प्राप्ते चन्द्रोदये पुनः ।
पूर्व्ववत् पूजयेत्तन्तु वित्तशाठ्यविवर्ज्जितः ॥
ततः कृतस्वस्त्ययनो ब्राह्मणन्तु विसर्ज्जयेत् ।
तमनुव्रजनीयन्तु द्वितीयदिवसे सति ॥
गृहाददूरे यो यस्य पर्व्वतस्तमथारुहेत् ।

तमनुव्रजनीयं विसर्ज्जयेदिति सम्बन्धः ॥

पुनर्गृहं प्रविश्यैव कर्त्तव्यः सुमहोत्सवः ।
गीतवादित्रनिर्घोषैर्जनकोलाहलैस्तथा ॥
कृत्वा तृणमयं सर्पं दृढैः काष्ठैः सुवेष्टितम् ।
क्रीड़ितव्यं पुरग्रामनगरेषु च सर्व्वदा ॥
सन्त्रासो दुष्टसर्पाणां तत्क्षणाद्येन जायते ।
त्रिभिश्चतुर्भिर्द्दिवसैः कर्त्तव्यः खण्डखण्डशः ॥
[1]सर्पोपसर्पगमनं तच्च खण्डं गृहे गृहे ।
पूजितव्यं सुगुप्ते तु रक्षितव्यञ्च वत्सरम् ॥

तथा—

मन्दे चार्के गुरौ वापि वारेष्वेतेषु चेच्चिकी ।
तत्राश्वमेधिकं पुण्यं स्नातस्य लभते नरः ।

---

१ D सर्पा ।

दानमक्षयतां याति पितृणाञ्चापि तर्पणम् ॥

मन्दे शनौ।

विष्णुः— चैत्री चित्रायुता चेत् स्यात् तस्याञ्चित्रवस्त्रप्रदानेन सौभाग्यं फलमाप्नोति।

विष्णुधर्मोत्तरे—

सम्प्राप्य चैत्रमासस्य शुक्लां पञ्चदशीं नरः।
चित्रवस्त्रयुगं दत्वा सोपवासो द्विजातये।
ब्राह्मणांस्तर्पयन् विप्राः सौभाग्यं महदाप्नुयात् ॥

अन्यब्राह्मणानां भोजनादिना तर्पणम्।

मत्स्यपुराणे महावराहस्य पुराणमाहात्म्यमधिकृत्य—
विष्णुनाभिहितं पुण्यं तद्वाराहमिहोच्यते ॥
मानवस्य प्रसङ्गेन कल्पस्य मुनिसत्तमाः।
चतुर्विंशसहस्राणि तत्पुराणमिहोच्यते ॥
काञ्चनं गरुडं कृत्वा तिलधेनुसमन्वितम्।
पौर्णमास्यां मधौ दत्वा ब्राह्मणाय कुटुम्बिने।
वराहस्य प्रदानेन पदमाप्नोति वैष्णवम् ॥

मधौ चैत्रे।

ब्रह्मपुराणे—

आषाढ्यामाश्वयुज्याञ्च पौष्याञ्चैत्र्याञ्च सर्व्वदा।
न गृह्णीयात् गवां क्षीरं सर्व्वं वत्साय निक्षिपेत् ॥

स्नातः सर्व्वपापैः प्रमुच्यते इत्युपक्रम्य शालग्रामे तथा चैत्रीमिति यमः।

अथ क्रमपूजा।

देवीपुराणे—

सर्व्वकामप्रसिद्ध्यर्थं पूजनीया यथा शिवा।
तथा ते कथयिष्यामि शृणु वत्स! समासतः॥
चैत्रादौ या समाख्याता पूजा सर्व्वार्थसाधनी।
तस्या भेदान् प्रवक्ष्यामि दृष्टापूर्त्तप्रसिद्धये।
अयां चित्रचर्चगां पूजां कृत्वा लाङ्गपदं लभेत्॥
तृतीयायान्तु वैशाखे रोहिण्यर्च्चे प्रपूजयेत्।
उदकुम्भप्रदानेन ब्रह्मलोके महीयते॥
इन्द्राग्निदैवते ऋक्षे पौर्णमास्यां तथैव च।
पूजां कृत्वा भवेद्ब्रह्मन् विगताघो नरोत्तमः॥

इन्द्राग्निदैवते विशाखानक्षत्रे।

अग्नेः परिग्रहः कार्य्यो दानं देयं द्विजातिषु।
त्रयाणामेकमादाय अग्निं देवं प्रपूजयेत्॥
अग्निहोत्री भवेत् पूत एतद्वर्णाश्रितं फलम्।
मूलर्च्चे पशुघातेन ज्यैष्ठे देवीं प्रपूजयेत्॥
सर्व्वान् कामानवाप्नोति भावशुद्धेन कर्म्मणा।
आषाढ़े मासि यो देवीमाषाढ़र्च्चे प्रपूजयेत्॥
सर्व्वान् कामानवाप्नोति देवीलोकञ्च गच्छति।
श्रावणे पूजयेद्देवीं प्रतिपद्यादितः क्रमात्।
ब्रह्ममूर्त्तिगतामृक्षे पुष्ये भौजङ्गमेऽपि वा॥

भौजङ्गमे अश्लेषानक्षत्रे।

अधिवासविधानेन पवित्रारोहणं भवेत् ।
ब्रह्माम्ब्युमागणेशस्य नागस्कन्दतनुस्थिता ॥
रविमातङ्गरूपा तु मङ्गला सा तदा भवेत् ।
वृषविष्णुश्रिताकारा कामरुद्रसमाकृतिः ॥
शक्ररूपा प्रयष्टव्या देवी गन्धस्रगादिभिः ।
प्रथमे चाश्रमे पूजां गृह्यकर्म्म व्रतादि च ॥
कृत्वा कामानवाप्नोति विगताघो मुनीश्वर! ।
प्रोष्ठकर्णासु (?) कर्त्तव्या पूजा जागरणं निशि ॥
महोत्सवविधानेन सौत्रा[1]मणिफलं लभेत् ।
अष्टम्यां रोहिणीऋक्षे सोपवासस्तु पूजयेत् ॥
विष्णुलोकमवाप्नोति सर्व्वकामसमृद्धये ।
तत्रैवं कारयेद्देवीं वेदरूपां महोदयाम् ॥
कन्यास्थे च रवाविषे पूजनीया यथाविधि ॥

वृषे आश्विने ।

भौजङ्गीं तिथिमाश्रित्य यावच्चन्द्रार्कसङ्गमम् ।
तत्रापि महती पूजा कर्त्तव्या पितृदैवते ।
ऋक्षे पिण्डप्रदानन्तु ज्येष्ठपुत्रो विवर्ज्जयेत् ॥
आहवेषु विपन्नानां जलाग्निस्तृगुपातिनाम् ।
चतुर्द्दश्यां भवेत् पूजा अमावस्यान्तु कामिकी ॥
कन्यास्थे च रवाविषे शुक्लाष्टम्यां प्रपूजयेत् ।
सोपवासो निशार्द्धे तु महाविभवविस्तरैः ॥

---

१ D-मुनि ।

पूजां समारभेद्देव्या नक्षत्रे वारुणेऽपि वा।

वारुणे शतभिषानक्षत्रे।

पशुघातः प्रकर्त्तव्यो गवलाजवधस्तथा॥
बलिक्षेपं सुरेन्द्राणां कृत्वा सर्व्वाश्रियां नयेत्।
युद्धयात्रा तु कर्त्तव्या या पुरा संप्रकीर्त्तिता।
शक्रोत्सवे महापुण्ये तस्मिन् देवीं प्रपूजयेत्।
तुलास्थे दीपदानेन पूजा कार्य्या महाफला॥
दीपवृक्षः प्रकर्त्तव्यो दीपचक्रमथापि वा।
दीपयात्रा प्रकर्त्तव्या चतुर्द्दश्यां कुहूषु च॥
सीनीवाली यदा वत्स तदा कार्य्यं महाफलम्।
सर्व्वमेव प्रकर्त्तव्यं बलिपूजामहोत्सवम्॥
देवतानां समुत्थानं कुर्य्यात् पौष्णे तु बुद्धिमान्।
नीराजनं प्रकर्त्तव्यं नृ-नाग-तुरगादिषु॥
कार्त्तिक्यां कारयेत् पूजां यागं देवीप्रियं सदा।
ब्रह्म-विष्णु-शिवादीनां तत्र पूजा महाफला॥
गवोत्सर्गः प्रकर्त्तव्यो नीलं वा वृषमुत्सृजेत्।
सर्व्वयज्ञफलं ब्रह्मन् प्राप्नुयादविचारयन्॥
अस्त्राणां पूजनं तत्र कर्त्तव्यं सर्व्वसिद्धये।
मार्गे पूजा प्रकर्त्तव्या अहिर्व्रध्नर्चगा शुभा॥

अहिर्व्रध्न उत्तरभाद्रपदानक्षत्रम्।

सोमर्क्षे कारयेत् पूजां सर्व्वकामफलप्रदाम्।
पुष्ये पुष्याभिषेकस्तु कर्त्तव्यः पूजयेज्जयाम्॥

चतुर्थ्यां शुक्लमाघस्य महापूजा विधीयते।
माघ्यां पूजा प्रकर्त्तव्या देवीं वै मङ्गलां यजेत्॥
फाल्गुने पूजयेद्देवीं चण्डिकेति च या मता।
मातृणाञ्च विशेषेण तत्र पूजा विधीयते॥
एवं सर्व्वगता देवी सर्व्वदेवतनुस्थिता।
पूजिता विधिना वत्स सर्व्वकामान् प्रयच्छति॥

इति क्रमपूजा।

चैत्रादीति प्रथमवाक्यस्य एवं सर्व्वगतेत्यादि चरमवाक्यस्य च परामर्शादेषां कर्म्मणां श्रुताश्रुतफलानां सर्व्वकामावाप्तिजनकत्वेन स्थिते एतदन्तर्गतानां [1][केषाञ्चित् श्राद्धादीनां निरपेक्षतत्तत्-फलकामनया शिष्टैराचर्य्यमाणत्वात्, कल्पतरुकारप्रभृतिभिरेत-दन्तर्गतानां चैत्र्यां चित्रवर्गां पूजामित्यादि, तत्रैव महती-पूजेत्यादि वाक्यानामन्यविधि] निरपेक्षविधितयाऽवतारितत्वाच्च फलनिरपेक्षत्वमपि अनयैव दिशाऽमीषां वाक्यानामर्थोऽपि नेतव्यः। प्रथमे चाश्रम इति अग्निहोत्री भवेत् पूत इति दर्शनाच्च नाच्च कर्म्मणि तदन्येषामधिकार इति न वाच्यं एतदेकदेशार्थं अन्येषा-मप्यविगीतानुष्ठानात् पापक्षयसर्व्वकामावाप्तिरग्निहोत्रब्रह्मचारिणो-रन्येषान्तु सर्व्वकामावाप्तिः फलमिति विवेकः।

इति महासान्धिविग्रहिकठक्कुर श्रीवीरेश्वरात्मज महासान्धि-विग्रहिकठक्कुर श्रीचण्डेश्वरकृतौ कृत्यरत्नाकरे चैत्रतरङ्गः॥

---

१ D पुस्तके [ - ] चिह्नितांशः पतितः।

# अथ वैशाखकृत्यम् ।

ब्रह्मपुराणे ।

मेषं जिगमिषौ सूर्य्ये शैशिरं हृतकम्बलम् ।
अपास्य देहाद्देवेभ्यः पूजा कार्य्या प्रयत्नतः ॥

मेषसंक्रान्तिदिने संक्रमणपूर्व्वाच्छिशिरसमयकृत्यं हृतकम्बलं देवदेहादपास्य देवपूजां कुर्य्यादित्यर्थः ।

विष्णुधर्म्मोत्तरे—

मेषसंक्रमणे भानोर्मेषदानं महाफलम् ।

आग्नेयपुराणे—

पुष्ये वा जन्मनक्षत्रे अयने विषुवेषु च ।
ग्रहणे च व्यतीपाते संक्रान्तौ च दिनक्षये ॥
यानमश्वमनड्वाहं हेमरूप्यं मणीन् तिलान्[1] ।
ये प्रयच्छन्ति पापेषु निरताः सर्व्वदा मुने ॥
न तेषां भैरवः पन्थाः दत्तेषां दानमित्युत ।

पापेषु निरताः सर्व्वदेत्यभिधानात् कृतबहुतरपापानां पापक्षयार्थमिदं दानम् । तथाच गोतमेनाश्वस्य पापनिष्क्रयण-द्रव्यत्वमुक्तं ।

महाजनपरिगृहीतवाक्यम्—

मसूरं निम्बपत्राभ्यां पिबेन्मेषगते रवौ ।
विषं न क्रमते तस्य यावदब्दो न पूर्य्यते ॥

---

१ A सिताम् ।

संक्रान्तिदिन एवैतत् कर्त्तव्यं पिबेदित्यभिधानात् पानीयेन सहाविकृतस्य पानम्।

## अथ प्रतिमासपूजा।

तत्र देवीपुराणे।

ब्रह्मोवाच।

वैशाखे मासि कर्त्तव्या पूजा पाटलया सदा।
सर्व्वान् कामानवाप्नोति ज्यैष्ठे पद्मार्च्चनैः सदा॥
आषाढ़े विल्वकह्लारैरीप्सितं लभते फलम्।
नवमल्लिकया पूजा नभसि च महाफला॥
कदम्बैश्चम्पकैरेव नभस्ये सर्व्वकामदा।
पूजा पङ्कजमालत्या इषेऽभ्युदयदायिनी॥
शतपत्रिकया पूजा कार्त्तिके सर्व्वकामिकी।
मार्गे नीलोत्पलैः पूजा पौषे कुब्जकजा शुभा॥
माघे च कुन्दकुसुमैर्मुकुरेण[1] च फाल्गुने।
शतपत्रैस्तथा चैत्रे यः कुर्य्याद्द्विजसत्तम॥
लभते सर्व्वयज्ञानां सर्व्वदानफलं तथा।
पूजनं फलपुष्पैश्च वस्त्रपत्रस्रजानुजम्।
हन-क्षीर-दधि-तक्रैः सर्व्वकामफलप्रदम्॥
एवं भावानुरूपेण यस्तु पूजां प्रकल्पयेत्।
शिवाय स भवेद्वत्स शिवस्थानचरः सदा।

---

१ B कुरुवकेण च।

# प्रतिमास पूजाविधिः ।

भविष्यपुराणे ।

वैशाखे मासि राजेन्द्र नवम्यां पक्षयोर्द्वयोः ।
उपवासपरो भक्त्या पूजमानस्तु चण्डिकाम् ॥
नाम्ना भगवतीत्येवं कृत्वा चाश्ममयीं विभो ।
रूपेणाष्टभुजां शुभ्रां पूर्णचन्द्रनिभाननाम् ।
मुकुराणां स्रजोभिश्च पूजयेद्विधिवन्नृप ॥
चन्दनागुरुकर्पूरैर्धूपेन विजयेन च ।
नैवेद्यं गुड़पूपांश्च धूपं वा गुग्गुलुं नृप ॥
एवं सम्पूज्य विधिवत् कुमारीभोजनं ततः ।
गोपुच्छक्षालणजलं स्नान-प्राशनयोर्मतम् ॥
हंसकुन्देन्दुसङ्काशं तेजसा ब्रह्मसन्निभः ।
विमानवरमारूढ़ो देवीलोके महीयते ॥

अत्रापि नक्तभोजनं मासव्यापि प्रक्रमात् । मुकुरो मल्लिका विजयधूपः परिभाषोक्तः, नैवेद्यं दद्यादिति शेषः ।

भविष्यपुराणे—

वैशाखे मासि राजेन्द्र! यः कुर्य्यान्नक्तभोजनम् ।
दध्योदनञ्च भुञ्जानो जितक्रोधो जितेन्द्रियः ॥
गोष्ठे सायमधःशायी निशायामेकवस्त्रभृत् ।
नियमञ्च यथोद्दिष्टं सामान्यं सर्व्वमाचरेत् ॥
वैशाख्यां पौर्णमास्याञ्च कुर्य्यात् स्नानं घृतादिभिः ।
सूर्य्यायालङ्कृतां श्वेतां दद्याद्गां तरुणीं नृप! ॥

शङ्खकुन्देन्दुवर्णाभैर्महायानैरलङ्कृतैः ।
श्वेतैर्गरुड़संयुक्तै र्गच्छेदर्कस्य मन्दिरम् ॥
सर्व्वातिशयरूपाभिर्नारीभिः परिवारितः ।
नीलोत्पलसुगन्धाभिर्मोदते कालमक्षयम् ॥

अत्रोपवासदिनं सप्तमीं त्यक्त्वा मासं व्याप्य नक्तभोजनं प्रकृतमासि निशायामेकवस्त्रभृत् गोष्ठेऽधःशायी भवेत् । सप्तम्याम् पौषसप्तमीदयवत् सर्व्वं नियमादिकमाचरेदिति गोष्ठे इत्यादेरित्यस्यार्थः ॥

वैशाख्यां पौर्णमास्याञ्च घृतादिभिः स्नानं मासि पूर्णे श्वेतायास्तरुण्या गोर्दानम् भानवे ।

महाभारते—

निस्तरेदेकभक्तेन वैशाखं यो जितेन्द्रियः ।
आयुष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम् ॥

निस्तरेदतिवाहयेत् ।

स्कन्दपुराणे—

वैशाखं यः क्षिपेन्मासमेकभक्तेन मानवः ।
स याति श्रेष्ठतां लोके पूजितो धनवानपि ॥

भविष्यपुराणे—

तण्डुलोदकपिष्टेन कृत्वा वै मेरुपर्व्वतम् ।

तण्डुलोदकपिष्टेन उदकपिष्टेन तण्डुलेनेत्यर्थः ।

(?) निचुतार्चसमायुक्तं सर्व्वधातुविभूषितम् ।
नानालङ्कारसम्पन्नं नानामाल्यविभूषितम् ।

सर्व्वरत्नसमायुक्तं स्थापयेद्भास्करालये ।
महाव्योमव्रतञ्चैतत् वैशाखे या समाचरेत् ।
नानाविधैर्विमानैश्च सूर्य्यलोके महीयते ।
क्रमादागत्य लोकेऽस्मिन् क्रीड़ते मानसेऽचले ।

अत्रापि चैत्रवत् कार्त्तिकीयकामव्रतसामान्यधर्म्मान्वयः ।

इति स्त्रीणां कामव्रतम् ।

विष्णुधर्म्मोत्तरे—

अपूपानां प्रदानेन वैशाखे स्वर्गमश्नुते ।

राजमार्त्तण्डे—

तुलामकरमेषेषु प्रातःस्नायी सदा भवेत् ।
हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम् ॥

वराहपुराणे—

वराह उवाच—

ये यजन्ति वरारोहे माधवे मासि शंसिताः ।
अहं तत् प्रतिगृह्णामि माधवे यज्ञयाजिनाम् ॥
दत्वा निष्कसहस्राणि यत् फलञ्च वसुन्धरे! ।
मासेव माधवे यष्टा फलं प्राप्नोति मानवः ॥

शंसिता नियमकृशाः ।

मत्स्यपुराणे—

वैशाखे पुष्पलवणं वर्ज्जयित्वा तु गोप्रदः ।
भूत्वा विष्णुपदे कल्पं स्थित्वा राजा भवेदिह ॥

वामनपुराणे—

> गन्धांश्च माल्यानि तथा वैशाखे सुरभीणि च ।
> देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये ॥

ब्रह्मपुराणे—

> इरा नामाप्सराः पूर्व्वं सक्ता विश्वावसोर्यदा ।
> गीतनृत्यैस्तथा देवान् नास्तुवन्मन्दचेतना ॥
> वासवेन ततः शप्ता जाताऽरण्ये हिमाचले ।
> मनोज्ञपुष्पतां प्राप्ता कल्पे वैवस्वते सति ॥
> अथ फुल्लान्तु तां दृष्ट्वा वैशाखे मासि माधवीम् ।
> स्त्रीपुत्रमित्रभृत्यैश्च सहितः सुसमाहितः ॥
> सुवासास्त्वनुलिप्ताङ्गः परितुष्टेन चेतसा ।
> समीपस्थो विधानेन तामादौ पूजयेत् क्रमात् ॥
> अर्घैः पुष्पैर्भक्ष्यभोज्यैर्दीपधूपैः सुगन्धिभिः ।
> ततः प्रदक्षिणीकृत्य दिव्यामप्सरसञ्च ताम् ।
> गृहीत्वा परया भक्त्या ब्रह्मणे तु निवेदयेत् ॥
> तत्पुष्पाणां सहस्रन्तु विष्णवे च निवेदयेत् ।
> ततः प्रदक्षिणीकृत्य दिव्यामप्सरसञ्च ताम् ।
> इह लोके च पुण्यार्थं स्वर्गायान्ते च सर्व्वदा ॥
> अथ रुद्रेन्द्रार्कदेव-वसु-नागेभ्य एव च ।
> लक्ष्म्यै क्षीरोदकन्यायै दुर्गायै कश्यपाय च ॥
> नीलाय नागपतये ब्राह्मणेभ्यस्ततः क्रमात् ।
> स्त्रीपुत्रमित्रभृत्येभ्यो ज्येष्ठपुत्रक्रमेण तु ॥

रक्तसूत्रेण सुप्रोतां स्रजञ्च परमात्मने।
निवेदयित्वा तां देवीं सुगन्धां सर्व्ववल्लभाम्।
तत्रैव भोजनं भुङ्क्ते सभृत्यज्ञातिबान्धवः॥
तत्पुष्पाढ्यं पिबेत् पानं स्वजातिविहितं शुचिः।
[1]शृणुयात् गीतवाद्यादि पश्यंश्चैव सुनर्त्तकान्॥

आग्नेयपुराणे—

वैशाखे रुद्रनामानं पूजयित्वा वृषान्वितम्।
धेनुं तिलमयीं दद्यात् सर्व्वोपस्करसंयुताम्॥
एतद्रुद्रव्रतं नाम महापातकनाशनम्।
कृत्वा रुद्रव्रतं याति यस्मान्नावर्त्तनं पुनः॥

तथा तत्रैव।

वैशाखे पुष्पलवणं वर्ज्जयेद्दशगोप्रदः।
विष्णोर्विज्ञापयेत् कल्प स्थित्वा राजा भवेदिह।
एतत् कान्तिव्रतं नाम कान्तिकीर्त्तिफलप्रदम्॥

यमः—

सर्व्वपातकसङ्गात्तु कामतो वाऽप्यकामतः।
शुद्धिन्तस्य प्रवक्ष्यामि स्वर्गसाधनमेव च॥
शुक्लैः कृष्णैर्यथालब्धैर्दाविंशदङ्गुलोच्छ्रितः।
राशिस्तिलैः समे देशे कर्त्तव्यः पुरुषायतः॥
प्रतिमाऽष्टाङ्गुलोत्सेधा सौवर्णा विभवे सति।

१ D शृण्वंश्च गीतवाद्यादि पश्यंश्च नटनर्त्तकान्।

क्षौद्रेण पयसा दध्ना घृतेनापूरयेद्द्रान् ।
यथाविभवविस्तारं ब्राह्मणे श्रोत्रियेऽर्थिनि ॥
दद्यान्माघे च वैशाखे विषुवे चोत्तरायणे ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

शुक्लैः कृष्णैस्तिलैरित्यन्वयः । यथालब्धैर्दातृप्राकाम्यलब्धैः द्वात्रिंशदङ्गुलोच्छ्रितो दात्रङ्गुलेन, पुरुषायतो दातृपुरुषायतः । प्रतिमाऽत्र दातृप्रतिकृतिः अष्टाङ्गुलाऽपि प्रतिमा दात्रङ्गुलेनैव दातुः सन्निहितत्वात् ।

मानक्रियायामुक्तायामनुक्ते मानकर्त्तरि ।
मानकृद्यजमानः स्याद्विदुषामेष निश्चयः ॥
अष्टाङ्गुलादिमानन्तु यत्र यत्रोपदिश्यते ।
तत्र तत्र बृहत्पर्व्वग्रन्थिभिर्मिनुयात् सदा ।
इति छन्दोगपरिशिष्टवचनाच्च ।

[1]उत्क्षिप्य तिलराशेरुपरि धार्य्या विभवे सतीति वचनात् तथाविधविभवाभावे विनाप्यष्टाङ्गुलसौवर्णिप्रतिमया फलं । माघे चेत्यादि प्रत्येकमेवान्वयस्वरसात् माघवैशाखविषुवोत्तरायणानां प्रत्येकमेव समयत्वं । दानसागरे त्वविभवपक्षेऽन्येनापि तैजसेन प्रतिमा कार्य्येति लिखितम् ।

अत्र ग्रहणं श्रेष्ठमिति प्रकरणे ।

---

१ D उत्क्षेप्या ।

पुण्यनदीमुपक्रम्य। देवीपुराणे—

वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा।
एवं सर्व्वेषु पर्व्वेषु चन्द्रे सर्व्वकलाश्रुति॥
तृतीयायाञ्च वैशाख्यामष्टम्यां कुजवासरे।
चतुर्द्दश्याञ्च कृष्णायां भौमाह्ने पितृतर्पणम्।
कर्त्तव्यं सर्व्वकामानां पूरणाय द्विजोत्तमैः॥

तृतीयायां वैशाख्यामिति सामानाधिकरण्ये भेदे माना-भावात् वैशाखपूर्णिमायाः पूर्व्वार्द्धेन प्राप्तत्वाच्च, अष्टम्यां कुजवासरे इत्यादि साहचर्य्यादष्टम्यपि कृष्णैवेति केचित्।

शनैश्चरस्य वारेण वारेणाङ्गारकस्य च।
कृष्णाष्टमी-चतुर्द्दश्यौ पुण्यात् पुण्यतमे स्मृते॥

इति गौड़ीयवाक्यानुसाराच्च।

आग्नेय पुराणे—

यो ददाति द्विजेभ्यस्तु तृतीयायामुपानहौ।
वैशाखशुक्लपक्षे तु सकचकरकान्विते॥
न तस्य मानसो दाहो मर्त्त्यलोकेऽभिजायते।
सर्व्वव्याधिविनिर्मुक्तः श्रियं पुत्रांश्च विन्दति॥
कालादिह यदायाति मम लोकान् द्विजोत्तमाः।
यानञ्चाश्वतरीयुक्तं सर्व्वहेममयं शुभम्॥
दिव्याङ्गनाभिराकीर्णं सर्व्वरत्नविभूषितम्।
उपतिष्ठति विप्रेन्द्र सर्व्वकामफलप्रदम्॥

यद्विजेभ्य इति बहुवचनं प्रयोगबहुत्वापेक्षम्।

भविष्यपुराणे—

यत् किञ्चिद्दीयते दानं स्वल्पं वा यदि वा बहु ।
तत् सर्व्वमक्षयं स्यादै तेनासावक्षया स्मृता ॥

विष्णुधर्म्मोत्तरे—

वैशाखशुक्लपक्षे तु तृतीयायां द्विजोत्तमाः! ।
यद्ददाति नरश्रेष्ठस्तदप्यक्षयमुच्यते ॥

अत एवेयमक्षया तृतीया प्रसिद्धा—

विशेषेण तथा दानमक्षतानां महाफलम् ।

ब्रह्मपुराणे—

वैशाखशुक्लपक्षे तु तृतीयायां जनार्द्दनः ।
यवानुत्पादयामास युगञ्चारब्धवान् कृतम् ॥
ब्रह्मलोकात्त्रिपथगां पृथिव्यामवतारयत् ।
तस्यां कार्य्यो यवैर्होमो यवैर्विष्णुं समर्च्चयेत् ॥
यवान् दद्याद्द्विजातिभ्यः प्रयतः प्राशयेद्यवान् ।
पूजयेच्छङ्करं गङ्गां कैलासञ्च हिमाचलम् ॥
भगीरथञ्च नृपतिं सागराणां सुखावहम् ।
स्नानं दानं तपः श्राद्धं जपहोमादिकञ्च यत् ॥
श्रद्धया क्रियते तच्च तदानन्त्याय कल्पते ।
सिन्धोस्तीरे विशेषेण सर्व्वमक्षयमुच्यते ॥

अत्र वासुदेवदेवताक एव होम उपक्रमे कीर्त्तनात् । यवप्राशनं तद्विकारद्वारा साक्षात्तृप्त्यनर्हत्वादित्याहुः । तच्च अदृष्टार्थत्वात् । सिन्धोर्नद्याः ।

विष्णुः—

वैशाखशुक्लतृतीयायामुपोषितोऽक्षतैर्वासुदेवमभ्यर्च्य तान्येव हुत्वा दत्वा च पापेभ्यः पूतो भवति, यच्च तस्मिन्नहनि प्रयच्छति तदक्षयतामाप्नोति, अभ्यर्च्य तृतीयायामित्यन्वयः। तेनार्था-द्वितीयायामुपवासः। अक्षतैर्यवैर्होमो वासुदेवमुद्दिश्यैव।

भविष्यपुराणे—

तृत्येषा तिथिरित्येवं तृतीया लोकपूजिता।
सदा विशेषतः पुण्या वैशाखे मासि या भवेत्॥
वारिदानं प्रशस्तं स्यान्मोदकानाञ्च भारत!।
वैशाखे मासि राजेन्द्र तृतीयाचन्दनस्य च॥

तृतीयां तृतीयायाम्।

वारिणा तुष्यते देवी मोदकैर्भीम एव च।
दानात्तु चन्दनस्येह कञ्जजो नात्र संशयः॥

कञ्जजो ब्रह्मा।

या चैषा कुरुशार्दूल! वैशाखे मासि वै तिथिः।
तृतीया साऽक्षया लोके गीर्व्वाणैरिह शस्यते॥
योऽस्यां ददाति करकान् वारि-धान्यसमन्वितान्।
स याति पुरुषो वीर लोकान् वै हेलिमालिनः॥

करकान् कमण्डलून् वारिधान्यसमन्वितान् वारिपूर्णान् उपरिनिहितधान्यपूर्णभाजनांश्चेति कृत्यकल्पतरु-कामधेनु-पारिजातानुसारः। हेलिमालिनः सूर्य्यस्य, मूलीभूतभविष्यपुराण-जयानिर्वन्ध-वर्षदीपिकासु वारिबीजसमन्वितानिति पाठो दृष्टस्तत्र

वाजमन्त्रं इति व्याख्येयम् । एतानि वाक्यानि अक्षयतृतीया-व्रतबोधकवाक्यमध्ये भूपाल-कामधेनु-कल्पतरुषु लिखितानि पारिजाते तु प्रत्येकं फलश्रुतेः स्वतन्त्रविधिमभिप्रेत्य लिखितानि।

देवीपुराणे—

तृतीयायान्तु वैशाखे रोहिण्यर्च्चं प्रपूजयेत् ।
उदकुम्भप्रदानेन ब्रह्मलोके महीयते ॥

तत्रैव ।

कलधौतन्तथा चान्नं घृतञ्चापि विशेषतः ।
अस्यां दत्तन्त्वक्षयं स्यात्तेनेयञ्चाक्षया स्मृता ॥
इत्येषा कथिता राजन् तृतीया तिथिरुत्तमा ।
यामुपोष्य नरो राजन् वृद्धिमृद्धिं श्रियं लभेत् ॥

यमः—

वैशाखशुक्लपक्षे तु तृतीयायां तथैव च ।
गङ्गातोये नरः स्नात्वा मुच्यते सर्व्वकिल्बिषैः ॥
यत्किञ्चिद्दीयते दानं स्वल्पं वा यदि वा बहु ।
तत्सर्व्वमक्षयं स्याद्वै तेनेयमक्षया स्मृता ॥

विष्णुधर्म्मोत्तरे—

भक्ष्यभोज्यसमायुक्तां वर्द्धनीं यः प्रयच्छति ।
तृतीयायाञ्च वैशाखे ब्रह्मलोके महीयते ॥

ब्रह्मपुराणे—

युगाद्येषु युगान्तेषु श्राद्धमक्षयमुच्यते ।

इत्युपक्रम्य—

वैशाखशुक्लपक्षे तु तृतीयायां कृतं युगम्।

विष्णुपुराणे—

पानीयमप्यत्र तिलैर्विमिश्रम्
दद्यात् पितृभ्यः प्रयतो मनुष्यः।
श्राद्धं कृतं तेन समाः सहस्रम्
रहस्यमेतत् पितरो वदन्ति॥

एतच्च युगाद्यान्तरेऽपि फलं तथैवोपक्रमात्।

शिष्टपरिगृहीतभविष्योत्तरे—

वैशाखस्य तृतीयायां श्रीसमेतं जगद्गुरुम्।
नारायणं पूजयेत्तु पुष्पधूपविलेपनैः॥
वस्त्रालङ्कारसम्भारैर्नैवेद्यैर्विविधैस्तथा।
ततस्तस्याग्रतो धेनुर्लवणस्याढ़केन तु॥
कार्य्या कुरुकुलश्रेष्ठ! चतुर्भागेन वत्सकः॥
अविचर्म्मोपरि स्थाप्य कल्पयित्वा विधानतः।
शास्त्रोक्तक्रमयोगेन ब्राह्मणायोपपादयेत्।
श्रीधरः श्रीपतिः श्रीमान् श्रीशः सम्प्रीयतामिति!॥
अनेन विधिना दत्वा धेनुं विप्राय भारत!।
गोसहस्रं दशगुणं प्राप्नोतीह न संशयः।

मत्स्यपुराणे ईश्वर उवाच—

शर्करासप्तमीं वक्ष्ये तद्वत् कल्मषनाशिनीम्।
आयुरारोग्यमैश्वर्य्यं ययाऽनन्तं प्रजायते॥

माघस्य सिते पक्षे सप्तम्यां नियतव्रतः ।
प्रातःस्नात्वा तिलैः शुक्लैः शुक्लमाल्यानुलेपनः ।
स्थण्डिले पद्ममालिख्य कुङ्कुमेन सकर्णिकम् ।
तस्मिन्नमः सवित्रे तु गन्ध-धूपौ निवेदयेत् ।
स्थापयेदुदकुम्भन्तु शर्करापात्रसंयुतम् ।
शुक्लवस्त्रैरलङ्कृत्य शुक्लमाल्यानुलेपनैः ।
सुवर्णेन समायुक्तं मन्त्रेणानेन पूजयेत् ।
विश्वदेवमयो यस्माद्वेदवादेषु[1] पठ्यसे ।
सर्व्वस्यामृतमेव त्वं ततः शान्तिं प्रयच्छ मे ।
पञ्चगव्यन्ततः पीत्वा स्वपेत्तत्पार्श्वतः क्षितौ ।
सौरं सूक्तं स्मरन्नास्ते पुराणश्रवणेन तु
अहोरात्रे गते पश्चादष्टम्यां कृतनैत्यकः ।
तत् सर्व्वं वेदविदुषे ब्राह्मणाय निवेदयेत् ।
भोजयेच्छक्तितो विप्रान् शर्कराघृतपायसैः ॥
भुञ्जीतातैललवणं स्वयमप्यथ वाग्यतः ।
अनेन विधिना सर्व्वं मासि मासि समाचरेत् ।
संवत्सरान्ते शयनं शर्कराकलसा[2]न्वितम् ।
सर्व्वोपस्करसंयुक्तां तथैकां गां पयस्विनीम् ।
गृहञ्च शक्तिमान् दद्यात् समस्तोपस्करान्वितम् ।
सहस्रेणाथ निष्काणां कृत्वा दद्याच्छतेन वा ।

---

१ B वेदवादीनि । २ कलसा ।

निष्कः कर्षः पलं वा शक्त्यनुसाराद्व्यवस्था।

दशभिर्वाथ निष्केण तदर्द्धेनापि शक्तितः।
सुवर्णञ्च प्रदातव्यं पूर्व्ववत् स्वस्तिवाचनम्॥
न वित्तशाठ्यं कुर्व्वीत कुर्व्वन् दोषान् समश्नुते।
अमृतं पिवतो वक्त्रात् सूर्य्यस्यामृतविन्दवः॥
सन्निपेतुर्धरण्यां ये शालिमुद्गेक्षवः कृताः।
शर्करा परमा तस्मात् इक्षुसारामृतात्मिका॥
इष्टा रवेरतः पुण्या शर्करा हव्यकव्ययोः।
शर्करासप्तमी ह्येषा वाजिमेधफलप्रदा।
सर्व्वदुःखप्रशमनी पुत्रपौत्रप्रवर्द्धनी॥
यः कुर्य्यात् परया भक्त्या स परं ब्रह्म गच्छति।
कल्पमेकं वसेत् स्वर्गे ततो याति परां गतिम्।
इदमनघं शृणोति यः स्मरेद्वा
यदि पठतीह सुरेश्वरस्य लोके।
मतिमपि च ददाति सोऽपि देवै–
रमरवधूजनमालयाऽभिपूज्यः॥

इति मत्स्यपुराणे शर्करासप्तमीव्रतं समाप्तम्॥

ब्रह्मपुराणे—

वैशाखे शुक्लसप्तम्यां जाह्नवी जह्नुना पुरा।
क्रोधात् पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात्॥
तां तत्र पूजयेद्देवीं गङ्गां गगनमेखलाम्।
अष्टाविंशतिमे प्राप्ते विष्णुः कलियुगे सति।

शाक्यान् विनष्टधर्म्मांश्च बुद्धो भूत्वाऽप्रवर्त्तयत् ।
तत्र पूज्यो भविष्योऽसौ पुष्यादिदिवसत्रयम् ।
सर्व्वौषधैः सर्व्वगन्धैः सर्व्वबीजैश्च सर्व्वदा ।
बुद्धार्चास्नपनं कार्य्यं शाक्योक्तैर्वचनैः शुभैः ॥

अर्चा प्रतिमा ।

सुविचित्राणि कार्य्याणि चैत्यदेवगृहाणि च ।
पूज्याः शाक्याश्च यतयः पुस्तकाहारचीवरैः ॥
पुष्पवस्त्रान्नदानञ्च देयं दीनजनस्य च ।
त्रिदिनश्चोत्सवः कार्य्यो नटनर्त्तनसङ्कुलः ॥

अत्र वैशाखशुक्लसप्तम्यामित्युपक्रमात् पुष्यादिदिवसत्रयमित्यभिधानात् पुष्ययुक्तवैशाखशुक्लसप्तम्यां बुद्धार्चादि गङ्गापूजा तु केवलायामपि ।

देवीपुराणे—

ब्रह्मोवाच ।

सहकारफलैः स्नानं वैशाखे ह्यष्टमीषु च ।
आत्मानं देवतां स्नाप्य मांसी-वालकवारिभिः ।
लेपनं फलकर्पूरं धूपं पञ्चसुगन्धिकम् ।
देव्याः पूजाञ्च कुर्व्वीत केतक्या चम्पकेन च ।
शर्कराक्षीरनैवेद्यं कन्याविप्रेषु भोजनम् ।
आत्मनः पारणं तत्र दक्षिणां शक्तितो ददेत् ॥
अपराजिता भवानी च शिवानाम्ना च वाचयेत् ।
प्रीयतां सर्व्वकालं मे ईप्सितं मे प्रयच्छतु ॥

सर्व्वतीर्थाभिषेकन्तु अनेनाप्नोति भार्गव!।
सूर्य्यलोको भवेदन्ते तत्तुल्यो जायते सदा॥

अत्रापि शुक्लैवाष्टमी प्रक्रमात् वैशाख इत्येकवचनानुरोधा-दष्टमीष्विति बहुवचनमविवक्षितार्थं बाध्यत्वात्। सहकारः सुरभिचूतः, मांसी जटामांसी बालकं वार इति प्रसिद्धं लेपनं लिप्तीकरणं पञ्चसुगन्धिकं सिन्धूकागुरुकर्पूरसितचन्दन गुग्गुलुधूपमिति केतकी हेमकेतकी।

विष्णुधर्मोत्तरे।

वैशाखशुक्लद्वादश्यां रुक्मदानं तथैव च।
अत्र तथैव चेति वचनात् पूर्व्वप्रस्तुतमक्षय्यं फलम्।

वराहपुराणे—

दुर्वासा उवाच।

वैशाखेऽप्येवमेवन्तु संकल्प्य विधिना नरः।
तद्वत् स्नानं मृदा कृत्वा ततो देवालयं व्रजेत्॥
तत्राराध्य हरिं भक्त्या एभिर्मन्त्रैर्विचक्षणः।
जामदग्न्याय पादौ तु उदरं सर्व्वधारिणे॥
मधुसूदनायेति कटिमुरः श्रीवत्सधारिणे।
क्षत्रान्तकाय बाहू च मणिकण्ठाय कण्ठकम्॥
स्वनाम्ना शङ्खचक्रे तु शिरो ब्रह्माण्डधारिणे।
एवमभ्यर्च्च्य मेधावी प्राग्वत्तस्याग्रतो घटम्॥
विन्यसेत् स्थगितं वस्त्रयुगया च विशेषतः।
वैणवेन तु पात्रेण तस्मिन् संस्थापयेद्धरिम्॥

जामदग्न्येन रूपेण कृत्वा सौवर्णमग्रतः ।
दक्षिणे परशुं हस्ते तस्य देवस्य कारयेत् ॥
सर्व्वगन्धैश्च सम्पूज्य पुष्पैर्नानाविधैस्तथा ।
ततस्तस्याग्रतः कुर्य्याज्जागरं भक्तिमान् नरः ।
प्रभाते विमले सूर्य्ये ब्राह्मणाय निवेदयेत् ॥
आसीद्राजा महाभागो वीरसेनो महाबलः ।
अपुत्रश्च महातीव्रं तपस्तेपे महायशाः ॥
चरतस्तु तपो घोरं याज्ञवल्क्यो महामुनिः ।
आजगाम महायोगी तं द्रष्टुं[1] नातिदूरतः ॥

राजोवाच ।

कथं मे भविता पुत्रः स्वल्पायासेन वै द्विज ।
एतन्मे कथय प्रीत्या भगवन् प्रणतस्य वै ॥
एवमुक्तो मुनिस्तेन पार्थिवेन यशस्विना ।
आचख्यौ द्वादशीमेमां वैशाखसितपक्षजाम् ॥
स हि राजा विधानेन पुत्रकामो विशेषतः ।
उपोष्य लब्धवान् पुत्रं नलं परमधार्म्मिकम् ।
योऽद्यापि कीर्त्त्यते लोके पुण्यश्लोको नरोत्तमः ॥
प्रासङ्गिकं फलं ह्येतत् व्रतस्यास्य महामुने ।
यत् पुत्रो जायते वित्तं विद्या वा कान्तिरुत्तमा ।
इह जन्मनि किञ्चिच्च परलोके शृणुष्व मे ॥
कल्पमेकं ब्रह्मलोकमुषित्वाऽप्सरसां कुलैः ।

---

१ A B दूरं ।

क्रीड़न्ति ते पुनः सृष्टौ जायन्ते चक्रवर्त्तिनः।
त्रिंशत्कल्पसहस्राणि जीवन्ते नात्र संशयः॥

एवमेवेत्यनेन दशम्यां नियतात्मवानित्यादि करतोयेन मानव इत्यन्तेन बोधितेतिकर्त्तव्यता मत्स्यद्वादशीव्रतीयाः परामृश्यन्ते। संकल्प्य एकादश्यां निराहार इत्यादि वाक्योच्चारणं कृत्वा तद्वदिति ततः प्रभाते विमले इत्यादि कुण्डमालिख्य वै जले इत्यन्तेनोक्तेतिकर्त्तव्यतां कृत्वा। कण्ठकं गन्धं, स्वनाम्नेति शङ्खचक्रनाम्ना वस्त्रयुगया वस्त्रयुगेन वैणवेन लित्यनेन घटोपरिस्थितवैणवपात्रधारणं विवच्चितम्। सर्व्वगन्धाः परिभाषायां, ब्राह्मणाय निवेदयेदिति प्रतिपादयेत्।

ब्रह्मपुराणे।

वैशाख्यां पौर्णमास्यान्तु सृष्टाः कमलयोनिना।
तिलाः कृष्णाश्च गौराश्च हृष्टये सर्व्वदेहिनाम्॥
तस्मात् कार्य्यं तिलैः स्नानं तत्राग्नौ जुहुयात्तिलान्।
निवेदयेच्च विधिवत्तिलपात्रन्तु विष्णवे।
तिलतैलेन दीपाश्च देया देवेभ्य एव च॥
सोदकैश्च तिलैः स्नानं कर्त्तव्यं पितृतर्पणम्।
तिलैः समधुभिर्युक्तं ब्राह्मणेभ्यश्च भोजनम्॥
दातव्या दक्षिणा चापि तिलैर्मधुयुतैः सह।
मन्त्रं जपेच्च पौराणं पारम्पर्य्यक्रमागतम्॥
ॐ तिलाः सोमदैवत्याः सुरैः सृष्टास्तु गोसवे।
स्वर्गप्रदाः स्वतन्त्राश्च ते मां रक्षन्तु नित्यशः॥

दद्यादनेन मन्त्रेण तिलपात्राणि तत्र च ।
सप्तभ्यस्त्वथ पञ्चभ्यो ब्राह्मणेभ्यस्तु कीर्त्तयेत् ॥
प्रीयतां धर्म्मराजस्तु देवांश्चान्यानथापि वा ।
एवं कृते स मुक्तः स्यात् पापैर्जन्मशतार्ज्जितैः ॥

प्रीयतां धर्म्मराज इति कीर्त्तयेदिति सम्बन्धः ।

यमः ।

वैशाख्यां पौर्णमास्यान्तु ब्राह्मणान् सप्त पञ्च वा ।
चौद्रयुक्तैस्तिलैः कृष्णैर्वाचयेद्यदि वेतरैः ॥
[1]प्रीयतां धर्म्मराजेति यद्वा मनसि रोचते ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

तिलैर्ब्राह्मणभोजनं प्रीयतां धर्म्मराज इति वाचयेत् यद्वा मनसि रोचते तद्वाचयेत् ।

तेनायमर्थः । अमुकदेवः प्रीयतामिति तदितरं वासुदेवमुद्दिश्य वाचयेदिति ।

तथाच ब्रह्मपुराणम्—

तिलैः समधुभिर्युक्तं ब्राह्मणेभ्यश्च भोजनम् ।
तथा । वैशाख्यामेव विधिवद्भोजयेद्ब्राह्मणान् दश ।
चिरात्रमुषितः स्नात्वा कृशरं प्रयतः शुचिः ॥
गौरान् वा यदि वा कृष्णान् तिलान् चौद्रेण संयुतान् ।
दत्वा दशसु विप्रेषु तानेव स्वस्ति वाचयेत् ॥

---

१ A B वैशाख्यां पौर्णमास्यान्तु ।

प्रीयतां धर्म्मराजेति पितॄन् देवांश्च तर्पयेत्।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति॥

स्वस्ति वाचयेदिति दानाङ्गं स्वस्तिवाचनं प्रीयतां धर्म्मराज इति दाता कीर्त्तयेत् पितॄन् देवांश्च तर्पयेत् इति तर्पणं पार्व्वणश्राद्धं। एतन्मधुतिलैरेव दानसंकल्पानन्तरमेव प्रीयतां धर्म्मराजेति कीर्त्तनं ततो दानं ततः स्वस्तिवाचनं ततः श्राद्धमिति दानसागरः।

एतत्तु दानं ब्राह्मणक्षत्रियकर्त्तृकमेव।

चतुर्थभक्तक्षपणं वैश्ये शूद्रे विधीयते।
त्रिरात्रं त्विह धर्म्मज्ञ विहितं ब्रह्मवादिनोः॥

इति महाभारतवाक्यबलात्। सागरोऽप्येवम्।

अयुतायुतञ्च तिष्ठेत स्वर्गलोके न संशयः।
मामेव तु न पश्येत्तु न च पापेन लिप्यते॥

मामेव यममेवेत्यर्थो यमवक्तृकत्वात्।

जावालः।

घृतान्नमुदकुम्भञ्च दद्याद्विप्रे विशेषतः।
निर्द्दिश्य धर्म्मराजाय गोदानफलमाप्नुयात्॥
सुवर्णतिलयुक्तैश्च ब्राह्मणान् सप्त पञ्च च।
तर्पयेदुदपात्रैस्तु ब्रह्महत्यां व्यपोहति॥

घृतान्नं पक्वान्नं पक्वं क्षीर-हविषोरित्यन्ये, निर्द्दिश्य निवेद्य। महाभारते।

वैशाख्यां पौर्णमास्यान्तु तिलान् दद्याद्द्विजातिषु।

तिला भक्षयितव्याश्च मद्देवालभनञ्च तैः

मद्देवेति विधिस्तवार्थम् । आलभनमुद्वर्त्तनम् ।

कार्य्यं सततमिच्छद्भिः श्रेयः सर्व्वात्मना गृहे ॥

विष्णुः ।

वैशाख्यां पौर्णमास्यान्तु ब्राह्मणसप्तकं क्षौद्रयुक्तैस्तिलैः सन्तर्प्य धर्म्मराजानं प्रीणयित्वा पापेभ्यः पूतो भवति । अत्र वैशाखी विशाखायुक्ता तन्नक्षत्रयुक्तसकलपौर्णमासीमाहचर्य्यात्, क्षौद्रं मधु ।

देवीपुराणे । वैशाखमधिकृत्य ।

इन्द्राग्निदैवते ऋक्षे पौर्णमास्यान्तथैव च ।

पूजां कृत्वा भवेद्ब्रह्मन् विगताघो न संशयः ॥

इन्द्राग्निदैवतं विशाखा । पूजा देव्याः ।

महाजनपरिगृहीतवाक्यम्—

मोदकानुदकुम्भांश्च पक्वान्नसहितान्नरः ।

दत्वाऽस्यां पौर्णमास्याञ्च ब्रह्मलोके महीयते ॥

आषाढ़ी कार्त्तिकी माघी वैशाखीषु च यत् कृतम् ।

तदनन्तफलं प्रोक्तं स्नानदानजपादिकम् ॥

भविष्यपुराणे वैशाख्यधिकारे सुमन्तुरुवाच—

सोमव्रतन्तथा चान्यच्छङ्करप्रीतये शृणु ।

ताम्रपात्रं पयःपूर्णं कृत्वा तत्स्थञ्च शङ्करम् ॥

प्रच्छाद्योपरि वस्त्रेण गन्धपुष्पार्च्चितं नृप ! ।

शिवभक्ते द्विजे दद्यात् भोजयित्वा विधानतः ॥

प्राच्यां समुद्गते चन्द्रे प्रतीच्याञ्च रवौ गते ।

पौर्णमास्यान्तु वैशाख्यां दद्यात् पात्रं शिवाग्रतः।
प्रीयतां मे महादेवः सोममूर्त्तिर्जगत्पतिः।
तस्मै विप्राय तं पात्रमर्पयेद्भक्तितः शनैः॥
एतत् सोमव्रतं नाम कृत्वा सोमान्तिकं व्रजेत्।
रुद्रलोकात् परिभ्रष्टो भवेत् जातिस्मरो नरः।
[1]पूजाभ्यासबलेनैव पुनः शिवपुरं व्रजेत्॥

प्रीयतां मे महादेवः सोममूर्त्तिर्जगत्पतिरित्युक्त्वा पूजाभ्यासे पौनःपुन्ये।

मत्स्यपुराणे।

ब्रह्मणाभिहितं पूर्व्वं यावन्मात्रं मरीचये।
ब्राह्मं तद्दशसाहस्रं पुराणं परिकीर्त्त्यते॥
लिखित्वा तच्च यो दद्यात् जलधेनुसमन्वितम्।
वैशाखे पौर्णमास्यां स ब्रह्मलोके महीयते॥

वैशाख्यधिकारे वसिष्ठः—

सुवर्णनाभं कृत्वा तु सखुरं कृष्णमार्गकम्।
तिलैः प्रछाद्य यो दद्यात् तस्य पुण्यफलं शृणु॥
ससमुद्रगुहा तेन सशैलवनकानना।
चतुरर्णा भवेद्दत्ता पृथिवी नात्र संशयः॥

कृष्णमृगसम्बन्धि चर्म्म।

विष्णुः।

अथ वैशाख्यां पौर्णमास्यां कृष्णाजिनं सखुरं सुवर्णशृङ्गल-

---

१ D पूजाभ्यासे लनेनैव।

भूषितं कृत्वा आविके वस्त्रे प्रसारयेत् ततस्तिलैः प्रच्छादयेत् सुवर्णनाभञ्च कुर्य्यात्। चतसृषु दिक्षु चत्वारि तैजसानि पात्राणि क्षीर-दधि-मधु-सर्पिः-पूर्णानि निधायाहिताग्नये ब्राह्मणाय वासो-युगाच्छादिताय दद्यात्।

मत्स्यपुराणे।

कृष्णाजिनप्रदानस्य विधिं कालं ममानघ!।
ब्राह्मणञ्च समाचक्ष्व तत्र मे संशयो महान्॥

श्रीमत्स्य उवाच।

वैशाखी पौर्णमासी च ग्रहणं चन्द्रसूर्य्ययोः।
पौर्णमासी तथा माघी आषाढ़ी कार्त्तिकी तथा।
उत्तरायणे च द्वादश्यां तस्यां दत्तं महाफलम्॥
आहिताग्निर्द्विजो यस्तु तद्देयं तस्य पार्थिव।
यथा येन विधानेन तन्मे निगदतः शृणु॥
गोमयेनोपलिप्ते तु शुचौ देशे नराधिप।
आदावेव समास्तीर्य्य शोभनं वस्त्रमाविकं॥

गोमयोपलेपादेव शुचित्वे प्राप्ते पुनः शुचाविति पदं गोमयोपलेपेऽपि कृते केशकीटादिवारणार्थम्।

ततः सशृङ्गं सखुरमास्तरेत् कृष्णमार्गकम्।

आस्तरेत् प्राग्ग्रीवमुपरिस्थलोमकञ्च "चर्म्माण्युत्तरलोमानि प्राग्ग्रीवाणीति कात्यायनवचनात्। मार्गकं मृगसम्बन्धि।

कर्त्तव्यं रुक्मशृङ्गन्तु रूप्यदन्तन्तथैव च।

मत्स्यपुराणे तथान्येष्वपि निबन्धेषु रूप्यदन्तमिति पाठो दृष्टः तेन दानसागरस्य रुक्मदन्तमिति पाठ उपेक्षितः।

लाङ्गूलं मौक्तिकैर्युक्तं तिलकन्नन्तथैव च।
तिलैरात्मसमं कृत्वा वाससाच्छादयेद्बुधः॥

आत्मसमं कृत्वा सर्व्वतः कृष्णाजिनाच्छादकं तिलं कृत्वेत्यर्थः।

सुवर्णनाभं तत्कुर्य्यादलङ्कुर्य्याद्विशेषतः।
रत्नैर्गन्धैर्यथाशक्त्या तस्य दिक्षु च विन्यसेत्॥

रत्नैरिति परिभाषोक्तनवरत्नमध्ये यथालब्धेन रत्नत्रयेण गन्धैरिति प्रसिद्धचन्दनादिभिः।

कांस्यपात्राणि चत्वारि तेषां दद्याद्यथाक्रमम्।
मृण्मयेषु च पात्रेषु पूर्व्वादिषु क्रमेण तु॥
घृतं क्षीरं दधि क्षौद्रमेवं कुर्य्याद्यथाविधि।

क्षौद्रं मधु।

चम्पकस्य तथा शाखामव्रणं कुम्भमेव च॥
बाह्योपस्थानकं कृत्वा शुचिचित्तो निवेशयेत्।
जीर्णवस्त्रेण पीतेन सर्व्वाङ्गाणि च मार्ज्जयेत्॥

एतच्चम्पकशाखान्वितस्य कुम्भस्य दानदेशाद्बहिः स्थापनं पीतवाससा दानोत्तरस्नानानन्तरमङ्गमार्ज्जनञ्च यजमानेन कर्त्तव्यं तस्यैव प्रकृतत्वात्।

धातुमयानि पात्राणि पादेष्वस्य प्रदापयेत्।
यानि कानि च पापानि मया लोभकृतानि च॥
लोहपात्रप्रदानेन प्रणश्यन्तु ममाशु वै।

तिलपूर्णन्तु तत् कृत्वा वामपादे निवेशयेत् ॥
यानि पापान्यकाम्यानि कर्म्मोत्थानि कृतानि तु।
कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥
मधुपूर्णन्तु तत् कृत्वा पादे वै दक्षिणे न्यसेत् ॥
परापवादपैशुन्यात् [1]पृष्ठमांसस्य भक्षणात् ॥
[2]तत्नोत्थितस्य पापस्य ताम्रपात्रात् प्रणश्यतु।
कन्यानृतं गवाश्चैव परदारप्रधर्षणम्।
रौप्यपात्रप्रदानाद्वै क्षिप्रं नाशं प्रयान्तु मे।
ऊर्द्धपादौ लिप्तौ कार्य्यौ ताम्रस्य रजतस्य तु ॥

सम्बन्धिनामिति विवक्षितम्।

कल्पतरौ तु—

ऊर्द्धपादे लिप्ते कार्य्ये इति पठित्वा एकवचनमविवक्षितमिति व्याख्यातम्।

ऊर्द्धपादावग्रपादौ तयोश्च वा क्रमेणैव पात्रारोपणं पश्चात् पादयोः तथाश्रुतेरिति दानसागरः।

जन्मजन्मसहस्रेषु कृतं पापं कुबुद्धिना।
सुवर्णपात्रदानात्तु नाशयाशु जनार्द्दन ॥
हेममुक्ताविद्रुमञ्च दाड़ीमं बीजपूरकम्।
प्रशस्तपात्रश्रवणे खुरे शृङ्गाटकानि च।

दानसागरे।

अत्राग्रपादद्वयस्य पात्रद्वयस्यानुपदिष्टस्यानेकसौवर्णपात्रस्य श्रवणे

---

१ B इथा-। २ D तत्रोत्थितस्य।

इति कर्णस्थानद्वयस्येति पद्मानामाधारतयाऽवगतेराधेयद्रव्याणामन्येषाञ्चाश्रुते हेममुक्तादीनां पद्मानां तत्राधेयत्वं यथासंख्यमुन्नेयम् । पात्रञ्च श्रवणे च इति पात्रश्रवणं अनिर्दिष्टस्थानस्य च सौवर्णपात्रस्य मध्यस्थान एव निवेशः ।

सुवर्णनाभिकं दद्यात् प्रीयतां वृषभध्वजः ।

इति पुनः सुवर्णनाभिकत्वश्रुतेः ।

एवं सुवर्णनाभं तत् कुर्य्यात् इति प्रथमग्रन्थेन मध्ये सुवर्णपात्रं स्थाप्यमिति सिद्धं द्विधा सुवर्णनाभिकत्वमित्युक्तम् ।

भूपालस्तु— मध्यप्रदेशे सुवर्णपात्रमघृतपूर्णं जन्मजन्ममहत्स्वेषु इत्यादिना मन्त्रेण निवेशयेत् ततो हेमादिपञ्चकं तत्र दद्यात् । तथा प्रशस्ते पात्रे श्रवणयोर्दद्यादित्याह स्म ।

युक्तञ्चैतत् ।

अन्ये तु श्रवणाधारकप्रशस्तपात्रे सुवर्णादिपञ्चकधारणमेकवाक्यत्वाद्युपरोधादित्याहुः ।

खुरे शृङ्गाटकानि सिङ्घान इति प्रसिद्धानि फलानि योज्यानि खुरेषु देयानीत्यर्थः ।

एवं कृत्वा यथोक्तेन सर्व्वशाकफलानि च ।

तत् प्रतिग्रहविद्विद्वानाहिताग्निर्द्विजोत्तमः ॥

एवं कृत्वेति खुरेष्वेव नानाजातीयशाकानि फलानि च नानाजातीयानि देयानीत्यर्थः ।

स्नातो वस्त्रयुगच्छन्नः स्वशक्त्या चाप्यलङ्कृतः ।

प्रतिग्रहस्य तस्योक्तः पुच्छदेशे महीपते ॥

सुवर्णनाभिकं दद्यात् प्रीयतां वृषभध्वजः।
अनेन विधिना दद्यात् न यावत् कृष्णमार्गकम् ॥
न स्पृश्यः स द्विजो राजन् चितियूपसमो हि सः।
दाने च [1]यज्ञकाले च दूरतः परिवर्ज्जयेत् ॥
स्वगृहात् प्रेष्य विप्रं तं मण्डले स्नानमाचरेत्।
पूर्णकुम्भेन राजेन्द्र शाखया चम्पकस्य च।
कृताचार्य्यस्य कलसं मन्त्रेणानेन मूर्द्धनि ॥

आचार्य्योऽत्र कृष्णाजिनविष्युपदेष्टा।

अत्र दानसागरे।

आप्यायतां समुद्रस्य ऋचो जप्यास्तु षोड़श।

इति पारिजातलिखितं। आप्यायतामित्येका ऋक्। समुद्रस्य दारकयेति पञ्चदश एवं षोड़श भवन्तीति व्याख्यातम्। कृष्णकृष्णाचलोदर इत्यादिमन्त्रस्तु न लिखितः।

तदस्त्रपिहितं कुम्भं नीत्वा चैष्यं चतुष्पथे।
कृतेनानेन या व्युष्टिर्न सा शक्या शतैरपि[2] ॥

व्युष्टिः फलम्।

फलं वक्तुं नृपश्रेष्ठ तथाप्युद्देशतः शृणु।
समग्रभूमिदानस्य फलं प्राप्नोत्यसंशयम् ॥
सर्व्वांश्च लोकान् जयति कामचारी विहङ्गमः।

कल्पतरुकारादिभिः—

आप्यायस्व समुद्रज्येष्ठा ऋचो जप्याश्च षोड़श।

---

१ B याव—। २ B सुरै—।

इति मत्स्यपुराणलिखितं आप्यायस्वेत्यष्टौ ऋचः समुद्रज्येष्ठा इत्यष्टौ ऋच इति व्याख्यातम्।

प्रतिग्रहस्य तस्योक्तः पुच्छदेशे महीपते!॥

इत्यतःपरम्।

तत एव समीपे तु मन्त्रमेनमुदीरयेत्।
कृष्णकृष्णाचलो देवः कृष्णाजिनवरस्तथा॥
तद्दानाद्धुतपापस्य प्रीयतां मे नमो नमः।
त्रयस्त्रिंशत् पुराणानां त्वमाधारे व्यवस्थितः॥
कृष्णोऽसि मूर्त्तिमान् साचात् कृष्णाजिन नमोऽस्तु ते।
सुवर्णनाभिकं दद्यात् प्रीयतां मे वृषध्वजः॥

इति मत्स्यपुराण एव लिखितं। मन्त्रस्यास्य दानेऽपि विनियोगो दर्शितः।

अतो मत्स्यपुराणे मन्त्रदर्शनात् कल्पतरुकारादिभिश्च तदुपादानात् निबन्धान्तरेषु [1]तददर्शनमवाधकम्।

आप्यायस्वेत्यष्टौ ऋच इत्यचाष्टमौ देवानामित्यादि समुद्रज्येष्ठा इत्यचाष्टमी यः पुरतो निरत इत्यादिका।

आभूतसंप्लवं यावत् स्वर्गं प्राप्नोत्यसंशयम्।
न पितुः पुत्रमरणं वियोगं भार्य्यया सह।
धनदेशपरित्यागं नैव चेहाप्नुयात् क्वचित्॥
कृष्णाचतं कृष्णमृगस्य चर्म्म
दत्वा द्विजेन्द्राय समाहितात्मा।

---

१ D तचोत्थितश्च। २ B तदर्शनम्।

यथोक्तमेतत् मरणं न शोचेत
प्राप्नोत्यभीष्टं मनसः फलञ्च ॥

अथ यजमान उक्तानां समयानामिच्छयाऽन्यतमे स्नातः शुचिर्गोमयोपलिप्ते अपनीतकेशकीटादौ भूमिभागे सुरूपं यथाशक्ति कम्बलमास्तीर्य्य तत्र सखुरं सशृङ्गं कृष्णाजिनमास्तीर्य्य सौवर्णशृङ्गरौप्यदन्तपंक्तिद्वयं मुक्तासर लाङ्गूलयुतं मध्यस्थानार्पित-सुवर्णं कृत्वा सर्व्वतस्तिलैराच्छाद्य वाससाच्छादयेत्।

ततः शक्त्या विशेषतो रत्नगन्धैश्चालङ्कुर्य्यात् ततः पूर्व्वादिदिक्षु चत्वारि कांस्यपात्राण्यन्यानि च मृण्मयानि पूर्व्वादिदिक्षु घृत-क्षीरदधिमधुपूर्णानि दद्यात्।

एवं कृत्वा प्रदानप्रदेशाद्बहिर्लिप्ते मण्डले स्नानयोग्ये प्रदेशे चम्पकशाखायां जलपूर्णमव्रणञ्च कुम्भं पीतञ्च जीर्णवस्त्रं शोभनं सर्व्वाङ्गमार्ज्जनाय शुभचित्तो निवेशयेत्।

ॐ यानि कानि च इति मन्त्रेण तिलपूर्णं लौहपात्रं पश्चा-द्वामप्रदेशे आरोपयेत्।

ॐ यानि पापान्यकाम्यानीतिमन्त्रेण मधुपूर्णं कांस्यपात्रं पश्चाद्दक्षिणपादयोरारोपयेत्।

ॐ परापवादेत्यादिमन्त्रेण मधुपूर्णं ताम्रपात्रमग्रदक्षिणपाद आरोपयेत्।

ॐ धान्यानृतमित्यादि मन्त्रेण तिलपूर्णं रौप्यपात्रं अग्रवाम-पाद आरोपयेत्।

ॐ जन्मजन्मसहस्रेषु इति मन्त्रेणाक्षतपूर्णं सौवर्णपात्रं मध्यस्थान आरोपयेत्।

ततो हेममुक्ताविद्रुमदाड़ीमवीजपूरकानि तत्र च दद्यात्। तथा प्रशस्ते पात्रे श्रवणयोर्दद्यात् खुरचतुष्टयं शृङ्गाटकयुक्तं कुर्य्यात्। सर्व्वशाकं फलानि च यथास्थानं दद्यात्। ततः प्रतिग्रहवेदिनं विद्वांसं ब्राह्मणमग्निहोत्रिणं स्नातं वस्त्रयुगेनाच्छाद्य यथाशक्ति हैमाङ्गुरीयकादिभिरलङ्कृत्य कृष्णाजिनपुच्छप्रदेशे उपविश्य।

ॐ कृष्ण कृष्ण इत्यादिमन्त्रमुदीर्य्य सुवर्णनाभिकं सोपस्करकृष्णाजिनं, (तुभ्यं) प्रीयतां मे वृषभध्वज इत्युक्तोदकपूर्व्वं दद्यात्। ततस्तं ब्राह्मणं स्वगृहात् प्रेष्य गन्धत्वा इति मण्डले स्नानं कुर्य्यात् आचार्य्यः पूर्व्वस्थापितकलशमादाय यजमानमूर्द्धोपरि स्वहस्तोत्क्षिप्तं निधाय—

ॐ आप्यायस्वेति ऋगष्टकं। ॐ समुद्रज्येष्ठेति ऋगष्टकं च जप्त्वा स्नपयेत्। ततो यजमानो जीर्णपीतवाससा मार्ज्जितोऽहते वाससी परिधायाचान्तः शुचिर्भवति। ततस्तत् पीतवस्त्रं कुम्भसहितं गृहीत्वा चतुष्पथे क्षेपनीयम्।

इति कल्पतरुभूपालयोरनुमतः प्रयोगः।

---

कालिकापुराणे।

कार्त्तिक्यामथ वैशाख्यामयनादिषु पर्व्वसु।
दत्त्वा दीपान् समुद्दीप्य देवस्याग्रे बलिं ततः॥

भूतानां देवदेवस्य राज्यादिषु भवेत् सुधीः।
स व्रती देवमामन्त्र्य स्वपेद्भूमौ हरिं स्मरन्।
उपलिप्य गृहं गत्वा मिताहारो निशि स्वपेत्॥
अपरेऽहनि पूर्व्वाह्णे गत्वा तत्रैव मन्दिरम्।
कारयेत्तु महास्नानं हराय विधिवच्छृणु॥
पञ्चविंशपलं लिङ्गे अभ्यङ्गं कारयेदथ।
शिवस्य सर्पिषा स्नानं प्रोक्तं शतपलेन च॥
तावता मधुना चैव दध्ना चैव ततः पुनः।
तावतैव हि चीरेण पञ्चगव्येन वा ततः॥
भूयः सार्द्धसहस्रेण पलानामचरेण तु।
रसेन कारयेत् स्नानं भक्त्या चोष्णाम्बुना ततः॥
शीताम्बुना तथोद्वर्त्त्य वस्त्रपूतेन मन्त्रवित्।
स्नापयेद्भक्तितो भूयो गन्धमन्त्रस्थितेन तु॥
विधिना स्नाप्य चानेन लिङ्गं रोचनया लिपेत्।
कुष्ठकुङ्कुम कर्पूरचन्दनागुरुयुक्तया॥
लेपयित्वा ततो लिङ्गमापीठान्तं घनं शुभम्।
नीलोत्पलसहस्रेण मालां बद्धा प्रपूजयेत्॥
अलाभे तु सहस्राणामर्द्धार्द्धेनापि पूजयेत्।
उत्पलानामभावे तु पत्रैश्च श्रीतरोर्यजेत्॥

श्रीतरोर्बिल्वस्य।

पद्मैर्वा चम्पकैर्वापि जात्या पाटलयाऽपि वा।
पुन्नागैः कर्णिकारैश्च श्वेतमन्दारजैरपि॥

दमनैर्मरुवकैर्वापि शमी-शुक्लार्क-नागरैः।
यथालाभश्च पत्रैर्वा निर्गन्ध्य च मलोज्झितैः॥
प्रपूज्य कारयेद्भक्त्या सुगन्धिं पुष्पमण्डलम्।
गुग्गुलुश्चाज्यसंयुक्तमगुरुं वाथितं दहेत्॥
सम्पूज्य गौरीभर्त्तारं गीतवादित्रमङ्गलैः।
शालिपिष्टोद्भवैः सिद्धैर्घृतपूर्णैः समुज्ज्वलैः॥
ततो नीराजनं दीपैः षट्त्रिंशद्भिश्च कारयेत्।
सर्षपैर्दधिमक्तैश्च दूर्व्वागोरोचनाक्षतैः॥
गन्धपुष्पोदकं दद्यात् भूयोऽर्घ्यं चिन्त्य शङ्करम्।
चामरं दर्पणञ्चैव दीपवृक्षं प्रदापयेत्।
धूपं साधारणञ्चैव सघटं पूर्णमेव च।
वितानक-ध्वजौ दद्यात् किङ्किणीवरकान्वितौ॥

साधारणं शिवपूजासाधारणं किञ्चिदपि पूर्णं घटं दद्यादित्यन्वयः।

अथाष्टाभिः क्षितिं पीड्य स्वाङ्गैर्भक्त्या तु दण्डवत्।
ततः किञ्चित् पठेत् स्तोत्रं शङ्करं भवशङ्करम्॥
प्रदक्षिणं ततो गच्छेत् शनैर्निर्माल्यवर्ज्जकः।
प्रणम्योच्चैस्ततः पश्चात् नैवेद्यञ्च निवेदयेत्॥
दीनान्धकृपणांश्चैव आगतांश्च बुभुक्षितान्।
तर्पयेदन्नपानेन सर्व्वानासनगोचरान्॥
पलानां द्वे सहस्रे तु महास्नानं प्रकीर्त्तितम्।
कुर्य्यादेतत् महास्नानं विधिनानेन धर्म्मवित्॥

कारयेद्यः शिवे भक्त्या तस्य पुण्यफलं शृणु ।
समुद्धृत्य शतं साग्रं कुलानां पापवर्जितः ॥
भवान्तं ब्रह्मलोकान्तं भुक्त्वा लोकानशेषतः ।
व्रजेत् क्रीड़ापुरे तस्मिन् विमानस्थोऽमरैर्युतः ॥
भुक्त्वा यथेप्सितान् भोगान् शिवसायुज्यतां व्रजेत् ।
मायावितानमुत्सृज्य चान्ते योगमवाप्नुयात् ॥
केवलेनाप्यथाज्येन दध्ना गव्येन चैव वा ।
पयसा पञ्चगव्येन मधुनेक्षुरसेन च ॥
यः कारयेत् महास्नानं विधिनानेन मन्त्रवित् ।
सोऽपि तेनैव मार्गेण गमिष्यति परं पदम् ॥
विधिनानेन निष्टोयः स्नानं तोयेन कारयेत् ।
नराणां विंशतिं यावत् सोऽपि यास्यति तत् पदम् ॥
अन्तरा म्रियते यस्तु अपूर्णे नियमे तथा ।
सोऽपि गच्छेत् पदं तत्तु शिवभक्त्या त्वतन्द्रितः ॥
एवमेव हि धर्मस्य राशिर्धर्मविवर्ज्जिते ।
मन्त्रयुक्तोऽर्चयेद्यस्तु नातः पुण्योऽस्ति धर्मवान् ॥

कूर्मपुराणे ।

वैशाख्यां पौर्णमास्यान्तु ब्राह्मणान् सप्त पञ्च वा ।
उपोष्य विधिना शान्तान् शुचिः प्रयतमानसः ॥
पूजयित्वा तिलैः कृष्णैर्मधुना च विशेषतः ।
प्रीयतां धर्मराजेति यद्वा मनसि रोचते[1] ॥

---

१ B वर्त्तते ।

यावज्जीवकृतं पापं तत्क्षणादेव नश्यति।

यदा मनसि रोचते इति इष्टदेवताप्रीतये वा॥

महासान्धिविग्रहिक ठक्कुरश्रीवीरेश्वरात्मज महासान्धि विग्रहिक ठक्कुरश्रीचण्डेश्वरविरचिते कृत्यरत्नाकरे—

वैशाखतरङ्गः।

---

## अथ ज्यैष्ठकृत्यम्।

तत्र महाफलमित्यनुवृत्तौ विष्णुधर्म्मोत्तरे।

वृषसंक्रमणे दानं गवां प्रोक्तं तथैव च।

महाभारते।

प्रपाः कार्य्याः परार्थन्तु नित्यन्तु द्विजसत्तमाः!।

भुक्तेऽप्यथ प्रदीयन्ते पानीयानि विशेषतः॥

निदाघकाले पानीयं यस्य तिष्ठत्यवारितम्।

स दुर्गं विषमं कृत्स्नं न कदाचिदवाप्नुयात्॥

तत्रैव।

छत्रदानात्तथा ज्यैष्ठे सर्व्वान् कामान् समश्नुते।

अत्र शुक्लादिज्यैष्ठमासान्तर्गताभिमतदिवसो ग्राह्यो मासोल्लेखात् कृष्णाद्युपष्टम्भकविरहाच्च।

छत्रोपानहयोर्दानात् ज्यैष्ठे मासि द्विजोत्तमाः।

अक्षय्यफलमाप्नोति नाकलोकञ्च गच्छति॥

आदित्य पुराणे।

ज्यैष्ठे मासि तिलान् दद्यात् पौर्णमास्यां विशेषतः।

अश्वमेधस्य यत् पुण्यं तत् प्राप्नोति न संशयः॥

विशेषत इति वचनात् ज्यैष्ठमासमात्रेऽपि तिलदानं तत्पूर्णिमायान्तु फलोत्कर्षः।

वामनपुराणे।

उदकुम्भाम्बुधेनुञ्च तालवृन्तं सचन्दनम्।
त्रिविक्रमस्य प्रीत्यर्थं दातव्यं साधुभिः सदा॥

इदृक्पाठः कृत्यसमुच्चय-कामधेनु-कल्पतरुषु प्रायो दृष्टः, क्वचित् पुस्तके उदकुम्भञ्च धेनुञ्च इति पाठः। तेनोदकुम्भञ्च धेनुञ्चेति सागर उपेक्षितः। उदकुम्भाम्बुधेनुमिति प्रायशो दर्शनात् तस्यैवोपादेयत्वम्[1]।

यत्र क्वचिदुदकुम्भञ्च धेनुञ्चेति दृश्यते तत्र स्वरूपधेनुरेव धेनोर्मुख्यार्थावाधात्। तालवृन्तं तालव्यजनमिति कल्पतरौ, तालपत्रव्यजनमिति पारिजाते, तालपरिमाणवद्वृन्तं व्यजनमिति चापरे। अनुक्रमेण मासदानकथने वैशाखानन्तरमासस्य विवक्षितत्वात् त्रिविक्रमदेवतत्वाच्च ज्यैष्ठस्य लाभः सदेत्यनेनार्थवादेनादरद्योतनम्।

भविष्यपुराणे।

सर्व्वदेवमयी देवी साक्षात् शूले व्यवस्थिता।
अनुग्रहाय लोकानां तस्मात्तां नित्यमर्च्चयेत्॥

सुमन्तुरुवाच।

हन्त ते वच्मि परमं रहस्यं पापनाशनम्।

---

[1] ख सदोषत्वं।

धन्यं[1] यशस्यमायुष्यं सर्व्वदेवैरनुष्ठितम् ॥
काष्ठं वा काञ्चनं वापि त्रिशूलं चण्डिकात्मकम् ।
स्नपयित्वा तु तं भक्त्या कुङ्कुमेन विलिप्यते ॥
श्वेतैर्विकसितैः पुष्पैः पूजयित्वा प्रणम्य च ।
गजे रथे हये वापि वृषभे वा नराधिप ॥
आरोप्य तु महाबाहो मणिकाञ्चनभूषितम् ।
नानावादित्रनिर्घोषैर्ब्रह्मघोषैश्च पुष्कलैः ॥
नयेदायतने देव्याः क्वतशोभं समन्ततः ।
दुर्गायाः पुरतः स्थाप्यं बिल्वपत्रैश्च पूजयेत् ॥
प्रणम्य शिरसा देवीं स्तुत्वा चापि क्षमापयेत् ।
अनेन विधिना देवीं पूजयित्वा तु चण्डिकाम् ॥
ब्रह्मेन्द्रविष्णुरुद्राद्यैः प्राप्नन्तु परमं पदम् ।
एवं सम्पूजयेद्देवीं त्रिशूलाकृतिमादरात् ॥
मुच्यते च नरः पापैर्विष्णुलोकञ्च गच्छति ।
एतन्महाव्रतं पुण्यं शूलपूजाख्यमुच्यते ॥
भक्तस्य ते मयाख्यातं महापातकनाशनम् ।

एतच्च पूजाप्रकरणे दृष्टतया पूजारूपमेव ॥

तथा। क्वत्वा हेममयं शूलं हेमपात्रादिषु स्थितम् ।
पुष्पमालापरिक्षिप्तं वितान[2]वरशोभितम् ॥
गृहीत्वा तु व्रजेद्वीर चण्डिकायतनं वरम् ।

---

१ D धर्म्म्यं। २ A विशाल—।

धारयेच्छिरसा पात्रं नानावाद्यगणैर्नृप ॥
कुर्य्यात् प्रदक्षिणञ्चापि प्रणम्य शिरसा शिवाम्।
विन्यसेद्विधिवद्वीर दुर्गायाः पुरतो नृप ॥
य एवं विन्यसेद्वीर त्रिशूलं विधिवन्नृप ॥
स गच्छति परं स्थानं यत्र देवश्चतुर्मुखः ॥

तथा। आलयः सर्व्वभूतानां त्रिशूलं देवनिर्म्मितम्।
तस्मात्तं पूजयेद्वीर ज्यैष्ठे मासि विशेषतः ॥

अत्र शूलाधारदुर्गापूजाख्यं कर्म्म धर्म्मार्थकाममोक्षभाजनत्वं फलं विशेषत इति वचनादन्यत्रापि मासे पूजा फलोत्कर्षस्तु ज्यैष्ठे।

तथा। शूलं पिष्टमयं कृत्वा ज्यैष्ठे मासि नराधिप।
कृत्वा च राजतं पद्मं स्वर्णेन[1] कृतकर्णिकम् ॥
निवेद्य श्रद्धया वीर भगवत्यै प्रपूज्यताम्।
कामतोऽपि कृतं पापं ब्रह्महत्यादि यद्भवेत् ॥
तत्सर्व्वं शूलदानेन देवी नाशयति ध्रुवम्।
विमानवरमारूढ़ो देवगन्धर्व्वपूजितः ॥
कल्पकोटिशतं साग्रं दुर्गालोके महीयते ॥

एतद्व्रतं पूजानन्तरं देव्यै शूलयुक्तं पद्मं निवेद्यम्।

महाभारते।

ज्येष्ठामूलन्तु यो मासमेकभक्तेन संक्षिपेत्।
ऐश्वर्य्यमतुलं श्रेष्ठं पुमान् स्त्री वाऽभिगच्छति ॥

---

१ D सुवर्ण—।

ज्येष्ठामूलं ज्येष्ठायुक्तपूर्णिमाव्यपदेश्यं ज्येष्ठमासमेवं संचिपेदतिवाहयेत्।

एतद्व्रतं भविष्येऽपि।

पिष्टेन कञ्जकं कृत्वा ज्येष्ठे मासि सवेदिकम्।

कञ्जकं पद्मम्।

पाद्यैः सम्पूज्य गन्धाद्यैर्नानामाल्यविभूषितैः।
शुद्धस्फटिकसङ्काशैर्विमानैः सर्व्वकामिकैः॥
वर्षकोटिशतं साग्रं सूर्य्यलोके महीयते।
क्रमादागत्य लोकेऽस्मिन् राजानं पतिमाप्नुयात्॥

एतदपि व्रतम्। अत्रापि षष्ठीदय सप्तमीदयान्यतरातिरिक्तमासव्याप्यैकभक्त चमाऽहिंसादिनियम ब्रह्मचर्य्य गुड़ान्नमिश्रशाल्यन्ननिवेदन करवीर गुग्गलुधूपोभयस्नानश्रद्धाः कार्य्याः।

देवीपुराणे।

ज्येष्ठे तु शङ्करी पूज्या रक्ताशोककुरुण्डकैः।
तथा देयञ्च नैवेद्यं घृतपूर्णाश्च कन्यकाः॥
भोजनीयास्तथा दद्याद्गोभूदानं हिरण्यकं।
तथा देया जलकुम्भाः सुगन्धैर्वासिताः शुभाः।
अनेन वारुणान् भोगान् देवी चिप्रं प्रयच्छति॥

कुरुण्टकैर्वाणपुष्पविशेषैः घृतपूर्णनैवेद्यमित्यन्वयः घृतपूर्णशब्दः पक्वान्नविशेषवचनः दद्यादिति हिरण्यदचिणां कन्याभ्यो दद्यादित्यर्थः।

शिष्टपरिगृहीतवाक्यम्।

यो वृषवर्त्तिनि सवितरि शिरीषवरबीजमेकमश्नाति-
स मानवः खगपतिसदृशो नागकुलैर्दृश्यते सततम्।

बीजवरत्वं कीटाद्यविद्धत्वम्।

ग्रहणकमधिकृत्य देवीपुराणे।

ज्यैष्ठे तु कौशिकी पुण्या।

स्नानदानादिना पुण्यहेतुरित्यर्थः।

महाभारते।

ज्यैष्ठे मासि विशेषेण प्रपादानन्तु कारयेत्।

विशेषेणेतिवचनादन्यत्रापि तीव्रसमये दानं आचारोपष्टम्भाच्च। प्रपा पानीयशालिका प्रथमदिने संकल्पः प्रत्यहं प्रपादानं स्वर्गस्य फलमत्र। व्रताधिकारे तत्रैव।

ज्यैष्ठे मासि द्विजश्रेष्ठ कृष्णाष्टम्यां त्रिलोचनम्।
यः पूजयति देवेशमीशलोकं व्रजेन्नरः॥

ब्रह्मपुराणे।

ज्यैष्ठकृष्णचतुर्द्दश्यां कृष्णरक्ता तु रेवती।
जाता जगति तस्मात्तां कृष्णैः पुष्पैः प्रपूजयेत्॥

अत्र कृष्णाष्टमी ज्यैष्ठशुक्लपक्षपूर्व्वा एवमन्यत्रापि तिथिकृत्ये यत्र कृष्णपक्षानन्तरं शुक्लपक्षकृत्याभिधानं मूले तत्र कृष्णादिरेव मासो बोद्धव्यः कृष्णपक्षानन्तरं ज्यैष्ठशुक्लपक्षव्रतकृत्याभिधानात्।

अत्रास्याश्रुतफलस्य पूजादिकर्म्मणः दृष्टोपायताश्रितौ तत्रेष्टेषु भावाभावयो र्निरुपाधिसोपाध्योः—

१ D श्रद्धा। २ B शतनैककराः।

अत्यन्तोत्कृष्ट— तदितरयोर्भावस्य निरुपाधेरत्यन्तोत्कृष्टस्य कल्पनालाघवात् स्वर्गस्यैव फलत्वम् ।

यमः ।

शुक्ले दशम्यां स्नात्वा तु पुण्डरीके तथैव च ।
सन्निहित्याममावस्यां प्रभासे वा तथा पुनः ।
औजसे तु नरः स्नात्वा मुच्यते सर्व्वकिल्बिषैः ॥

शुक्ले ज्यैष्ठे ।

ब्रह्मपुराणे ।

ज्यैष्ठशुक्लचतुर्थ्यान्तु जाता पूर्व्वमुमा सती ।
तस्मात् सा तत्र सम्पूज्या स्त्रीभिः सौभाग्यवृद्धये ॥
उपहारैश्च विविधैर्गीतनृत्यैः सवादितैः ।
होमैः पयोभिर्वस्त्रैश्च कुन्दपुष्पैः सुगन्धिभिः ॥

अत्रापि पूर्व्वन्यायेन स्वर्गफलम् ।

राजमार्त्तण्डे ।

ज्यैष्ठे मासि सिते पक्षे षष्ठी चारण्यसंज्ञिता ।
व्यजनेषुकरास्तस्यामटन्ति विपीनं (ने) स्त्रियः ॥

ईषुर्वाणः ।

भविष्ये ।

मासि ज्यैष्ठे महाबाहो यः कुर्य्यान्नक्तभोजनम् ।
भुञ्जानः पायसं वीर सर्पिषा मधुना सह ।
वीरासनो निशायां स्यादहर्गाः समनुव्रजेत् ॥

वीरासनमनिषद्यासनं ।

हितकारी गवां नित्यं गवां हिंसाविवर्ज्जितः।
उभयोरपि सप्तम्यां कुर्य्यात् स्नानादिकं विधिम्॥

उभयोः पक्षयोरित्यर्थः। स्नानादिकं विधिं पक्षयोः सप्तमी त्यादिना सर्व्वभोगविवर्ज्जितइत्यन्तेनाग्रे पौषे वक्ष्यमाणम्।

सूर्य्याय धेनुं दद्याच्च धूम्रवर्णामलङ्कृताम्।
नीलोत्पलसमप्रख्यैर्महायानैरनेकशः॥
महासिंहनिवद्धैश्च मोदते कालमक्षयम्॥

व्रतं मत्स्यपुराणे—

ज्येष्ठे पञ्चतपाः सायं हेमधेनुप्रदो दिवम्।
यात्यष्टमीचतुर्द्दश्यो रुद्रव्रतमिदं स्मृतम्॥

ज्येष्ठवर्त्तियावदष्टमीचतुर्द्दश्यधिकरणं पञ्चाग्नितया प्रसिद्धं व्रतमिदं। सायञ्चात्र हेम्नः स्वरूपधेनोश्च दानं धेनुपदमुख्यतानुरोधात्। समयप्रदीपे ज्येष्ठपदस्थाने पौषपदपाठः स लब्धातमूलः पुराणे निबन्धान्तरे च ज्येष्ठपदस्यैव दर्शनात्।

तथाचाग्नेयपुराणे—

ज्येष्ठे पञ्चतपाः सायञ्चतुर्द्दश्यष्टमीषु च।
यः करोति सुवर्णस्य धेनुदानं द्विजातये।
स याति चाक्षयं लोकं रुद्रव्रतमिदं स्मृतम्॥

सुवर्णस्य दानमित्यन्वयः।

ब्रह्मपुराणे ज्येष्ठमधिकृत्य।

शुक्लाष्टम्यां पुरा जाता शुक्ला देवी महाशनिः।
वधाय दानवेन्द्राणां शुक्लपक्षे ततो यजेत्॥

महाशनिरिति देवीनाम यजेदिति देवीं पूजयेदित्यन्वयः।
स्वर्गश्चात्र फलम्।

भविष्ये।

ज्येष्ठे मासि नृपश्रेष्ठ यः कुर्य्यान्नक्तभोजनम्।
शाल्यन्नमम्भसोपेतं भुञ्जानः पयसा सह।
उपवासपरो भक्त्या नवम्यां पूजयेदुमाम्॥

अष्टम्यां कृतोपवासो नवम्यां पूजयेदित्यर्थः।

ब्रह्माणीमिति वै नाम्ना श्वेतरूपेण रूपिणीम्।
पद्मपत्रेचणां भक्त्या नलिनैर्विविधैरपि।
कुङ्कुमागुरुकर्पूरैर्धूपेनागुरुणा तथा॥
अशोकवर्त्तिप्रमुखै र्नानाभक्ष्यैश्च पूजयेत्।
कुमारीं र्भोजयेच्चापि स्वशक्त्या ब्राह्मणीस्तथा॥
गोचीरप्राशनात् पूतस्ततो भुञ्जीत वाग्यतः।
भोजयित्वा स्त्रियः शक्त्या कुमारीश्च विशेषतः॥
प्रभयादित्यसङ्काशस्तेजसा वह्निसन्निभः।
विमानवरमारूढ़ो ब्रह्मलोके महीयते॥

अशोकवर्त्तिः पक्वान्नभेदः।

महाजनपरिगृहीतगौड़वाक्यानि—

ज्येष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता।
तस्यां स्नानं प्रकुर्व्वीत दानञ्चैव विशेषतः॥
यां काञ्चित्सरितं प्राप्य दद्याद्दर्भतिलोदकम्।
मुच्यते दशभिः पापैर्महापातकसंज्ञितैः॥

तथा— ज्यैष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
हरते दश पापानि तस्माद्दशहरा स्मृता ॥

तथा— गङ्गास्नानात् सिता ज्यैष्ठे दशमी हस्तसंयुता ।
हरते दश पापानि तस्माद्दशहरा स्मृता ।

तथा— ज्यैष्ठे शुक्लदशम्यान्तु भवेद्भौमदिनं यदि ।
ज्ञेया हस्तर्क्षसंयुक्ता सर्व्वपापहरा तिथिः ॥

गाङ्गेये—

ज्यैष्ठे मासि चितिसुतदिने शुक्लपक्षे दशम्यां
हस्ते शैलान्निरगमदियं जाह्नवी मर्त्त्यलोकम् ।
पापान्यस्यां हरति च तिथौ सा दशेत्याहुरार्य्याः
पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्य ॥

एतद्वाक्यपरामर्शान्मङ्गलवार-हस्तयुक्त ज्यैष्ठशुक्लदशम्यामेवंविधः पुण्यसञ्चयो दशविधपापक्षयस्य फलं गङ्गायां । सरिन्मात्रे तु दशविधपापनाशमात्रम् । क्वचिन्महापातकनाशनमिति पाठः ।

दशपापानि भविष्यपुराणे—

परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म्म मानसम् ॥

पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्व्वशः ।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥

अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥

विष्णुरुवाच ।

यमुनासलिले स्नात्वा पुरुषो मुनिसत्तम! ।
ज्यैष्ठे मास्यमले पक्षे द्वादश्यामुपवासकृत् ॥
समभ्यर्च्याच्युतं सम्यङ्मथुरायां समाहितः ।
अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं फलम् ॥
आलोक्यर्द्धिमतोऽन्येषामुदितानां सुवंशजे ।
एतत् किलोचुरन्येषां पितरः सपितामहाः ॥
कश्चिदस्मत्कुले जातः कालिन्दीपुलिने शुतः ।
अर्च्चयिष्यति गोविन्दं मथुरायामुपोषितः ॥
ज्येष्ठामूलासिते पक्षे समभ्यर्च्य जनार्द्दनम् ।
परां वृद्धिमवाप्स्यामस्तारिताः स्वकुलोद्भवैः ॥
धन्यानां कुलजः पिण्डान् यमुनायां प्रदास्यति ।
कस्मिन् काले समभ्यर्च्य तत्र कृष्णं समाहितः ॥

उपवासकृदित्यर्थादेकादश्यामुपवासः, आलोक्य ऋद्धिमित्यनुमीयते कुलोद्भवैः समभ्यर्च्य तारिता इत्यन्वयः उद्देश्यगतधन्यत्वकीर्त्तनेनोत्तरश्लोकः प्रशंसा एवञ्च पितृतारणं फलं, तच्च मथुरायाम् ।

विष्णुधर्म्मोत्तरे—

ज्यैष्ठे मासि सिते पक्षे द्वादश्यां जलधेनुका ।
दत्त्वा यथावद्विधिना प्रीणयत्यम्बुशायिनम् ॥

यथावद्विधिना जलधेनूक्तदानविधिना अम्बुशायिनं अब्धिशायिनं विष्णुमेव ।

ज्यैष्ठमधिकृत्य ब्रह्मपुराणे—

दादश्यां शुक्लपक्षस्य विशोका विष्णुना पुरा ।
प्रतिष्ठिता शुभैर्माल्यैस्तस्मात्तां तत्र पूजयेत् ॥

विशोकत्वं फलम् ।

शिष्टोपगृहीतगौड़ाः—

ज्यैष्ठे मासि सिते पक्षे दादश्यां चम्पकैः शुभैः ।
शुचिरभ्यर्च्य गोविन्दं नरो नैवानुशोचति ॥

अननुशोचनं फलं ।

वराहपुराणे— दुर्वासा उवाच ।

ज्यैष्ठे मासेऽप्येवमेव संकल्प्य विधिना नरः ।
अर्चयेत् परमं देवं पुष्पैर्नानाविधैः शुभैः ॥

एवमेवेति वराहपुराणोक्तमत्स्यदादशीकथितेतिकर्त्तव्यतया ।

ॐ नमो नारायणा[1]येति पादौ पूर्व्वं समर्च्चयेत् ।
त्रिविक्रमायेति कटिं धृतविश्वाय चोदरम् ॥
उरः संवत्सरायेति कण्ठं संवर्त्तकाय च ।
सर्व्वास्त्रधारिणे बाहू स्वनाम्नाऽब्जरथाङ्गके ॥
सहस्रशिरसेऽभ्यर्च्य शिरस्तस्य महात्मनः ।

अब्जरथाङ्गके शङ्खचक्रे ।

एवमभ्यर्च्य विधिवत्प्राग्वत्कुम्भं[2] प्रकल्पयेत् ॥
प्राग्वत् वस्त्रयुगच्छन्नौ सौवर्णौ रामलक्ष्मणौ ।

---

१ मूले राघवाय । २ B घृतकुम्भं ।

अर्चयित्वा विधानेन प्रभाते ब्राह्मणाय तौ ॥
दातव्यौ मनसा काममीहता पुरुषेण तु ।
अपुत्रेण पुरा पृष्टो राज्ञा दशरथेन तु ॥
वशिष्ठः पुत्रकामाय प्रोवाच परमार्चितः ।
इदमेव विधानन्तु कथयामास स द्विजः ॥
प्राशरहस्यं विदित्वा तु स राजा कृतवानिदम् ।
तस्य पुत्रः स्वयं जज्ञे रामाख्यो मधुसूदनः ॥
चतुर्द्धा सोऽप्यभूद्विष्णुः परितोषान्महामुने ।
एतदैहिकमाख्यातं पारत्रिकमतः शृणु ॥

नश्यन्ति पापानि च तस्य पुंसः
कामानवाप्नोति यथासमीहम् ।
निष्काम एतद्व्रतमेव चीर्त्वा
प्राप्नोति निर्वाणपदं स्थिरं तत् ॥
दिव्यान् भोगान् भुञ्जीत[1] स्वर्गसंस्थो
यावदिन्द्रा दश च द्विद्विसंख्याः ।
अतीतकाले पुनरेत्य मर्त्त्ये
राजराजो जायते यज्ञयाजी ॥

दश द्वि द्वि संख्यास्चतुर्द्दश इत्यर्थः ।

इति राघवद्वादशीव्रतम् ॥

---

१ B भुञ्जते ।

राजमार्त्तण्डे—

वृषराशिस्थिते सूर्य्ये शुक्लपक्षे चतुर्द्दशी ।
प्रोक्ता रुद्रार्च्चनायैव सा चम्पकचतुर्द्दशी ॥
ज्यैष्ठे मासि चतुर्द्दश्यां सावित्रीव्रतमुत्तमम् ।
अवैधव्याय कुर्व्वन्ति स्त्रियः सर्व्वाः समन्विताः ॥

ब्रह्मपुराणे—

शास्त्रेषु वेदाः सम्भूता पुरा ज्यैष्ठ्यां यदा भुवि ।
तदा तान् पूजयेत्तत्र वित्तशक्त्या प्रयत्नतः ॥
नवैर्यवान्नैः पितृभिः सह देवान् प्रपूज्य च ।
ततोऽनुलिप्तः स्रग्वी च नववस्त्रोपशोभितः ।
ब्राह्मणान् भोजयित्वादौ कृतस्वस्त्ययनान् शुचीन् ।
अद्वेषरागिभिर्युक्तः प्राङ्मुखः प्राशयेद्यवान् ॥

शास्त्रेषु इति निर्धारणे सप्तमी यदा यतस्तदा तत इत्यर्थः । यवान्नैः श्राद्धं देवपूजाञ्च कृत्वेत्यर्थः । अनुलिप्तः सुगन्धिद्रव्येण ।

देवीपुराणे—

मूलर्क्षे पशुघातेन ज्यैष्ठे देवीं प्रपूजयेत् ।
सर्व्वान् कामानवाप्नोति भावशुद्धेन कर्म्मणा ॥

ज्यैष्ठे ज्यैष्ठपूर्णिमायां । तथैव सक्रमात् । भावशुद्धेन कर्म्मणा प्रपूजयेदित्यन्वयः ।

विष्णुः—

ज्यैष्ठी ज्यैष्ठायुता चेत् स्यात् तस्यां छत्रोपानद्दानेन गणाधिपत्यमाप्नोति मन्वन्तरादिष्वेवं ज्यैष्ठीति श्राद्धमप्यत्र ।

विष्णुधर्म्मोत्तरे—

सोपवासस्तथा ज्येष्ठे पूर्णे च शशलक्षणे।

उपानहौ तथा छत्रं दत्वाऽत्यन्तं सुखी भवेत्॥

मत्स्यपुराणे—

एतदेव यथा पद्ममभूद्धैरण्मयं जगत्।

तद्वृत्तान्ताश्रयं तद्वत् पाद्ममित्युच्यते बुधैः॥

पाद्मं तत् पञ्चपञ्चाशत् सहस्राणीह पठ्यते।

तत् पुराणञ्च यो दद्यात् सुवर्णकमलान्वितम्।

ज्येष्ठे मासि तिलैर्युक्तमश्वमेधफलं लभेत्॥

अत्र ज्येष्ठपौर्णमास्येव दानतिथिर्विशेषाकाङ्क्षायां पूर्व्ववाक्ये वैशाखे पुराणदाने पूर्णिमाया एवानेनोक्तत्वात् अन्वयौचित्यात्।

ज्योतिषे—

वृषान्ते मिथुनस्यादावग्निदाहो दिनत्रयम्।

अम्बुधीन् संहतान् भानुः पन्नगानपि तापयेत्॥

रवौ रौद्राद्यपादस्थे भूमेः सञ्जायते रजः।

तस्माद्दिनत्रयं तत्र शस्यवापं परित्यजेत्॥

शस्यवापं शस्यार्थं वीजवापम्।

पद्मपुराणे—

ज्येष्ठे मासि सिते पक्षे पौर्णमास्यां यतव्रतः।

स्थापयेदव्रणं कुम्भं सिततण्डुलपूरितम्॥

नानाफलयुतं तस्य[1] इक्षुदण्डसमन्वितम्।

---

१ B तद्वत्।



A384
Library Regn. No. 218/24

सितवस्त्रयुगच्छन्नं सितचन्दनचर्च्चितम् ॥
नानाभक्ष्यसमायुक्तं सहिरण्यञ्च शक्तितः ।
ताम्रपात्रं गुड़ोपेतं तस्योपरि निवेदयेत् ॥
तस्मादुपरि ब्रह्माणं सौवर्णं पद्मकोदरे ।
कुर्य्याच्छर्कर्करयोपेतां सावित्रीं तस्य वामतः[१] ॥
गन्धपुष्पं ततो दद्याद्गीतवाद्यञ्च कारयेत् ।
तदभावे कथं कुर्य्याद्यथा प्राह पितामहः ॥
ब्रह्मनाम्नीञ्च प्रतिमां कृत्वा गुड़मयीं शुभाम् ।
शुक्लपुष्पाचतजलैरर्चयेत् पद्मसम्भवम् ॥
ब्रह्मणे पादौ सम्पूज्य जङ्घे सौभाग्यदाय च ।
विरिञ्चायोरुयुग्मन्तु मन्मथायेति वै कटिम् ॥
स्वच्छोदरायेत्युदरमनङ्गायेत्युरो हरेः ।
मुखं पद्ममुखायेति बाहू वै वेदपाणये ॥
नमः सर्व्वात्मने मौलिमर्चयेच्चापि कञ्जजम्[२] ।
ततः प्रभाते तं कुम्भं ब्राह्मणाय निवेदयेत् ॥
ब्राह्मणान् भोजयेद्भक्त्या स्वयन्तु लवणं विना ।
भक्त्या तु दक्षिणां दद्यादिमं मन्त्रमुदीरयेत् ॥
प्रीयतामत्र भगवान् सर्व्वलोकपितामहः ।
हृदये सर्व्वलोकानां यस्त्वानन्दोऽभिधीयते ॥
अनेन विधिना सर्व्वं मासि मासि समाचरेत् ।

---

१ A नामतः ।    २ मूले पङ्कजम् ।

उपवासी पौर्णमास्यामव्ययं ब्रह्म पूजयेत्।
फलमेकन्तु सम्प्राश्य शर्व्वर्य्यां भूतले स्वपेत्[१]॥
तत्र त्रयोदशे मासि घृतधेनुसमन्विताम्।
शय्यां दद्याद्विरिञ्चाय सर्व्वोपस्करसंयुताम्॥
ब्रह्माणं काञ्चनं कृत्वा सावित्रीं राजतीं तथा।
पद्मासनः सृष्टिकर्त्ता सावित्री तु फलस्य तु॥
वस्त्रैर्द्विजं सपत्नीकं पूज्य भक्त्या[२] विभूषणैः।
शक्त्या गवाह्निकं दद्यात् प्रीयतामित्युदीरयेत्॥
होमं शुक्लैस्तिलैः कुर्य्यात् ब्रह्मनामानि कीर्त्तयेत्।
गव्येन सर्पिषा तद्वत् पायसेन च कर्म्मवित्॥
विप्रेभ्यो भोजनं दद्यात् वित्तशाठ्यविवर्ज्जितः।
इक्षुदण्डांस्ततो दद्यात् पुष्पमालाश्च शक्तितः॥
यो ब्रह्मा स स्मृतो विष्णुरानन्दात्मा महेश्वरः।
सुखार्थी कामरूपेण स्मरेत्[३] देवं पितामहम्॥
यः कुर्य्याच्च विधानेन पौर्णमासीं स्त्रियोऽपि वा।
सर्व्वपापविनिर्मुक्तः प्राप्नोति ब्रह्म शाश्वतम्।
इह लोके वरान् पुत्रान् सौभाग्यं ध्रुवमश्नुते॥

इति पुत्रकामव्रतम्॥

इति महासान्धिविग्रहिकठक्कुर श्रीवीरेश्वरात्मज महासान्धिविग्रहिकठक्कुर श्रीचण्डेश्वरविरचिते कृत्यरत्नाकरे ज्येष्ठतरङ्गः॥

---

१ D सुप्येत्। २ B शक्त्या। ३ A B स्मरन्।

## अथाषाढ़कृत्यम् ।

तत्र वामनपुराणे—

उपानद्युगलं छत्रं लवणामलकानि च ।
आषाढ़े वामनप्रीत्यै दातव्यानि तु भक्तितः ॥

दानसागरे तु लवणामलकानि चेत्यस्य स्थाने नवकम्बलानि चेति पठित्वा नूतनकम्बलानीति व्याख्यातम् । दानमेतद्ब्राह्मण-सम्प्रदानकम् ।

स्कन्दपुराणे—व्रतम्—

आषाढ़स्यापि यो मासमेकभक्तं समाचरेत् ।
राज्ञोऽसौ मान्यतां प्राप्य कामानाप्नोति पुष्कलान् ॥

महाभारते—व्रतम्—

आषाढ़मेकभक्तेन स्थित्वा मासमतन्द्रितः ।
बहुधान्यो बहुधनो बहुमान्यश्च जायते ॥

भविष्यपुराणे—

द्वितीयश्च तथा पद्ममाषाढ़े पौष्णमुत्तमम् ।
सर्व्वबीजरसैः पूर्णं कृत्वा तु शुभलक्षणम् ॥
नानाकेशरगन्धाढ्यं सर्व्वरत्नविभूषितम् ।
हंसवाहैर्महायानैः सर्व्वभोगान्वितैर्नृप ॥
वर्षकोटिशतं साग्रं सूर्य्यलोके महीयते ।
सम्प्राप्य विविधान् भोगान् सर्व्वलोकेष्वनुक्रमात् ॥
प्राप्येह सर्व्वभोगाढ्यं तरुणं विन्दते पतिम् ।

अत्र काम्यव्रतसाधारणकृत्यानि कार्त्तिके तद्व्रतेऽनुसन्धेयानि ॥

तत्रैव—

माघे मासि समुद्युक्तस्त्रिसन्ध्यं योऽर्च्चयेद्रविम् ।
लभेत् षाण्मासिकं पुण्यं मासेकेन न संशयः ।
यथा माघे तथाषाढ़े माससेकस्य कार्त्तिके ॥

देवीपुराणे ग्रहणप्रकरणे—

आषाढ़े तापिकानदी पुण्येति प्रकरणान्महापुण्यफलप्रदेत्यर्थः ।

तथा—

आषाढ़े मासि यो देवीमाषाढ़र्च्चे प्रपूजयेत् ।
सर्व्वान् कामानवाप्नोति देवीलोकस्य गच्छति ॥

तत्रैव—

आषाढ़े तोयधेनुस्तु यां दत्वा लभते स्थितान् ।

इति वाक्यशेषः ।

विष्णुधर्म्मोत्तरे—

दत्वा चोपानहौ स्वर्गमाषाढ़े ध्रुवमश्नुते ।

अत्राषाढ़े काभिमतदिवसे दद्यादिति दानसागरे । तत्राषाढ़-शुक्लप्रतिपदीत्येके ।

महाजनपरिगृहीतवाक्यानि ।

शुचिसित दिनकरवारे करमूले वज्रपूरिकमूलस्य ।
सर्पारैरिव सर्पाः प्रयान्ति किल दूरतस्तस्य ॥

तथा च

आर्द्रायाः प्रथमे पादे चीरं पिवति यो नरः ।

अपि [1]रोषगतस्तस्य तच्चकः किं करिष्यति ॥

चौरपानमाचारात् ।

तथा—

मूलं तण्डुलवारिणा पिवति यः प्रत्यङ्गिरः[2] सम्भवम्
निष्पिष्टं शुचिभद्रयोगदिवसे तस्याहिभीतिः कुतः ।
दर्पादिव यदा फणी दशति तं मोहान्वितो मूलपम्
स्थानं तेन स एव याति नियतं वक्रं यमस्याचिरात् ॥

शुचिराषाढ़ः । प्रत्यङ्गिरा शिरीषः ।

ब्रह्मपुराणे—

कृष्णाष्टम्यामथाषाढ़े गाणपत्ये विनायकः ।
कृतः पूज्यश्च तत्रैव सगणो मोदकोत्करैः ॥

उत्करः समूहः ।

भक्ष्यैर्माल्यैस्तथा गन्धैः कुल्माषेण तु भूरिणा ।
गीतवाद्यैः सुमधुरै स्तथा ब्राह्मणतर्पणैः ।
कृष्णाष्टमीषु सर्व्वासु विघ्नेशं पूजयेच्च तम् ॥

कुल्माष ईषत्स्विन्नमाषः, यवपिष्टक इत्यन्ये । कृष्णाष्टमीषु सर्व्वास्वित्याषाढ़ान्यकृष्णाष्टमीपरम् ।

शिष्टानुमतवाक्यम् ।

आषाढ़े मासि भूताहे शिवं सम्पूज्य यत्नतः ।
सर्व्वपापविनिर्मुक्तः शिवलोके महीयते ॥

---

1 B रोषान्वितः । 2 D प्रत्यङ्गिरा ।

भूताहः कृष्णचतुर्द्दशी प्रकरणात् ।

ब्रह्मपुराणे—

आषाढ़े शुक्लसप्तम्यां विवस्वान् नाम भास्करः ।
जातः पूर्व्वासु तस्मात्तं तत्रोपोष्य यजेत् सदा ॥
रथचक्राकृतौ रम्ये मण्डले सर्व्वकामदम् ।
भक्ष्यैर्भोज्यैस्तथा पेयैः पुष्पैर्धूपविलेपनैः ॥

पूर्व्वासु पूर्व्वफल्गुनीषु तत्र सप्तम्यां यजेत् । अतः पूर्व्वदिने उपवासः । अत्र सर्व्वकामदमित्यनुवादात् सर्व्वकामावाप्तिरेव फलमिति । सदेति वचनान्नित्याधिकार इति पारिजातव्याख्यान-मुपेक्षणीयं स्तावकमेवेदं सदेतिपदं, कल्पतरुरप्येवम् । मण्डले रथचक्राकृतौ ।

तत्रैव—आषाढ़शुक्लपक्षे तु स्वातियोगे महाबलः ।
जातो वायुस्तथा पूज्यो गन्धमाल्यैर्द्दिजार्च्चनैः ॥
भूरिणा परमान्नेन शक्तुभिर्व्विविधैस्तथा ।
सुमनोभिर्व्विचित्रैश्च कुसुमैः श्रद्धया तथा ॥

परमान्नं पायसम् ।

देवीपुराणे— ब्रह्मोवाच—

एवमाचारयुक्तात्मा सततं चर्च्चिकारतः ।
प्राप्नुयात् सर्व्वकामांश्च यथेप्सितफलप्रदान् ॥

शक्र उवाच—

नित्यं भगवतीभक्तैस्तैर्नरै र्द्दिजसत्तम ! ।
किं कार्य्यं किं न तैः कार्य्यं वद त्वं पृच्छतो मम ॥

ब्रह्मोवाच ।

सर्व्वैः सर्व्वगता देवी सर्व्वदेवनमस्कृता ।
द्रष्टव्या शुद्धभावेन अभिन्ना पृथगेव सा ॥
नामभेदेन सा भिन्ना अभिन्ना परमार्थतः ।
शिवा नारायणी गौरी चर्च्चिका विमला उमा ।
तारा श्वेता महाश्वेता अम्बिका शिवशासना ।
यावद्भव्यं भवद्भूतं तावद्देवी व्यवस्थिता ॥
सा वन्द्या पूजनीया च सततं भक्तिभावितैः ।
विजयार्थं नृपैः खड्गे छुरिका-[1]पादुकापटे ॥
चामुण्डा चण्डरूपा वा लिखिता वाऽथ पुस्तके ।
ध्वजे वा कारयेच्छत्रे स नृपो विजयेद्रिपून् ॥
विशेषाद्वा रणारम्भे तस्याः पूजान्तु कारयेत् ।
पविचारोहणं वत्स! सर्व्वशास्त्रेषु गीयते ।
अग्नेरथाश्वि-पार्व्वत्योः कुजास्य भुजगेषु (?) च ।
स्कन्दस्य भानोर्मातृणां दुर्गाधर्म्मेश गोपते ॥
विष्णोः कामस्य देवस्य रुद्रस्य ब्रह्मणस्तथा ।
पूजनीया सदा देवी चण्डा पापविनाशिनी ॥
सर्व्वकालं दिवारात्रौ नामभिस्तैः पुरन्दर! ।
अथ [2]काषाढ़मासे तु श्रावणे वाऽपि कारयेत् ॥
सप्तम्यां वा त्रयोदश्यामधिवासं नराधिप! ।
सर्व्वोपहारसंयुक्तो नन्दायां भक्तिमान् स्थितः ॥

---

१ A B पाटका— ।　　२ B अथ आषाढ़— ।

सूक्ष्मतन्तुमयं कार्य्यं पवित्रं बहुतन्तुकम्।
ग्रन्थिभिः सुविचित्राभी रचितं मौक्तिकैरिव॥
सुधौतं चर्च्चितं कृत्वा रोचना-शशि-कुङ्कुमैः।
तथा सर्व्वाणि द्रव्याणि गन्धपुष्पफलानि च॥
नैवेद्यानि विचित्राणि वस्त्राण्याभरणानि च।
हैमानि तारपुष्पाणि कुशांश्च मृदवस्तथा॥
सुस्नातो मन्त्रविधिना अग्निकार्य्यं समाचरेत्।
तथाच पूजयेद्देवीमर्च्चायां स्थण्डिलेऽपि वा॥
पादुके वाथवा खड्गे छुरिका-कार्म्मुकेऽपि वा।
दन्तधावनपूर्व्वन्तु पञ्चगव्यं चरुं अपेत्॥

तारपुष्पाणि निर्म्मलपुष्पाणि निवेद्यानीति। सर्व्वत्र सम्बन्धः।

दत्वा दिशां बलिं वत्स! कार्य्यञ्चैवाधिवासनम्।
सद्ग्रैर्वस्त्रपत्रैर्वा छादयेत्तु पवित्रकम्॥
शताभिमन्त्रितं कृत्वा ततो देव्यै निवेदयेत्।
रात्रौ तु जागरं कुर्य्यात् सर्व्वशोभासमन्वितम्॥
नट-नर्त्तक-वेश्यानां संघानि विविधानि च।
तिष्ठन्ति वाद्यगेयानि निरतानि पुरन्दर॥
प्रभातसमये वत्स! प्राप्ते दद्यात् पुनर्बलिम्।
प्रत्युषे विधिवत् स्नात्वा तथा देवीं कृताशनम्॥
दद्याद्भक्त्याऽथ कन्यासु स्त्रियो भोज्यास्तथा द्विजाः।
पवित्रारोहणाद्यन्ते दक्षिणामुपपादयेत्॥
यथाशक्त्या भवेच्छक्र! नियमः कार्य्यकारणे।

राज्ञा नानाविधा[१]शक्ति रत्नक्रीड़ा मृगाःविधैः ॥
द्विजाचार्य्यैश्च स्वाध्यायो न कार्य्यं कर्षणं कृषैः ।
वणिग्भिश्च न चार्थीयं[२] दिनानि दश पञ्च च ॥
अथवा त्रीण्यथैकं वा दिनं यामार्द्धमेव वा ।
देव्या व्यापार आसक्तिः कर्त्तव्या सततं हरेः ॥
तथा सम्पूर्णे कर्त्तव्ये पुनः कुर्य्यात् पवित्रकम् ।
एवं यः कारयेद्वत्स! तस्य पुण्यफलं शृणु ॥
सर्व्वयज्ञव्रतं दानं सर्व्वतीर्थाभिषेचनम् ।
प्राप्नुयान्नात्र सन्देहो यस्मात् सर्व्वगतापि सा ॥
नाधयो न च दुःखानि न पीड़ा व्याधयो न च ।
न भयं शत्रुजं तस्य न गृहे पीड्यते क्वचित् ॥
सिध्यन्ति सर्व्वकार्य्याणि अपि यानि महान्त्यपि ।
नातः परतरं वत्स! अन्यत् पुण्यविवृद्धये ॥
नराणाञ्च नृपाणाञ्च स्त्रीणाञ्चापि विशेषतः ।
सौभाग्यजननं शक्र तव स्नेहात् प्रकाशितम् ॥
मयापि नृपतिश्रेष्ठ यथावदुपपादितम् ।
श्रवणादपि पुण्याय किं पुनः करणाद्विभो ॥

इति पवित्रारोहणम् ।

---

१ D आयुधा । २ B अर्थितं ।

भविष्यपुराणे—

सुमन्तुरुवाच—

आषाढ़े मासि यः कुर्य्यात् संयतो नक्तभोजनम्।
षष्टिकौदनसंमिश्रं सकृदश्नीत गोरसम्॥
गां दद्याच्च महाराज भास्कराय शुभाननाम्।
सामान्यञ्च विधिं कुर्य्यात् प्रागुक्तं यन्मया तव॥

सामान्यञ्च विधिमिति पौषमासकथित भविष्यपुराणीयो-भयसप्तमीव्रतोभयपक्षोपवासादिविधिमित्यर्थः।

शुद्धस्फटिकसङ्काशै र्यानैर्वर्हिणवाहनैः।
अणिमादिगुणैर्युक्तः सूर्य्यवद्विचरेद्दिवि॥

इदमुभयसप्तमीव्रतम्।

---

तत्रैव भविष्ये—

आषाढ़े मासि राजेन्द्र यः कुर्य्यान्नक्तभोजनम्।
भुञ्जानः खण्डखाद्यानि पायसञ्च नराधिप॥

खण्डखाद्यानि खण्डपाटितपक्वान्नानि।

उपवासपरो भक्त्या नवम्यां पक्षयोर्द्वयोः।
पूजयेच्छ्रद्धया दुर्गामैन्द्रीनाम्ना तु नामतः॥
ऐरावतगतां शुभ्रां श्वेतरूपेण रूपिणीम्।
कृत्वा स्वर्णमयीं भक्त्या नानानयनभूषिताम्।
नानापुष्पविशेषैस्तु भक्ष्यैर्नानाविधैस्तथा।

यचकर्द्दमगन्धैश्च पुष्पैः सागुरुचन्दनैः।

कर्पूरागुरु कस्तूरी कक्कोटैर्यचकर्द्दमो भवति।

एवं सम्पूज्य इन्द्राणीं कुमारीर्भोजयेत्ततः।

स्त्रियो विप्रान् यथाशक्त्या ततो भुञ्जीत वाग्यतः।

पञ्चगव्यकृतस्नानः पञ्चगव्यकृताशनः।

ध्यायमानस्तथा चैन्द्रीं स्वपेद्भूमौ नराधिप।

य एवं पूजयेद्दुर्गां [1]भक्ति-श्रद्धासमन्वितः॥

ऐरावतसमारूढ़ इन्द्रस्यानुचरो भवेत्।

इत्युभयनवमीव्रतम्।

इदञ्च व्रतद्वयं मासव्यापि नियममित्युपक्रमलिखनीयमिति तिथिप्राधान्यपुरस्काराक्तिथ्यनुसारेण लिखितम्। एवं मासान्तरेऽपि क्वचित् क्वचित्।

ब्रह्मपुराणे—

एकादश्यान्तु शुक्लायामाषाढ़े भगवान् हरिः।

भुजङ्गशयने शेते यदा चीरार्णवे सदा॥

तदा तत्प्रतिमा कार्य्या सर्व्वलक्षणसंयुता।

सुप्ता तु शेषपर्य्यङ्के शैलम्रद्भिः सुदारुभिः॥

ताम्रारकूटरजतैस्तथा चित्रपटेषु वा।

आरकूटः पित्तलम्।

लक्ष्म्या उत्सङ्गे हस्ते च विन्यस्तचरणाम्बुजा॥

---

[1] B भक्त्या।

नानाविधोपकरणैः पूज्या च विधिपूर्व्वकम्।
उपवासश्च कर्त्तव्यो रात्रिजागरणं तथा॥
तस्यां रात्र्यां व्यतीतायां द्वादश्यां पूजयेत्तथा।
त्रयोदश्यान्ततो नृत्यं गीतवाद्यं निवेदयेत्॥
विष्णवे रङ्गजीविभ्यो धनं दद्याच्च शक्तितः।
चतुर्द्दश्यामुपोष्याथ पौर्णमासीं यजेद्धरिम्॥

चित्रपटेषु वा इति चित्रलिखिता पटलिखिता वेत्यर्थः। रङ्गजीविनो नटादयः, अथ निद्रोत्पत्तिरेकादश्यां तदवधि दिनपञ्चकं तत्तत्पूजादिसमयः।

एकादश्यान्तु शुक्लायामाषाढ़े भगवान् हरिः।

इत्यादिब्रह्मपुराणात्।

सुप्ते तु सर्व्वलोकेशे मत्स्यभोजी भवेन्नरः।
सर्व्वपापविनिर्मुक्तः सर्व्वलोकेश्वरो भवेत्।
तैलाभ्यङ्गञ्च चत्वारि मासान्येतानि वर्ज्जयेत्॥

इति वाक्येन मासचतुष्टयं विष्णु निद्रादिव्यवस्थितौ—

भूपालसमुच्चये—

कार्त्तिकशुक्लैकादश्यां विष्णोरुत्थापनमिति प्रकरणोपसंहारे-णाषाढ़शुक्लैकादश्यामेव शयनौचित्यादाचारोपष्टम्भाच्च।

पारिजाते तु—

आषाढ़मासे द्वादश्यामिति शयनावसरे वराहपुराणदर्शनात् कार्त्तिकशुक्लद्वादश्यां जागृष्व जागृष्व चेति मन्त्रलिङ्गेन च द्वादश्योः शयनप्रबोधौ। निद्रां त्यजति कार्त्तिक्यामिति

यमस्मृतिदर्शनात् एकादश्यादि-कार्त्तिकीपर्य्यन्त दिनपञ्चके शयनप्रबोधावित्युक्तम् । तच्चायुक्तं, आषाढ्यादिपदयोराषाढ़-कार्त्तिकैकादश्योरपि योगतो मुख्यत्वात् मन्त्रलिङ्गस्य स्मृत्यपेक्षया ऽबलत्वादाचारविरोधाच्च ।

न चाषाढ़ीपदस्यानुपाधेः पूर्णिमायां शक्तिः, आषाढ़ी पूर्णिमेति सहप्रयोगदर्शनात् ।

तथाच वामनपुराणमपि—

नारद उवाच—

कथयस्व सुरादीनां शयनं विधिमुत्तमम् ।
सर्व्वाननुक्रमेणैव पुरस्कृत्य जनार्द्दनम् ॥

पुलस्त्य उवाच—

मिथुनाभिगते सूर्य्ये शुक्लपक्षे तपोधन! ।
एकादश्यां जगत्स्वामिशयनं परिकल्पयेत् ॥
शेषाहिभोगपर्य्यङ्कं कृत्वा सम्पूज्य केशवम् ।
[1]कृत्वा पवित्रकञ्चैव सम्यक् सम्पूज्य च द्विजान् ॥
अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः ।
लब्ध्वा पीताम्बरधरं स्वस्ति निद्रां समानयेत् ॥
त्रयोदश्यान्ततः कामः स्वपते शयने शुभे ।
कदम्बानां सुगन्धानां कुसुमैः परिकल्पिते ॥
चतुर्द्दश्यां तथा यक्षाः स्वपन्ति सुखशीतले[2] ।

---

१ B कृत्वोपवीतकञ्चैव । २ A C सुशीतले ।

सौवर्णपङ्कजकृते सुखास्तीर्णोपधानके ॥
पौर्णमास्यामुमानाथः स्वपते चर्म्मसंस्तरे।
वैयाघ्रं स जटाभारं समुन्नम्याशुचर्म्मणा ॥
ततो दिवाकरो(रे) राशिं सम्प्रयाति च कर्कटम्।
ततोऽमराणां रजनी भवते दक्षिणायनम् ॥
ब्रह्मा प्रतिपदि तथा नीलोत्पलमये शुभे।
तल्पे स्वपिति लोकानां दर्शयन् मार्गमुत्तमम् ॥
विश्वकर्म्मा द्वितीयायां तृतीयायां गिरेः सुता।
विनायकश्चतुर्थ्यान्तु पञ्चम्यामपि धर्म्मराट् ॥
षष्ठ्यान्तु स्कन्दः स्वपिति सप्तम्यां भगवान्रविः।
कात्यायनी तथाष्टम्यां नवम्यां कमलालया ॥
दशम्यां भुजगेन्द्रास्तु स्वपन्ते वायुभोजनाः।
एकादश्यान्तु कृष्णायां साध्याः ब्रह्मन् स्वपन्ति च ॥
एवं क्रमस्ते[1] कथितो न भाद्रे स्वपते सुरः।
स्वपत्सु तत्र देवेषु प्रावृट्कालः समाययौ ॥

एवं शिवस्याषाढ़पूर्णिमा-कार्त्तिकपूर्णिमयोः शयनोत्थाने इति स्थिते।

भविष्यपुराणम्।

पौर्णमास्यामथाषाढ़े[2] शिवं सम्पूज्य यत्नतः।
उपवीतं व्रती दद्यात् शिवभक्तांश्च पूजयेत् ॥

---

१ A तु। २ A B आषाढ़स्य।

पुनरेव च कार्त्तिक्यां पूजयित्वा क्षमापयेत्।
यतीनां दक्षिणां दद्यात् सूत्रवस्त्रादिकल्पिताम्॥
य एवं विधिवत् कुर्य्यात् चातुर्मास्योपवित्रकम्।
कल्पकोटिशतं साग्रं रुद्रलोके महीयते॥

यमः—

चौराब्धौ शेषपर्य्यङ्के आषाढ्यां संविशेद्धरिः।
निद्रां त्यजति कार्त्तिक्यां तयोस्तं पूजयेत् सदा॥
ब्रह्महत्यादिकं पापं क्षिप्रमेव व्यपोहति।
हिंसात्मकैस्तु किं तस्य यज्ञैरन्यैर्महात्मनः॥
सुष्वापे च प्रबोधे च पूजितो येन केशवः॥

आषाढस्येयमाषाढी कार्त्तिकस्येयं कार्त्तिकी तिथिः शुक्लै-कादशी मता।

वराहपुराणे— भगवानुवाच।

अन्यत्तव प्रवक्ष्यामि कर्म्म संसारमोक्षणम्।
कदम्बः कुटजश्चैव धनकोऽर्ज्जुनकस्तथा॥
एभिरभ्यर्च्चनं कुर्य्याद्विधिदृष्टेन कर्म्मणा।
ततः संस्थापनं कृत्वा मम मन्त्रविधिः स्मृतः॥

धनकः कपित्थः। संस्थापनमनन्तरोक्तकर्म्मसमापनं नमो नारायणायेत्युक्त्वा इमं मन्त्रमुदीरयेत्।

पश्यन्ति मेघान्यपि मेघश्यामम्
ह्युपागतं सिच्यमानं महीमिमाम्।

निद्रां भगवान् ग्टह्णातु लोकनाथ
वर्षास्विमं पश्यतु लोकवृन्दम्[1]।
ज्ञात्वा च पश्येव च देवनाथं
मेघास्त्वरि वैकुण्ठस्य तु पश्य नाथ॥
आषाढ़मासे द्वादश्यां सर्व्वशक्तिकरं[2] शिवम्।
यत्र तेन विधानेन भूमि मत्कर्म्म कारयेत्॥
स पुमान् न प्रणश्येत संहारेषु युगे युगे॥

विष्णुधर्म्मोत्तरे—

स्वास्तीर्णं शयनं दत्त्वा प्रीणयेद्भोगशायिनम्।
आषाढ़शुक्लद्वादश्यां श्वेतद्वीपे महीयते॥

अत्र स्वास्तीर्णं शयनं दत्त्वा श्वेतद्वीपे महीयते इति सम्बन्धः। स्वास्तीर्णं शयनं शोभनास्तरणयुक्तखट्वादि।

वराहपुराणे— दुर्वासा उवाच।

आषाढ़ेऽप्येवमेवन्तु संकल्प्य विधिवन्नरः।
अर्च्चयेत् परमं देवं गन्धपुष्पैर्विधानतः॥
वासुदेवाय पादौ तु कटिं सङ्कर्षणाय च।
प्रद्युम्नायेति जठरं अनिरुद्धाय वै उरः॥
चक्रपाणयेति भुजौ कण्ठं गोपतये[3] तथा।
स्वनाम्ना शङ्ख-चक्रे तु पुरुषायेति वै शिरः॥

---

१ D मेघवृन्दं। २ A शान्ति-।
३ B भूपतये।

एवमभ्यर्च्च्य मेधावी प्राग्वत्तस्याग्रतो घटम्।
विन्यसेद्वस्त्रसंयुक्तं तस्योपरि ततो न्यसेत्॥
काञ्चनं वासुदेवन्तु चतुर्बाहुं सनातनम्।
तेनाभ्यर्च्च्य विधानेन गन्धपुष्पादिभिः क्रमात्॥
प्राग्वत्तं ब्राह्मणे दद्याद्देवादिनि सुव्रते।

अथ मार्गमासीयवराहपुराणीयव्रतस्य द्वादशीकथित सकल-साधारण कृत्यान्वयः।

एवं नियमयुक्तस्य यत् पुण्यं तच्छृणुष्व मे॥
वसुदेवोऽभवद्राजा यदुवंशविवर्द्धनः।
देवकी तस्य भार्य्यासीत् समानव्रतधारिणी[1]॥
सा त्वपुत्राऽभवत् साध्वी पतिधर्म्मपरायणा।
तस्य कालेन महता नारदोऽभ्यागमत्ततः॥
वसुदेवेन भक्त्याऽसौ पूजितो वाक्यमब्रवीत्।
कथयामास धर्म्मज्ञो देवकी-वसुदेवयोः॥
तावप्येवंविधं भक्त्या चक्रतुः श्रद्धयान्वितौ।
तयोस्तुष्टः स्वयं विष्णुः पुत्रत्वञ्च जगाम ह॥
एवमेषा पापहरा द्वादशी पुत्रदा स्मृता।
दमामुपोष्येह सुतान् विद्या वित्तं लभेत च॥
राज्यञ्च भ्रष्टराज्यस्तु पापिनः पापसंचयम्।
यथा भारोऽपनीतस्तु धरण्याः केशवेन वै॥

---

१ B चारिणी।

मृतो विष्णुपुरे रम्ये मोदते कालमक्षयम् ।
मन्वन्तराणि षट्त्रिंशत्ततः कालात्यये पुनः ॥
इह लोके भवेद्राजा सप्तवर्षायुतानि च ।
दाता यज्वा क्षमायुक्तो मृतो निर्वाणमाप्नुयात् ॥

इति कृष्णद्वादशीव्रतम् ।

---

अग्निपुराणे—

जलधेनुं प्रवक्ष्यामि सर्व्वकल्मषनाशिनीम् ।
दत्तया प्रीयते राजन् जलशायी जगत्पतिः ॥
जलकुम्भं सभृङ्गारं सुवर्णरूप्यसंयुतम् ।
गर्भस्थानानि रत्नानि कृत्वा सप्त च मुख्यतः ।
सप्तधान्ययुतं तद्वद्गुड़धेनुर्यथा पुरा ।
सितवस्त्रयुगच्छन्नं दूर्व्वापल्लवशोभितम् ॥
गन्धपात्रैर्युतं दिक्षु सितयज्ञोपवीतिनम् ।
सच्छत्रं सोप(पा)नत्कञ्च विस्तरैः परिधारितम् ॥
चत्वारि जलपात्राणि सुदिव्यौडुम्बराणि च ।
दधिपात्रेण संयुक्तं घृतक्षीरवता मुखे ॥
द्वादश्यां शुक्लपक्षे तु आषाढ़स्य नृपोत्तम ।
उपोषितः समभ्यर्च्च्य केशवं जलशायिनम् ॥
गन्धपुष्पोपहारैश्च यथाविभवविस्तरैः ।
संकल्प्य जलधेनुञ्च पूजयेद्वत्सकन्तथा ॥
सितवस्त्रधरः शान्तो धीरो विगतमत्सरः ।
दद्यादनेन मन्त्रेण प्रीतये जलशायिनः ॥

जलशायी जगद्योनिः प्रीयताम्मम केशवः ।
पयोमया [1]पयोवर्त्ता पयसामयनं हरे ॥
पयोधरामि मे देव इह लोके परत्र च ।
इति नत्वा जगन्नाथं विप्राय प्रतिपादयेत् ॥
अपक्वान्नेन वै तिष्ठेदहोरात्रमतः परम् ।
अनेन विधिना दत्वा जलधेनुं यतव्रतः ॥
सर्व्वान् कामानवाप्नोति ये दिव्या ये च मानुषाः ।
कदा शरीरे नो बाधामाप्नोति पुरुषो नृप ॥
दत्वा जलमयीं धेनुं विष्णुलोकञ्च गच्छति ।

सप्तरत्नानीत्यनेन मुक्ता-हीरक-गोमेदेन्द्रनील पुष्पराग-वैदूर्य्य-विद्रुममरकत-पद्मरागाणां मध्ये बहुमूल्यसप्तरत्नग्रहणम् ।

सप्तधान्यानि परिभाषोक्तानि । गुड़धेनुर्यथा पुरा इत्याग्नेय-पुराणोक्तगुड़धेन्ववयालङ्कारग्रहणं औडुम्बराणि ताम्रमयानि । अत्र वत्सो जलकुम्भचतुर्भागनिर्म्मितः गुडधेनौ तथा दर्शनात् ।

आषाढ़शुक्लद्वादश्यां पूर्व्वदिने कृतोपवासो यथाशक्ति गन्धपुष्पो-पहारैः "केशवाय जलशायिने नमः" इति मन्त्रेण केशवं जलशायिनं सम्पूज्य गोमयोपलिप्तभूभागे कुशानास्तीर्य्य तदुपरि स्वल्पकृष्णाजिनं प्रसार्य्य चतुर्हस्ताजिने जलकुम्भमयीं भृङ्गार-सुवर्णरूप्य-सप्तरत्न-धान्ययुतां शुक्तिकर्णामिक्षुपादां मुक्ताफलाङ्कुलेचणां सितसूत्र-शिरालां सितकम्बलगलकम्बलां ताम्रपात्रपृष्ठां सितचामररोमिकां विद्रुमौष्ठयुतां नवनीतस्तनीं चौमपुच्छां कांस्योपदोहामिन्द्रनील-

[1] A B पयोवर्त्तीं पयसाश्रयनं हरेः ।

तारकां नानफलसमायुक्तां गन्धकरण्डकप्राणां सितवस्त्रयुगकृतां दूर्व्वापल्लवशोभितां गन्धपात्रचतुष्टययुतां सितयज्ञोपवीतिनीं सच्छत्रोपानत्कां विस्तरतिलपूर्णताम्रपात्रचतुष्टययुतां दधिक्षीर-घृतपूर्णपात्रसंयुक्तमुखीं लम्बेणकाजिनस्थापितकुम्भस्थधेनुचतुर्थीं यथावद्धेनुविशेषणविशिष्टवत्सतरीं दद्यात् ।

तदा तद्दिनेऽपकाम्नाशी भवेत् ।

विष्णुधर्म्मोत्तरे—

आषाढ़ामन्नदानेन प्राप्नोत्यन्नं नरो बहु ।

भविष्यपुराणे—

पौर्णमास्यामाषाढ़स्य विधिवत् पूजयेच्छिवाम् ।
सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते ॥

तथा— पौर्णमास्यान्तथाषाढ़े योऽर्च्चयेदम्बिकां नरः ।
सोपवासो महाभाग स याति परमां गतिम् ॥

अत्र सोपवास इत्युपवासश्चतुर्द्दश्यां पौर्णमास्यामर्च्चयेदिति सम्बन्धात् ।

ब्रह्मपुराणे—

आषाढान्ते वैश्वदेवे नक्षत्रे सति शोभने ।
दश तान् पूजयेत्तत्र विश्वेदेवान् महाबलान् ॥

अत्र बृहस्पतिः—

क्रतुर्दक्षो वसुः सत्यं कालः कामस्तथैव च ।
धुरिश्च लोचनश्चैव तथा चैव पुरूरवाः ।
आर्द्रवाश्च दशैवैते विश्वेदेवाः प्रकीर्त्तिताः ॥

श्रीरामायणे भरतशपथेषु—

आषाढ़ी कार्त्तिकी माघी तिथयः पुण्यसम्भवाः ।
अप्रदानवतो यान्तु यस्यार्य्योऽनुमते गतः ॥

पुण्यसम्भवा इति प्रशंसा विशिष्टपुण्यजननतात्पर्य्यिका ।

विष्णुः—

आषाढ़ामाषाढ़युक्ता चेत् स्यात्तस्यामन्नदानेन तदेवाचय्य-माप्नोति ।

भविष्यपुराणे—

नैरन्तर्य्येण यो मासं विधिना पूजयेद्रविम् ।
पुण्यं तदेव सकलं लभेद्विषुवदर्शनात् ॥
एवमेव च विज्ञेयं ग्रहणे चोत्तरायणे ।
संक्रान्तिदिनच्छिद्रेषु षड़शीतिमुखेषु च ॥
यद्वै वङ्ग भवेत् पुण्यं विधिना पूज्य वै खग ।
तत्कार्त्तिक्यां भवेत् पुण्यं समाराध्य दिवाकरम् ।
पुण्यमेवञ्च फाल्गुन्यामाषाढ़्यामेवमेव च ॥

आग्नेयपुराणे—

एतच्छ्रुत्वाऽम्बरीषोऽपि वसिष्ठं प्रत्यभाषत ।
कथं वृषेण धेनूनां दशानां फलमिष्यते ॥
सर्व्वमेतन्ममाचच्व प्रवक्तुं कुशलो ह्यसि ।
स तमाह वसिष्ठोऽपि शृणुष्व वदतो मम ॥
त्वमेकाग्रमना भूत्वा महर्षे दानमुत्तमम् ।
यतो नातोऽधिकं किञ्चित्त्रिषु लोकेषु विद्यते ॥

यद्दत्त्वा दितिजोऽप्येष बली राजा समाहितः।
रसातलगतो भुङ्क्ते दिव्यान् भोगाननुत्तमान्॥
वरांश्च वृषभान् दत्त्वा यथाऽसौ दिवि मोदते।
यद्दानेन वरश्रेष्ठस्त्रैलोक्यैश्वर्य्यसंस्थितः॥
तथान्येऽपि च राजानो धर्म्मकृत्येषु ये मताः।
एतद्दानस्य माहात्म्याद्गताः पुण्यकृतां गतिम्॥
आषाढ़पौर्णमास्यान्तु मिथुनस्थे दिवाकरे।
श्रद्दधानैर्जितक्रोधैर्देयमेतद्यथाविधि॥
जाम्बुनदस्य शुद्धस्य पलैस्त्रिंशतिभिस्तथा।
तदर्द्धमर्द्धमर्द्धेन यथाशक्तिपलैस्त्रिभिः॥

तदर्द्धं पञ्चदशपलमयमित्यर्थः। अर्द्धं सार्द्धपलसप्तमयं अर्द्धेन पादोनपलचतुष्टयेन वा कुर्य्यादित्यर्थः।

द्वाभ्यामेकेन वा कुर्य्याद्वृषं सर्व्वाङ्गशोभिनम्।
पलादूनो न कर्त्तव्यो दुःखशोकभयावहः॥
मण्डपं कारयेद्दिव्यं परार्द्ध्यं पलनिर्म्मितम्।
तन्मध्ये तण्डुलैः शुक्लैर्मण्डलं कारयेच्छुभम्॥

परार्द्ध्यमुत्कृष्टतण्डुलमण्डलं देयं वृषाधारः।

ततः प्रभाते विमले समुत्थाय यतेन्द्रियः॥
शुक्लाम्बरधरः स्नातः शुक्लमाल्यानुलेपनः॥
कृतनित्यक्रियः शुक्लरत्नमालाविभूषणः॥
नरो वा यदि वा नारी दिव्यभोगाभिलाषिणी।
सितवस्त्रयुगच्छन्नं स्नापयित्वा तथा वृषम्॥

सौवर्णे मण्डले तस्मिन् सुरत्नैर्वसुभिश्चितम्।
चन्दनागुरुकर्पूरैः सुमनोभिस्तथा सितैः॥
सम्पूजयेत्ततः सम्यङ्मन्त्रैः पौराणसम्भवैः।
नमस्ते जगदाधार! प्रियः पुण्यकृतामसि॥
त्वद्विहीने जगत्यस्मिन् न कश्चित् शुभमश्नुते।
नमस्ते धर्मराजाय वृषरूपधराय वै॥
त्वं मामुद्धर देवेश दुःखसंसारसागरात्।
यशः कान्तिर्धनं धान्यं यदन्यदपि संस्तुतम्।
तत् प्रयच्छस्व देवेश परत्र च शुभाम्गतिम्॥
इति सम्पूज्य विधिवत्तं देवं वृषरूपिणम्॥
नैवेद्यं संस्तरेत्तत्र हविषा निर्म्मितं शुभम्।
कालोद्भवं मूलफलं सर्व्वं देयं समन्ततः॥
हविष्यान्नेन भुञ्जीत भोजयित्वा द्विजोत्तमान्।
सायाह्ने तु ततः कुर्य्यात् पुष्पगेहमनुत्तमम्॥
सितपुष्पैः शुभैर्गन्धलुब्ध-मधुकरालयैः
फलमूलानि धान्यानि दीपाः शुक्लदशान्विताः॥

दशा वर्त्तिः।

घृतपूर्णाश्च कर्त्तव्याः सम्यग्द्योतितमण्डपाः।
रात्रौ जागरणं कार्य्यं देवदेवस्य सन्निधौ॥
वारमुख्यासमा नार्य्यः गन्धर्व्वान् श्रुतिसौख्यदान्।

गन्धर्व्वान् गायनान्।

गीतवादित्रशब्देन ब्रह्मघोषवरेण च।

नर्म्मालापैश्च नृत्यैश्च शमयेत्तां निशां ततः॥

नर्म्मालापैः क्रीड़ावचनैः।

अरुणोदयवेलायां समुत्थाय जितेन्द्रियः।

पूजयित्वा द्विजानच्च गोहिरण्यैर्नरोत्तमः॥

वृषरूपं ततो धर्म्मं प्रीयतां वृषभध्वजः।

इत्युच्चार्य्य परं मन्त्रमाचार्य्याय निवेदयेत्॥

निवेदयेद्वृषरूपधर्म्ममित्यर्थः।

दत्वा दानमिदं सर्व्वं विधिनानेन पार्थिवः।

कुर्य्याद्दिग्विजयं विप्रो वेदकर्म्म समारभेत्।

वैश्यः समुद्रगमनं शूद्रः कर्म्म यथेप्सितम्॥

फाल्गुन्यामथवा दद्याद्दानमेतन्नृपोत्तम।

रौद्रं सर्व्वं विनिर्द्दिष्टं ब्रह्मणा शङ्करस्य हि॥

अत्र च प्रकृतार्थानुवादोपनीतानि फलानि योज्यानि।

मत्स्यपुराणे—

वराहकल्पवृत्तान्तमधिकृत्य पराशरः—

यदाह धर्म्मानखिलान् तदुक्तं वैष्णवं विदुः।

तदाषाढ़े च यो दद्यात् घृतधेनुसमन्वितम्॥

पौर्णमास्याञ्च पूतात्मा स पदं याति वारुणम्।

त्रयोविंशतिसाहस्रं तत्पुराणं विदुर्बुधाः॥

पापैर्मुच्यत इत्यनुवृत्तौ यमः—

आषाढ्यां स्नानपूतोऽथ श्रावण्यां सततन्तथा।

आषाढ्यामथ कार्त्तिक्यां माघ्यां त्रीन् पञ्च वा द्विजान्।

पूजयेत् पितृपूर्व्वन्तु तदक्षय्यमुच्यते ॥

महासन्धिविग्रहिक ठक्कुर श्रीवीरेश्वरात्मज महासान्धि-विग्रहिक ठक्कुर श्रीचण्डेश्वरविरचिते कृत्यरत्नाकरे आषाढ़-तरङ्गः समाप्तः।

---

## अथ श्रावणकृत्यम्।

ब्रह्मपुराणे—

यदा तु कर्कटं याति भगवान् चण्डदीधितिः।
ततःप्रभृति कालः स्याद्दक्षिणायनसंज्ञकः॥
तत्र प्रावृट्सु सम्पूज्या फलपुष्पाम्बुभिस्तथा।

तत्रेति कर्कटसंक्रान्तिदिने।

गोरसाक्तान् तथा शक्तून् ब्राह्मणेभ्यो निवेदयेत्॥
हिमञ्च शर्कराश्चैव शाकमूलफलानि च।
उपानच्छत्रमाल्यानि जलधेनुञ्च शास्त्रवत्॥

हिमं कर्पूरं। अत्र स्वर्गः फलं विश्वजिन्न्यायात्।

शातातपः—

अयनादौ सदा देयं द्रव्यमिष्टं गृहेषु यत्।

आग्नेयपुराणे—

यश्चेन्धनं ददेद्विप्रे वर्षादिचतुरस्त्वृतून्।
घृतधेनुप्रदोऽन्ते च परं ब्रह्माधिगच्छति॥

तत्रैव—

आषाढ़ादि चतुर्मासानभ्यङ्गं वर्ज्जयेन्नरः।

सुखप्रीतिकरार्थाय दद्याद्गन्धञ्च वाससी।
पूर्णिमायां महाराज प्रीयतां पार्व्वतीपतिः।
जनप्रीतिकरं नृणां प्रीतिव्रतमिहोच्यते॥
चातुर्मास्यं दधिक्षीरघृतञ्चैव तथेक्षवम्।
वर्ज्जयित्वा तु पात्राणि दद्यात्तेन युतानि च॥
वस्त्रैश्चैव सुवर्णेन गौरी मे प्रीयतामिति।
एतद्गौरीव्रतं नाम गौरीलोकप्रदायकम्॥

अत्रैव महाफलानि चातुर्मास्यं प्रातःस्नाने।

हैमानि कार्त्तिके दद्यात् होमान्ते सप्तगास्तथा॥
एतत्सौरव्रतं नाम•सूर्य्यलोकफलप्रदम्।

मत्स्यपुराणाग्नेयपुराणयोः—

आषाढ़ादि चतुर्मास्यं प्रातःस्नायी भवेन्नरः।
विप्रेषु भोजनं दत्वा कार्त्तिक्यां गोप्रदो भवेत्॥
स वैष्णवं पदं याति विष्णुव्रतमिदं स्मृतम्।

आषाढ़ादीत्यतद्गुणसम्विज्ञानो बहुव्रीहिः।

आग्नेयपुराणे—

अयनादयनं यावत् वर्ज्जयेत् पुष्प-सर्पिषी।
तदन्ते पुष्पदानानि घृतधेन्वा सहैव तु॥
दत्वा शिवपदं याति विप्राय घृतपायसम्॥
एतच्छिवव्रतं नाम धनारोग्यप्रदायकम्॥

तथा तत्रैव।

आषाढ्यादिव्रतं यस्तु वर्ज्जयेन्नखकर्त्तनम्।

कार्त्तिक्यां हेमसंयुक्तं दद्यात् सर्पिर्मधोर्घटम् ॥

नखकर्म्मवर्ज्जनमेव व्रतम् ।

शिवाय रुद्रलोके तु वसेत् कल्पं ततो नृप ।

शिवव्रतमिदं नाम सुखकामप्रदायकम् ।

छन्दोगपरिशिष्टे—

ग्रभ्यद्वयं श्रावणादि सर्व्वा नद्यो रजस्वलाः ।

तासु स्नानं न कुर्व्वीत वर्ज्जयित्वा समुद्रगाः ॥

ग्रभ्यो मासः, समुद्रगाः साक्षात् प्रत्यभिज्ञायमानसमुद्रगमनाः ।

धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते ॥

न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः ॥

धनुश्चतुर्हस्तो दण्डः ।

उपाकर्म्मणि चोत्सर्गे प्रातःस्नाने तथैव च ।

चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते ॥

शिष्टाः—

तपनस्य सुता गङ्गा गोमती च सरस्वती ।

रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञकाः ॥

आदौ कर्क्कटके देवी त्र्यहं यावद्रजस्वला ।

चतुर्थेऽहनि सम्प्राप्ते शुद्धा भवति जाह्नवी ॥

महाभारते—

श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत् ।

यत्र तत्राभिषेकेण युज्यते ज्ञातिभिर्धनैः ॥

यत्र तत्रेति कृत्रिमे चाकृत्रिमे च ।

एकभक्तमेवोपक्रम्य स्कन्दपुराणे—

श्रावणे वापि यो मासे तथैवाचरते नरः।
सैनापत्यं सम्प्राप्य धनवानभिजायते॥

भविष्यपुराणे—

सर्व्वधातुसमाकीर्णं विचित्रध्वजशोभितम्।
निवेदयेत सूर्य्याय श्रावणे तिलपर्व्वतम्॥
स्वच्छन्दगामिभिर्यानैः सर्व्वभोगान्वितैर्नृप।
वर्षकोटिशतं साग्रं सूर्य्यलोके महीयते॥
सम्प्राप्य विविधान् भोगान् वक्तास्वर्य्यफलान्वितम्।
क्रमाल्लोकमिमं प्राप्य राजानं बिन्दते पतिम्॥
बुद्धिशीलगुणोपेतं कान्तितेजःप्रभान्वितम्।
वेदवेदाङ्गतत्त्वज्ञं सर्व्वशास्त्रविशारदम्॥

अत्र मासव्यापकैकभक्तादिसाधारणकृत्यानि कार्त्तिककामव्रतेऽनुसन्धेयानि।

इति कामव्रतम्।

---

प्रकरणकमुपक्रम्य देवीपुराणे—

श्रावणे सिन्धुनामा च पुण्येति प्रक्रमात् तत्र स्नानादिकं पुण्यहेतुः।

विष्णुधर्म्मोत्तरे—

श्रावणे वस्त्रदानस्य कीर्त्तितं सुमहत् फलम्।

वामनपुराणे—

घृतक्षीरकुम्भाश्च घृतधेनुः फलानि च ।
श्रावणे श्रीधरप्रीत्यै दातव्यानि विपश्चिता ॥

एतच्च दानं श्रावणाभीष्टदिन इति सागरः ।

भविष्यपुराणे—

सम्प्राप्ते श्रावणे मासि यः कुर्य्यान्नक्तभोजनम् ।
क्षीरषष्टिकयुक्तेन सर्व्वभूतहिते रतः ॥
पीतवर्णाञ्च गां दद्यात् भास्कराय महात्मने ।
सामान्यनियमं कुर्य्यात् प्रागुक्तं यन्मया तव ॥

सामान्यं पौषमास्यं पौषमासे भविष्यपुराणोक्ताभयसप्तमी-कथितसामान्यनियमम् ।

सुविचित्रैर्महायानैः हंससारसयायिभिः ।
गत्वादित्यपुरं श्रीमान् पूर्व्वोक्तं लभते फलम् ॥

ब्रह्मपुराणे—

श्रावणे कृष्णपक्षे तु शङ्करः प्रथमेऽहनि ।
त्रपर्व्वणा त्रिशल्येन त्रिमुखेन शरेण तु ॥

शल्यं लोहशङ्कुः ।

मुखानि त्रीणि चिच्छेद यज्ञस्य मृगरूपिणः ।
तैः शिरोभिस्तपस्तप्तं वराः प्राप्ताश्च शङ्करात् ॥

मुखान्येव शिरांसि ।

स्त्रीभिः पूज्यानि तानीह न मनुष्यैः कथञ्चन ।

मनुष्यैः पुरुषैः।

मृगशीर्षचयं कृत्वा लिङ्गाकारञ्च मृण्मयम्।
क्षीरेण स्नपनीयञ्च पूजनीयम् यथाविधि॥
अर्घ्यैः पुष्पैश्च धूपैश्च नैवेद्यैर्विविधैरपि।
शाकैः सौवर्चनाभिश्च भक्ष्यैः पिष्टमयैः शुभैः॥
कांस्यभाजनवाद्यैश्च पश्चात् कार्य्यन्तु भोजनम्।
सौवर्चना ओषधिविशेषः।

मत्स्यपुराणे ब्रह्मोवाच—

भगवान् पुरुषस्येह स्त्रियाश्च विरहादिकम्।
शोकव्याधिभयं दुःखं न भवेद्येन तद्वद॥

श्रीभगवानुवाच—

श्रावणस्य द्वितीयायां कृष्णायां मधुसूदनः।
क्षीरार्णवे सलक्ष्मीकः सदा वसति केशवः॥
तस्यां सम्पूज्य गोविन्दं सर्व्वान् कामान् समश्नुते।
गो-भू-हिरण्यदानादि सप्तकल्पशतानुगम्॥
अशून्यशयनं नाम द्वितीया सम्प्रकीर्त्तिता।
तस्यां सम्पूजयेद्विष्णुमेभिर्मन्त्रैर्विशेषतः॥
श्रीवत्सधारिन् श्रीकान्त श्रीवास श्रीपतेऽव्यय!।
गार्हस्थ्यं मा प्रणाशं मे यातु धर्म्मार्थकामद॥
अग्नयो मा प्रणश्यन्तु देवताः पुरुषोत्तम।
पितरो मा प्रणश्यन्तु मत्तो दाम्पत्यभेदतः[१]।

१ B माऽस्तु दाम्पत्यभेदनम्।

लक्ष्म्या वियुज्यते देवो न कदाचिद्यथा भवान्।
तथा कलत्रसम्बन्धो देव मा मे वियुज्यताम्।
लक्ष्म्या न शून्यं वरद यथा ते शयनं सदा।
शय्या ममाप्यशून्यास्तु तथैव मधुसूदन॥
गीतवादित्रनिर्घोषं देवदेवस्य कारयेत्।
घण्टा भवेदशक्तस्य सर्व्ववाद्यमयी यतः॥
एवं सम्पूज्य गोविन्दमश्नीयात्तैलवर्ज्जितम्।
नक्तमक्षारलवणं यावत्तत् स्याच्चतुष्टयम्॥

मासचतुष्टयमित्यर्थः।

ततः प्रभाते संजाते लक्ष्मीपतिसमन्विताम्।

ततः प्रभात इति चतुर्थमासद्वितीयानन्तरप्रभाते शय्यादानम्। पारिजाते तु प्रतिमासं प्रतिमादानं शय्यादानञ्चेत्युक्तम्। लक्ष्मीपतिशब्देन सलक्ष्मीप्रतिमाक-लक्ष्मीपतिप्रतिमा विवक्षिता।

दीपान्नभाजनैर्युक्तां शय्यां दद्याद्विलक्षणाम्।
पादुकोपानहच्छत्र चामरासनसंयुताम्॥
अभीष्टोपस्करैर्युक्तां शुक्लपुष्पाम्बरान्विताम्।
सोपधानकविश्रामां फलैर्नानाविधैर्युताम्॥
तथाभरणधान्यैश्च यथाशक्त्या समन्विताम्।
अव्यङ्गाङ्गाय विप्राय वैष्णवाय कुटुम्बिने॥
दातव्या वेदविदुषे न[१] च कुप्येत कस्यचित्।
तत्रोपवेश्य दाम्पत्यमलङ्कृत्य विधानतः॥

---

१ B भावेनापतिताय च।

पत्न्यास्तु भोजनं दद्यात् भक्ष्यभोज्यसमन्वितम् ।
ब्राह्मणस्यापि सौवर्णीमुपस्करसमन्विताम् ॥
प्रतिमां देवदेवस्य सोदकुम्भां निवेदयेत् ।
एवं यस्तु पुमान् कुर्य्यादशून्यशयनं हरेः ॥
वित्तशाठ्येन रहितो नारायणपरायणः ।
न तस्य पत्न्या विरहः कदाचिदपि जायते ॥
नारी वा विधवा ब्रह्मन् यावच्चन्द्रार्कतारकम् ।
[1]न विरूपं न शोकार्त्तं दाम्पत्यं जायते क्वचित् ॥
न पुत्र-पशु-रत्नानि क्षयं यान्ति पितामह ।
सप्तकल्पसहस्राणि सप्तकल्पशतानि च ॥
कुर्व्वन्नशून्यशयनं विष्णुलोके महीयते ॥

इत्यशून्यशयनं व्रतम् ।

---

भविष्यपुराणे— सुमन्तुरुवाच—

अशून्यशयनां नाम द्वितीयां शृणु भारत ।
यामुपोष्य न वैधव्यं स्त्री प्रयाति नराधिप ।
पत्नीवियुक्तस्तु[2] नरो न कदाचित् [3]प्रजायते ॥

उपोष्येत्यत्रोपवसनमुपासनं न पुनरनशनं अग्रे नक्तं भुञ्जीतेत्यभिधानात् ।

शेते जगत्पतिः कृष्णः श्रिया सार्द्धं यदा नृप ।

---

१ मूले न विरूपौ न शोकार्त्तौ दम्पती भवतः क्वचित् ।

२ A वियुक्तश्च । ३ A कदाचिदपि जायते ।

अशून्यशयना नाम तदा ग्राह्या हि सा तिथिः ॥
कृष्णपक्षे द्वितीयायां श्रावणे मासि भारत ।
इदमुच्चारयेत् प्रातः[1] प्रणम्य जगतः पतिम् ॥
श्रीवत्सधारिणं श्रीशं भक्त्याभ्यर्च्य श्रिया सह ।
श्रीवत्सधारिन् श्रीकान्त श्रीवास श्रीपतेऽव्यय ॥
गार्हस्थ्यं मा प्रणाशं मे यातु धर्म्मार्थकामदम् ।
शुचयो मा प्रणश्यन्तु मा प्रणश्यन्तु मे जना: ॥
[2]याम्यगाः मा प्रणश्यन्तु मत्तो दाम्पत्यभेदतः ।

शुचयोऽग्नयः, याम्यगाः पितरः ।

लक्ष्म्या वियुज्यते देवो न कदाचिद्यथा भवान् ।
तथा कलत्रसम्बन्धो देव मा मे वियुज्यताम् ॥
लक्ष्म्या न शून्यं वरद यथा ते शयनं सदा ।
शय्या ममाप्यशून्याऽस्तु तथाच मधुसूदन ॥

कलत्रसम्बन्धो देव मा मे वियुज्यतामित्यत्र मन्त्रे स्त्रीकर्त्तृकेऽपि तत्प्रयोगे कलत्रपदस्थाने पुरुषपदोहो न कर्त्तव्यः स्त्रीपुरुषयोरुभयोरपि युगपदधिकारविधानेन प्रकृतिविकृतिरूपत्वाभावात् । प्रसाद्येत्यपि नानुपपन्नमन्यथापि तदुपपत्तेरिति ।

एवं प्रसाद्य पूजाञ्च कृत्वा लक्ष्म्यास्तथा हरेः ।
फलानि दद्याच्छय्यायामभीष्टानि जगत्पतेः ॥
नक्तं प्रणम्यायतने हरिं भुञ्जीत वाग्यतः ।

नक्तं भुञ्जीतेत्यन्वयः ।

---

१ B स्नातः । २ B जामयः । ३ A D निर्ज्जराः

ब्राह्मणाय द्वितीयेऽह्नि शक्त्या दद्याच्च दक्षिणाम् ॥

शतानीक उवाच ।

कानि तान्यभीष्टानि केशवस्य फलानि तु ।
योज्यानि शयने विप्र देवदेवस्य कथ्यताम् ॥
किञ्च दानं द्वितीयेऽह्नि दातव्यं ब्राह्मणस्य तु ।
भुक्तैर्नरैर्द्विजश्रेष्ठ देवदेवस्य शक्तितः ॥

सुमन्तुरुवाच ।

यानि तत्र महाबाहो काले सन्ति फलानि च ।
मधुराणि न तीव्राणि न चापि कटुकानि च ॥
दातव्यानि नृपश्रेष्ठ स्वशक्त्या शयने नृप ।
मधुराणि च दत्वा तु मनो[1]वल्लभतामियात् ॥
योषिच्च कुरुशार्दूल ! भर्त्तुर्वल्लभतामियात् ॥
तस्मात् कटुकतीव्राणि स्त्रीलिङ्गानि च वर्ज्जयेत् ।
खर्ज्जुरमातुलुङ्गानि स्थितेन शिरसा सह ।
फलानि शयने राजन् यज्ञभागहरस्य तु ॥
एतान्येव तु विप्रस्य गाङ्गेयसहितानि च ।
द्वितीयेऽह्नि प्रदेयानि भक्त्या शय्या च भारत ॥
वासोदानं तथा धान्यं फलदानसमन्वितम् ।
गाङ्गेयस्य विशेषेण दानं धन्यं प्रचक्षते ॥

स्थितेन शिरसा विद्यमानेन वृन्तेनेत्यर्थः यज्ञभागहरो यज्ञपुरुषः गाङ्गेयमत्र सुवर्णम् ।

---

1 B।हरेः।

एवं करोति यः सम्यङ् नरो मासचतुष्टयम् ।
तस्य जन्मत्रयं वीर गृहभङ्गो न जायते ॥

मासचतुष्टयं तद्वत् कृष्णद्वितीयायामिति शेषः ।

अशून्यशयनस्य स्यात्तथा धर्म्मार्थसाधकः[१] ॥
भवत्यव्याहतैश्वर्य्यः पुरुषो नात्र संशयः ।
नारी वा राजन् धर्म्मज्ञा व्रतमेतद्यथाविधि ॥
या करोति न शोच्यासौ बन्धुवर्गस्य जायते ।
वैधव्यं दुर्भगत्वञ्च भर्त्तृत्यागञ्च सत्तम ॥
नाऽप्नोति जन्मत्रितयमेतत् चीर्त्त्वा महाव्रतम्[२] ।
इत्येषा कथिता राजन् द्वितीया तिथिरुत्तमा ॥
यामुपोष्य नरो राजन् वृद्धिंवृद्धिं श्रियं व्रजेत् ।
अत्र फलानि दद्याच्छय्यायामभीष्टानि जगत्पतेः ॥

इत्यनेन शय्यायां फलधारणं विवक्षितं न दानम्, अग्रे द्वितीयेऽपि प्रदेयानीत्यनेन फलदानविधानात् ।

अत्र प्रतिमासं दक्षिणादानमुक्तं न शय्यादानमिति कल्पान्तरमेतत् फलापकर्षात् कृष्णादिश्चात्र मासः, आचारोपष्टम्भात् ।

इत्यशून्यशयनद्वितीयाव्रतं समाप्तम् ।

---

देवीपुराणे— ब्रह्मोवाच—

अतः परं प्रवक्ष्यामि सर्व्वाभ्युदयवर्द्धनम् ।
यत् कृत्वा जायते राजा सार्व्वभौम इहैव च ॥

---

१ B धर्म्मकामार्थ साधकः । २ D पाण्डुकुलोद्वह ! ।

माघे नभसि सम्प्राप्ते नक्ताहारो जितेन्द्रियः।
प्रातःस्नायी सदाध्यायी अग्निकार्य्यपरायणः॥
देवीं सम्पूजयेन्नित्यं विल्व-पुन्नाग-चम्पकैः।
धूपन्तु गुग्गुलुं दद्यात् नैवेद्यं घृतपाचितम्॥
क्षीरान्नदधिभक्ष्यञ्च अथवा शाकयावकम्।
जपञ्च कुर्य्यान्मन्त्रस्य सहस्रमथवा शतम्॥
देव्यास्तञ्च समर्प्यैत यावत् पूर्णव्रतो भवेत्।
पूर्णे व्रते ततो वस्त्र कन्याचार्य्यद्विजांस्तथा।
भोजयेत् पूजयेच्छक्त्या हेम-भू-वस्त्र-गो-वृषैः।
अभावादथ वित्तस्य जपः कार्य्यो द्विजोत्तम॥
यः कुर्य्यात्सततं भक्त्या सोऽपि तत्तुल्यतामियात्॥
न च व्याधिर्जरा मृत्यु र्न भयं वारिसम्भवम्।
जायते देवीभक्तस्य अन्ते च पदमव्ययम्॥

अत्र मन्त्रपदानि भवन्ति।

ॐ नन्दे नन्दिनी सर्व्वार्थसाधिनी नमः। मूलमन्त्रः। ॐ नन्दे हृदयाय नमः हृदयम्। ॐ नन्दिनी शिरसे स्वाहा शिरः। ॐ सर्व्वं नमः शिखा। ॐ अर्थसाधिनी नमः कवचम्। ॐ नमः हृत् फट अस्त्रं ॐ नेत्राय नमः नेत्रं। नन्दिनी उपचारहृदयम्।

तृतीयायाञ्च पञ्चम्यां चतुर्थ्यामष्टमीषु च।
नवम्यां पौर्णमास्याञ्च एकादश्याञ्च द्वादशीम्।
षष्ठ्याश्चैव विद्येशी पूजनीया विशेषतः॥
नन्दामुद्दिश्य यो दद्याच्छ्रावणे वृषभं सितम्।

स लभेदिष्टकामाप्तिं देवीलोकञ्च शाश्वतम् ॥
नभस्ये तां समुद्दिश्य दद्याद्गां कनकञ्च वा ।
स व्रजेद्धूतपापस्तु नन्दालोकं तमक्षयम् ॥

नभस्य भाद्रे ।

आश्विने नवरात्रन्तु उपवासमयाचितैः ।
कृत्वा देवीं प्रपूज्याथ अष्टम्यामपरेऽहनि ॥
हेमपुष्पं मणिर्वस्त्रं नानाचित्रविभूषणम् ।
दानञ्च काञ्चनं देयं नन्दायै स्वर्गसिद्धये ॥
विधूतपापसंघातः सर्व्वकामसमन्वितः ।
गच्छते तन्तु वै लोकं यत्र देवी सुरार्चिता ॥
वसते कल्पकोटीस्तु अप्सरोगणभूषितः ।
नन्दते आगतश्चात्र पृथिव्यामेकराट् भवेत् ॥
कार्त्तिके पूजयित्वा तु देवीं जाति-गजाह्वयैः ।
अन्नपानं ददद्विप्रकन्यासु स्त्रीष्वपि वा ॥
श्वेतानि चैव वस्त्राणि तथा देयानि दक्षिणा ।
मुच्यते सर्व्वपापैस्तु जन्मान्तरकृतैरपि ।
इहैव जायते योगी परत्र पदमव्ययम् ॥
मार्गे च विधिवत् स्नात्वा देवीं पूज्य च कुङ्कुमैः ।
नैवेद्ये घृतपूर्णाश्च देयाः कन्यासु च द्विजे ॥
भोजयेदर्चयेदत्र वस्त्रैः कीटकुलोद्भवैः ।
प्राप्नुयात् सर्व्वकामार्थान् सर्व्वपापैः प्रमुच्यते ॥
पौषे देवीं समासाद्य यवजैः स्रग्भिरर्चयेत् ।

नैवेद्यं शालिभक्तञ्च कन्याः सम्पूज्य दर्शयेत् ॥
पीतवस्त्रैस्तथा शय्या देव्यै देयातिशोभना ।
अनेन विधिना वत्स साक्षाद्देवी प्रसीदति ॥
ददाति कामिकान् भोगानन्ते च स्वपुरं नयेत् ।
माघे तु पूजयेद्देवीं कुन्दजस्रग्भिरादरात् ॥
कुङ्कुमेन सदर्पेण तथा समुपलेपिताम् ।
सदर्पेण कस्तूरीसहितेन ।
स्नापितां विधिवत्पूर्व्वं ततः कन्यास्तु पूजयेत् ॥
द्विजांश्च चण्डिकाभक्तान् विधिना घृतपायसैः ।
दक्षिणां तिलहोमञ्च यथाशक्त्या प्रदापयेत् ॥
विधूतपापकलिलः सर्व्वभोगसमन्वितः ।
विशत्युर्व्वङ्कपुत्रश्च जायते नरसत्तम! ॥
देहान्ते नन्दिनीलोकं सर्व्वदेवनमस्कृतम् ।
प्रयाति नात्र सन्देहो अनेन विधिना नृप ॥
फाल्गुने पूजयेद्देवीं स्रग्भिस्तु सहकारजैः ।
तथा नैवेद्यभक्ष्याणि शर्करा मधुना सह ॥
भोजयेत् कन्यका विप्रान् दक्षिणा सितवाससी ।
अनेन जायते भोगी देवीलोकन्तु गच्छति ॥
सम्प्राप्ते चैत्रमासे तु देवी पूज्याऽथ किंशुकैः ।
नैवेद्ये लड्डुका देयास्तथा कन्याश्च भोजयेत् ॥
स्त्रियश्च रक्तवस्त्रैश्च दक्षितव्या यथाविधि ।
अनेन सर्व्वकामार्थान् प्राप्नुयादविचारितान् ॥

देवीलोकं व्रजेद्वत्स यत्र भोगा निरन्तराः ॥
वैशाखे पूजयेद्देवीं स्रग्भिर्वै कर्णिकारजैः ।
नैवेद्यं शक्तवः खण्डं कन्या भोज्याश्च दद्ययेत् ॥
शुभानि हेमवस्त्राणि देयानि द्विजसत्तमे ।
देवीन्तु प्रीणयेद्वत्स ! सर्व्वदेवेष्वनुत्तमाम् ॥
ज्यैष्ठे तु शङ्करी पूज्या रक्ताशोककुरुण्टकैः ।
तथा देयश्च नैवेद्यं घृतपूर्णाश्च कन्यकाः ।
भोजनीयास्तथा दद्या गोभूदानादिभिः शुभैः ॥
जलकुम्भास्तथा देयाः सम्पूर्णा वासिताम्भसा ।
अनेन वारुणान् भोगान् देवी चिप्रं प्रयच्छति ॥
आषाढ़े पूजयेद्देवीं पद्मैर्नीलोत्पलैर्दलैः ।
नैवेद्यं शर्कराभक्तं दधिभक्तं सपायसम् ॥
कन्या द्विजाः स्त्रियो भोज्या दद्ययेच्च तथा च तान् ।
नानाहेमाङ्गरागाद्यैः स्तिल-भूम्यश्व-मौक्तिकैः ॥
पूज्या भगवती शक्त्या सर्व्वकामप्रसिद्धये ।
नन्दा सुनन्दा कनका उमा दुर्गा चमावती ॥
गौरी योगेश्वरी श्वेता नारायणी सुतारका ।
अम्बिकेति च नामानि श्रावणादावनुक्रमात् ॥
ये कीर्त्तयन्ति उत्थाय तेन ते धौतकल्मषाः ।
भवन्ति कुरुशार्दूल पृथिव्यां धनसङ्कुलाः ॥
एतानि पार्थ संग्रामे रिपुपीड़ासु नित्यशः ।
स्मरंस्तरति दुर्गाणि चर्च्चिकेति सुरोत्तमाम् ॥

व्रतानां प्रवरं कार्य्यमर्द्धं वा पादमेव वा ।
मासं वाथ प्रकर्त्तव्यं श्रावणादिक्रमेण तु ॥

इति नन्दाव्रतम् ।

---

शिष्टाः—

सुप्ते जनार्द्दने कृष्णे पञ्चम्यां भवनाङ्गने ।
पूजयेन्मनसादेवीं स्नुहीविटपसंस्थिताम् ॥
करवीरैः शतपत्रैः जातीपुष्पैः सचन्दनैः ।
स्नापयेद्गव्यपयसा तथा शीतोदकेन च ॥
सघृतं पायसापूपं दद्याद्धूपञ्च गुग्गुलम् ।

मनसादेवीं विषहरां, स्नुही सिजुरिति प्रसिद्धा ।

द्वारस्योभयतो लेख्या गोमयेन विषोल्वणाः ॥
पूजयेद्विधिवत्तांस्तु दधिदूर्व्वाङ्कुरैः कुशैः ।
पिचुमर्द्दस्य पत्राणि स्नापयेद्भवनोदरे ॥
स्वयञ्चापि तदश्नीयात् ब्राह्मणांश्चापि भोजयेत् ।
कारयेज्जागरं तस्या देव्याश्चापि महोत्सवम् ॥

पिचुमर्द्दो निम्बः. तदश्नीयादिति पिचुमर्द्दं भक्षयेदित्यर्थः । अत्र च कल्पे समयप्रदीपे प्रथमश्लोकमात्रं लिखित्वा तिक्त-कटु-कषाय-मधुराणां क्रमेण भक्षणमाचरन्तीत्युक्तम् ।

ब्रह्मपुराणे—

श्रावणे रोहिणीयोगे कश्यपस्य प्रजापतिः ।
जातस्तत्राथ पूज्योऽसौ देवस्यास्य प्रवर्त्तकः ॥

गन्धैर्माल्यैश्च नैवेद्यैस्तथा ब्राह्मणतर्पणैः ।
पूज्या गावश्च रोहिण्यस्तथा नार्य्यः पतिव्रताः ॥

रोहिण्यः प्रजापतिदेवताकनक्षत्राणि ।

भविष्ये—

श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ।
द्वारस्योभयतो लेख्या गोमयेन विषोल्वणाः ॥
पूजयेद्विधिवद्वीर दधिदूर्व्वाङ्कुरैः कुशैः[1] ।
गन्धपुष्पोपहारैश्च ब्राह्मणानाञ्च तर्पणैः ॥
ये तस्यां पूजयन्तीह नागान्भक्तिपुरःसराः ।
न तेषां सर्पतो वीर! भीतिर्भवति कुत्रचित् ॥

नागास्तु—वासुकि-तक्षक-कालिय-मणिभद्र-ऐरावत-धृतराष्ट्र-कर्कोटक-धनञ्जयाः ।

इति सर्पाभयपञ्चमीव्रतम् ।

---

तत्रैव भविष्यपुराणे—

सम्प्राप्ते श्रावणे मासि यः कुर्य्यान्नक्तभोजनम् ।
क्षीरयष्टिकयुक्तेन सर्व्वसत्त्वहिते रतः ॥
पीतवर्णाञ्च गां दद्याद्भास्कराय महात्मने ।
सामान्यमखिलं कुर्य्यात् प्रागुक्तं यन्मया तव ॥
सुविचित्रैर्महायानैर्हंस-सारसयायिभिः ।
गत्वादित्यपुरं श्रीमान् पूर्व्वोक्तं लभते फलम् ॥

---

[1] मूले— क्रमात् ।

अत्र जितेन्द्रियत्व-सत्यवादित्व-गोधूम-गोरसपान-सप्तमीदयोपवास-त्रिसन्ध्यशाण्डिल्येयसहितभान्वर्च्चन-नित्याधःशायित्व सर्व्वभोगविवर्ज्जनानि सामान्यमखिलं कुर्य्यादित्यनेनोच्यन्ते।

तत्रैव उमोवाच—

मासपुष्पाणि मे ब्रूहि तेषु मासेषु यत् फलम्।
पूजिते त्वयि देवेश तथा स्नानफलं वद॥

श्रीमहादेव उवाच—

शृणु देवि महापुण्यं मासं पूजाफलं शुभम्।
पुष्पाणि च तथा वच्मि तथा स्नानफलं वरम्॥
श्रावणे शुक्लपक्षस्य अष्टम्यां समुपोषितः।
स्नापयेद्घृत-क्षीराभ्यां करवीरैश्च पूजयेत्॥
कृत्वाग्निकार्य्यं विधिवत्तथा[1] ब्राह्मणभोजनम्।
कन्याकर्त्तितसूत्रेण कारयित्वा पवित्रकम्॥
कृत्वा विचित्रगन्धैस्तु कुङ्कुमागुरुचन्दनैः।
कृत्वोपवासं सप्तम्यामष्टम्यां विप्रभोजनम्॥
आरोपयति यो भक्त्या सोऽग्निष्टोमफलं लभेत्।
पुनर्भवति वै राजा भूतले नात्र संशयः॥
मासि भाद्रपदेऽष्टम्यां शुक्लपक्षे वरानने।
स्नापयित्वा तु मां भक्त्या पयसा च घृतेन च॥
अपामार्गेण पूजान्तु कृत्वा देवि! विधानतः।
हंसयानसमारूढ़ो मम लोकं व्रजेदिति॥

---

१ D विधिवद्यो।

मासि चाश्वयुजेऽष्टम्यामर्कपुष्पैस्तु योऽर्चयेत् ।
स्नापयेद्दधिक्षीरेण कुङ्कुमेन विलेपयेत् ॥
गैरिकं यानमारुह्य ध्वजमालाकुलं शुभम् ।
युक्तं मयूरप्रवरैर्मम याति समं दिवम् ॥
कार्त्तिकस्य तु मासस्य शुक्लाष्टम्यान्तु यो नरः ।
स्नापयेन्मधु-क्षीराभ्यां जातीपुष्पैस्तु पूजयेत् ॥
कानकं यानमारुह्य किङ्किणीजालमालिकम् ।
स याति मे परं देवि गन्धर्व्वाप्सरसां प्रियः ॥
मार्गशीर्षे तु वै मासे पञ्चगव्येन यो नरः ।
स्नापयित्वार्चयेद्भक्त्या अर्कपुष्पैर्वरानने ॥
कृत्वोपवासं सप्तम्यामष्टम्यां विधिवन्नरः ।
तत्त्रैलोक्यमतिक्रम्य यत्राहं तत्र गच्छति ॥
पौषमासे तु योऽष्टम्यां भक्त्या पूजयते नरः ।
उन्मत्तकस्य पुष्पैस्तु स्नापयित्वा घृतेन च ।
स यानं दिव्यमारुह्य पुष्पकं नाम नामतः ॥
ममालयं समासाद्य मोदते शाश्वतीः समाः ।
माघमासे तथाष्टम्यां विल्वपत्रेण योऽर्चयेत् ॥
स्नापयित्वा तु मां भक्त्या [1]देवीमिक्षुरसेन तु ।
प्रभयाऽर्कसमं यानं कान्त्या चेन्दुसमं तथा ॥
आरूढ़ो मोदते नित्यं मम लोके न संशयः ।
फाल्गुनस्य तु मासस्य गन्धतोयेन यो नरः ॥

---

१ B दिव्येन C दिव्या ।

अर्चयेद्द्रोणपुष्पैस्तु महेन्द्रस्यासनं लभेत्
चैत्रे मासि तथा देवि पुष्पतोयेन यो नरः॥
स्नापयित्वार्चयेद्भक्त्या अर्कपुष्पैस्तु सुन्दरि।
बहुस्वर्णस्य यज्ञस्य विन्दते स फलं महत्॥
स यदा जायते चेह तदा पुत्राल्लभेन्नरः।
वैशाखे तु तथा मासे अष्टम्यां यस्तु मानवः॥
कर्पूरागुरुतोयेन स्नापयित्वा विधानतः।
अर्चयेच्छ्वेतमन्दारैरश्वमेधफलं लभेत्॥
गत्वा मम पुरे देवि क्रीड़ते च गणैः सह।
ज्यैष्ठे मासि तथाष्टम्यां दधिना स्नापयेत्तथा[१]॥
अर्चयेत् पद्मपुष्पैस्तु स गच्छेत् परमां गतिम्।
आषाढ़े यो नरोऽष्टम्यां नानातीर्थोदकैर्वरैः[२]॥
स्नापयित्वार्चयेद्भक्त्या पुष्पैर्धूस्तुरकस्य च।
गन्धर्व्वोरगयक्षैश्च पूज्यमानो नरो दिवि॥
क्रीड़ते च मया सार्द्धं यावदिन्द्राश्चतुर्द्दश।
य एवं वत्सरं देवि पालयेदष्टमीव्रतम्॥
न तस्य पुनरावृत्तिः सत्यमेतद्ब्रवीम्यहम्।
नीलकण्ठं हरं शम्भुं शर्व्वं भीमं महेश्वरम्॥
विरूपाक्षं महादेवमुग्रं त्र्यम्बकमेव हि।
ईश्वरञ्च शिवं देवि सर्व्वलोकेषु पूजितम्।
एतानि मम नामानि मासेष्वेतेषु कीर्त्तयेत्॥

---

१ B दध्ना यः स्नापयेत्तु माम्। २ D नवैः।

देवीपुराणे—

ईश्वर उवाच—

शृणु वत्स प्रवक्ष्यामि देव्याराधनमुत्तमम् ।
कर्म्मयज्ञन्तु यज्ञानां सुकरं सुमहत् फलम् ॥
साम्वत्सरी यथा पूजा मफलेन समाचरेत् ।
नक्षत्रवेद्यायुक्तो यो धर्म्मः कर्म्मफलार्थिनः ॥
यवः सर्पिः कुशाश्चैव गोमूत्रं दधि गोमयम् ।
पवित्रं विहितं तन्त्रे अशक्तानाञ्च भार्गव ! ॥
देवीव्रतं प्रवक्ष्यामि सर्व्वकामार्थसाधकम् ।
श्रावणे शुक्लपक्षे तु अष्टम्यां वायुभोजनः ॥
स्नात्वा मार्गपटो[१] भूत्वा जितक्रोधः क्षमान्वितः ।
देवीं संस्नाप्य तोयेन पुनः क्षीरेण स्नापयेत् ॥
ततो गुग्गुलुधूपञ्च सतुरुष्कं प्रदापयेत् ।
ततो गन्धोदकस्नानं पुनस्तोयेन स्नापयेत् ॥
श्रीखण्डेन समालभ्य विल्वपत्रैश्च पूजयेत् ।
पायसं दापयेद्देव्या नैवेद्यं तेन भोजयेत् ॥
कन्या द्विजांश्च शक्त्या तु तेषां दद्याच्च दक्षिणाम् ।
कात्यायनीति चोच्चार्य्य प्रीयतां मम सर्व्वदा ॥
आत्मनः पारणं तच्च कृत्वा प्राप्नोति भार्गव ।
अश्वमेधफलस्याग्र्यं देव्या लोकञ्च गच्छति ॥
तथागत्य इमां भूमिं पृथिव्यां जायते नृपः ।

---

१ B मार्कपटः ।

तेन संलभते योगं शिवप्राप्तिकरं परम् ॥
मासे प्रौष्टपदे शुक्ले गोशृङ्गाग्रच्युतया ।
मृदया ह्यात्मनो ह्यङ्गमुपलिप्य तु स्नापयेत्[1] ॥

अत्राष्टम्यामित्यनुषज्यते ।

[2][तथाचामलकैः स्नात्वा शुचिः सङ्गविवर्जितः ।
पूजयेद्यूथिकापुष्पै र्देवीं चीरेण स्नापिताम् ॥
चन्दनोदकमिश्रेण कुङ्कुमेन विलेपयेत् ।]
ततः पूपकनैवेद्यं कर्णमोटां[3]श्च दापयेत् ॥
अगुरुं धूपने दद्यात्तिलतैलेन दीपकान् ।
तेन ता भोजयेत् कन्या द्विजान् सद्वृत्तिनः सदा[4] ॥

तेन चीरेण सह । पाखण्डान्नावलोकेत नीचान् शास्त्रवहिष्कृतान् ।
दक्षिणाः शक्तितो देयाः स्वस्ति वाच्यञ्च मङ्गलम् ।
पारणञ्चात्मनस्तद्वत् सौत्रामणिफलं लभेत् ॥

तत् चीरम् ।

प्रयाति विष्णुलोकञ्च ततो विप्रोऽभिजायते ।
धनाढ्ये महति गोत्रे वेदवेदाङ्गपारगे ॥
पुत्रवान् धनवान् भोगी सुखं प्राप्य शिवो भवेत् ।
शुक्लाष्टम्यामाश्विने तु मृदा स्नानं समाचरेत् ॥
ततो देवीं स्नापयेच्च दध्ना चैवोदकेन च ।
आलभ्य रोचनां मूर्द्ध्नि दहेत् धूपञ्च वालकम् ॥

---

१ B उपलिप्तन्तु कारयेत् ।
२ D [ ] चिह्नितांशः पतितः ।
३ B कर्णवेष्टां ।
४ D सद्वृत्तियत्तिनः

सनखं सितया मिश्रं पद्मपुष्पैस्तथार्चयेत् ।

नखं नखीति प्रसिद्धः सुगन्धिद्रव्यभेदः ॥

नैवेद्यं रौहिषं मांसमाजं शाल्यकजन्तथा ।

रौहिषं रोहिषो हरिणविशेषः तदीयं, आजं छागीयम् ॥

गोधूमविकृतान् भक्ष्यान् घृतयुक्तान् निवेदयेत् ।

तेन कन्यास्तु संभोज्या द्विजांश्चापि क्षमापयेत् ॥

शक्तितो दक्षिणा देया आत्मनस्तच्च भोजनम् ।

गोसहस्रप्रदानस्य फलं प्राप्नोति मानवः ॥

अरोगी सुखवान् धन्यो जायते चेह मानवः ।

दुर्गानामानुसङ्कीर्त्त्य तस्या लोके महीयते ॥

कार्त्तिके दूर्व्वमूलाभिर्म्मृद्भिः स्नात्वा तु भार्गव ।

देवीं गन्धोदकैः स्नाप्य श्रीगौरैः पूज्य लेपयेत् ॥

धूपञ्च षड्रसं देयं तिलतैलेन दीपकान् ।

नैवेद्ये यावकं सर्पिः कन्याविप्रेषु चात्मनः ॥

भोजनं स्वस्ति वाच्येत दक्षिणा प्रीयतां शिवा ।

अनेन विधिना शुक्र विद्यादानफलं लभेत् ॥

वेद-वेदाङ्गतत्त्वज्ञस्तदन्ते शिवतां व्रजेत् ।

मार्गशीर्षे तथा मासि अष्टम्यां गिरिमृत्स्नया ॥

स्नात्वा देवीं ततः स्नाप्य तीर्थतोयेन भार्गव ।

लेपयेत् वालकैः कुष्ठैः पूजा जाती-गजाह्वयैः ॥

गजाह्वयो नागकेशरः ।

धूपं कृष्णागुरुं दद्यात् घृतैर्दीपान् विबोधयेत् ।

नैवेद्यं दधिभक्तन्तु कन्यास्तेनैव भोजयेत् ॥
दक्षिणा शक्तितो देया आत्मनस्तच्च पारणम् ।
तच्च दधिभक्तमेव ।
उमा मे प्रीयतां वाच्यं वाजपेयफलं लभेत् ॥
इहैव धनवान् भोगी देहान्ते ब्रह्मणः पदम् ।
पौषाष्टम्यान्तु दूर्व्वाग्रैः स्नात्वा शुक्लपरिच्छदः ।
जितक्रोधः स्नापयेच्च देवीं कर्पूरवारिणा ॥
विलेपयेत् कुङ्कुमेन मांसी-वालक-चन्दनैः ।
धूपञ्च निर्दहेत् पुष्पैः पूजनीया कुरुण्टकैः ॥
कृशरा गुड़नैवेद्यं कन्या भोज्यास्तु तेन वै ॥
आत्मनः पारणे तच्च शक्त्या वै भक्षयेद्द्विजान् ।
नारायणी सदा प्रीता मम देवी प्रसीदतु ॥
कृतेन यदुराजेन्द्र ! भूमिदानफलं लभेत् ।
सुभगो धनसम्पन्नः परञ्च शिवमाप्नुयात् ॥
माघे मासि गवां शृङ्गस्नद्भिः स्नात्वा तु भार्गव ।
देवीं तोयेन संस्नाप्य तथा चीर-घृतेन च ॥
स्नापयेत पुनस्तोयैर्लेपयेत् कुङ्कुमेन च ।
धूपं दीपवरं दद्यात् कुन्दपुष्पैश्च पूजयेत् ।
घृतपूर्णांश्च नैवेद्यं कन्यां विप्रांश्च तेन वै ।
भोजयेदात्मनस्तच्च दक्षिणा प्रीयतां जया ॥
सर्व्वयागफलं शुक्र लभते नात्र संशयः ।
फाल्गुने सर्षपैः स्नात्वा देवीनाम्ना फलाम्बुना ॥

तथा इक्षुरसेनैव भूयस्तेनोदकेन च ।
रोचनालेपने पूजा शतपत्रिकया सह ॥
दीपो घृतेन धूपस्तु चन्दनं नख-शर्करा ।
नैवेद्यं शाकवर्त्तिश्च भोजनं कन्यकासु च ॥
आत्मनस्तच्च कुर्व्वीत दक्षिणां स्वस्ति वाचयेत् ।
विजया सुखदा नित्यमस्तु मे चिन्तितानि च[1] ।
अनेन विधिना शुक्र राजसूयसमं फलम् ।
लभते श्रद्धया युक्तो यतो देवीमयं जगत् ॥
चैत्राष्टम्यान्तु स्नायीत मातृस्थाने मृदम्भिः ।
देवी तीर्थजलैः स्नाप्या लेप्या मदविलेपनैः ॥
धूपं तुरुष्कमौशीरं ह्यतिमुक्तैश्च पूजयेत् ।
तुरुष्कं सिह्लकं, अतिमुक्तैर्माधवीपुष्पैः ।
अजिता सर्व्वकामानां पूरणाय सुखाय मे ॥
नैवेद्यं शालिभक्तञ्च शर्कराः कन्यकास्वपि ॥
आत्मनस्तच्च वाच्यन्तु शक्तितो दक्षिणां ददेत् ।

इति वाच्यमित्यन्वयः ।

विप्रान् कन्याः समाच्छाद्य हेमदानफलं लभेत् ।

समाच्छाद्य वस्त्राणि परिधाप्य ।

सहकारफलैः स्नानं वैशाखेष्वष्टमीषु च ॥
आत्मना देवताः स्नाप्या मांसी-वालकवारिभिः ।
लेपनं फलकर्पूरैर्धूपं पञ्चसुगन्धिकम् ॥

---

१ B नित्यं सुसुखा चेतनेति च ।

देव्याः पूजान्तु कुर्व्वीत केतक्या चम्पकेन च।
शर्करा चीरनैवेद्यं कन्याविप्रेषु भोजनम्॥
आत्मनः पारणं तच्च दक्षिणां शक्तितो ददेत्।
अपराजितां भवानीं शिवानाम्ना तु वाचयेत्॥
प्रीयतां सर्व्वकालं मे ईप्सितन्तु प्रयच्छतु।
सर्व्वतीर्थाभिषेकस्नानेन प्राप्नोति भार्गव॥
सूर्य्यलोकं व्रजेदन्ते तत्तुल्यो जायते सदा।
अष्टम्यामेव ज्येष्ठस्य तिलैः स्नायाद्विचक्षणः॥
सर्व्वसङ्गपरित्यागी देवीं जातिफलाम्बुना।
स्नापयेल्लेपयेत्तेन चन्दनेन सुगन्धिना॥
ततो विजयपुष्पैस्तु पूजयेद्ब्रह्मसत्तम।
नैवेद्ये शक्तवो देया शर्करा कन्यकास्वपि॥
दक्षिणा शक्तितो देया चर्च्चिकां स्वस्ति वाचयेत्।
लभते शुक्र यज्ञस्य सौत्रामणिसमं फलम्।
अष्टम्यान्तु तथाषाढ़े निशातोयेन स्नापयेत्॥
ततो देवीं जलैः कुष्ठे वरदा-मधुकेन च।
स्नाप्य पुनस्तां कर्पूर-रोचना-चन्दनाम्बुभिः॥
धूपं चन्दन-कर्पूर-वालक-सित सिह्लकैः।
दद्याच्छर्करचूर्णानि शुभानि पानकानि च॥
दापयेत् कन्यकाभोज्यं विप्राणां स्वात्मनस्तथा।
शक्तितो दक्षिणा देया महिषघ्नीति कीर्त्तयेत्॥
दीपमाला घृतेनैव सर्व्वकामान् प्रयच्छति।

सर्व्वयज्ञ-महोदान-सर्व्वतीर्थफलं लभेत् ॥
एतद्व्रतवरं प्रोक्तं विष्णुना ब्रह्मणा मया ।
जगतो हितमिच्छद्भिस्त्रीणं दुर्गाव्रतं महत् ॥
भानुना ग्रहविध्वंसगमने[१] च कृतं पुरा ।
तथा देवासुरैर्यक्ष-नाग-किन्नर-मानवैः ।
अप्सरोभिस्तथा स्त्रीभिः सौभाग्यस्य विवृद्धये ॥
कृतं वै ग्रहशार्द्दूल ! ये च कुर्य्युर्यथाविधि ।
श्रवणादस्य प्राप्नोति सर्व्वकामसुखानि च ।
इष्टानि लभते मर्त्यो वन्ध्या पुत्रं प्रसूयते ॥

इति दुर्गाव्रतम् ।

---

भविष्यपुराणे—

सुमन्तुरुवाच—
श्रावणे मासि राजेन्द्र यः कुर्य्यान्नक्तभोजनम् ।
क्षीरपिष्टकभक्तेन सर्व्वभूतहिते रतः ॥
उपवासपरो वीर नवम्यां पक्षयोर्द्वयोः ।
पूजयेद्विधिव[२]द्भक्त्या श्रद्धया चण्डिकां नृप ! ॥
कौमारीमिति वै नाम्ना नामतः पूजयेत् सदा ।
कृत्वा [३]रूप्यमयीं शक्त्या घोरां वै पापनाशिनीम् ॥
करवीरस्य पुष्पैश्च गन्धैश्चागुरुचन्दनैः ।
धूपेन च महार्हेण मोदकैश्चापि पूजयेत् ॥

---

१ D —समरे ।   २ B ब्राह्मणं भक्त्या ।   ३ B रौप्य— ।

कुमारीर्भोजयेद्भक्त्या स्त्रियो विप्रांश्च शक्तितः।
भुञ्जीत वाग्यतः पश्चादित्त्वपचकृताशनः॥
एवन्तु पूजयेद्देवीं श्रद्धया परयाऽन्वितः।
स याति परमं स्थानं यत्र देवो गुहः स्थितः॥

महाङ्गो धूपविशेषः।

तथाचोक्तम्—

कर्पूरं चन्दनं पुष्पमगुरुं चन्दनं तथा।
व्यजनं[1] शर्करा कृष्णं महाङ्गं सिह्लकन्तथा।
महाङ्गोऽयं स्मृतो धूपः प्रियो देवस्य सर्व्वदा॥

अत्र महाङ्गं मांसी कृष्णं मरीचं। कृष्णं मरीच-लोहयोरिति विश्वदर्शनात्।

अत्र च जितेन्द्रियत्व सत्यवादित्व कामक्रोधविवर्जितत्व त्रैकालिकार्च्चापूजाग्निकार्य्य भूमिशय्या मासान्तभगवतीस्नान-महापूजाः कार्य्याः। अयञ्च विधिराधिकः कृत्यस्यास्य प्रक्रमात्।

विष्णुधर्म्मे—

श्रावणे शुक्लपक्षे तु द्वादश्यां प्रीयते नृप।
गोप्रदानेन देवेशो यत्पूर्व्वं कथितं तव॥

यत्पूर्व्वं कथितमिति विष्णुधर्म्मोक्तालङ्कृतगवीदानग्रहणम्।

तत्रैव दृष्टम्—

कृतोपवासः सम्प्राश्य पञ्चगव्यं नरेश्वर।
घृतक्षीराभिषेकञ्च कृत्वा विष्णोः समाहितः॥

---

१ मूले— व्यञ्जनम्।

समभ्यर्च्य च गोविन्दं पुष्पादिभिररिन्दम!।
उदङ्मुखीमर्च्चयित्वा तथा गृष्टिं पयस्विनीम् ॥
सपुत्रां वस्त्रसंवीतां सितयज्ञोपवीतिनीम्।
स्वर्णशृङ्गीं शुभाकारां हिरण्योपरिसंस्थिताम् ॥
हिरण्यं वाचयित्वाथे ब्राह्मणायोपपादयेत्।
इमां त्वं प्रतिगृह्णीष्व गोविन्दः प्रीयतामिति ॥

इमां त्वं प्रतिगृह्णीष्वेत्यादि वाचयित्वा ब्राह्मणाय गौर्देया हिरण्यञ्च दक्षिणामुपपादयेदिति सम्बन्धः।

सम्यगुच्चार्य्य तं विप्रं गोविन्दं नृप! कल्पयेत्।
अनुव्रजेच्च गच्छन्तं पदान्यष्टौ नराधिप ॥
अनेन विधिना धेनुं यो विप्राय प्रयच्छति।
गोविन्दप्रीणनाद्राजन् विष्णुलोकञ्च गच्छति ॥
सप्तावरांस्तथा पूर्व्वान् सप्तात्मानञ्च मानवः।
सप्तजन्मकृतात् पापात् मोचयत्यवनीपते ॥
पदे पदे तु यज्ञस्य गोसवस्य च मानवः।
फलमाप्नोति राजेन्द्र इत्यायैवं जगौ हरिः ॥
सर्व्वकामप्रदा सा स्यात् सर्व्वकालेषु पार्थिव।
भवत्यघापहाराय यावदिन्द्राश्चतुर्द्दश ॥
सर्व्वेषामेव पापानां कृतानामविजानताम्।
प्रायश्चित्तमिदं प्रोक्तमनुतापोपबृंहितम् ॥

अथ श्रावणशुक्लैकादश्यां कृतोपवासो द्वादश्यां कृतनित्यक्रियः पञ्चगव्यं प्राश्य विष्णोर्घृताभिषेकं विधाय—

समाहितस्तमभ्यर्च्य उदङ्मुखीं पयस्विनीं सपुत्रां वस्त्रसम्वीतां सितयज्ञोपवीतिनीं सुवर्णशृङ्गीं शुभाकारां हिरण्यपत्रार्पित खुर-चतुष्टयां स्थापयित्वा—

इमां त्वं प्रतिगृह्णीष्व गोविन्दः प्रीयताम्—

इति ब्राह्मणं संबोध्य पठित्वा अनुवादोपनीतफलकामो गोविन्दरूपतया ब्राह्मणं चिन्तयित्वा तस्मै दत्त्वा हिरण्यं दक्षिणां दद्यादिति वाक्यार्थः। दत्त्वा चानुव्रजनम् ।

वराहपुराणे— दुर्व्वासा उवाच—

एवमेव श्रावणे तु मासि संकल्प्य द्वादशीम् ।
अर्च्चयेत्परमं देवं गन्ध-पुष्प-विलेपनैः[1] ॥
बुद्धाय पादौ सम्पूज्य श्रीधरायेति वै कटिम् ।
पद्मोद्भवाय जठरमुरः संवत्सराय च ॥
सुग्रीवायेति कण्ठन्तु द्वौ भुजौ विश्वबाहवे ।
शङ्खचक्रास्त्राणि सम्पूज्य शिरो वै परमात्मने ॥
एवमभ्यर्च्य मेधावी तस्याग्रे पूर्व्ववद्घटम् ।
स्थापयेत्तत्र सौवर्णं बुद्धं कृत्वा विचक्षणः ॥
तमप्येवन्तु सम्पूज्य ब्राह्मणाय निवेदयेत् ।
अनेन विधिना पूर्व्वं द्वादशी समुपोषिता ॥
शुद्धोदनस्य बुद्धोऽभूत् स्वयं पुत्रो जनार्द्दनः ।
महतीञ्च श्रियं प्राप्तः पुत्रपौत्रसमन्वितः ॥

---

१ B —निवेदनैः ।

भुक्त्वा राज्यश्रियं सोऽथ गतिं परमिकां गतः ॥
एवमेवेत्यादिना मत्स्यद्वादशीसामान्यधर्मातिदेशः ।
इति बुद्धद्वादशीव्रतम् ॥

---

विष्णुधर्मोत्तरे—

जलधेनुप्रदानेन श्रावण्यां स्वर्गमाप्नुयात् ।
विष्णुधर्मोक्तविधिना जलधेनुमुपकल्प्य दद्यात् ॥

स च विधिः ।

जलधेनुं प्रवक्ष्यामि प्रीतये जलशायिनः ।
जलकुम्भं द्विजश्रेष्ठाः सुवर्णरजतान्वितम् ॥
कल्पयेद्रत्नगर्भन्तु स्थापयेत्तं यवोपरि ।
सर्व्वधान्यैस्तथा ग्राम्यैः समन्तादपि धारयेत् ॥

ग्राम्यसर्व्वधान्यानि परिभाषोक्तानि ।

सितवस्त्रयुगच्छन्नं दूर्व्वापल्लवशोभितम् ।
कुष्ठ-मांसी-वचोशीर-वालकामलकैर्युतम् ॥
प्रियङ्गुं पत्रसहितं सितयज्ञोपवीतिनम् ।
सच्छत्रोपानहञ्चैव सोष्णीषं परिकल्पयेत् ॥
तिलपात्रैर्युतं कृत्वा हिरण्यैश्च चतुर्द्दिशम् ।
दध्योदनयुतेनाथ पात्रेण स्थगितं मुखे ॥
कल्पयेद्वत्समेवन्तु वारिधानीन्तु वत्सकम् ।
उपोषितः समभ्यर्च्च्य देवेशं जलशायिनम् ॥
पुष्पधूपोपहारैश्च यथाविभवमादृतः ।

अहतामुपवीताय दद्याद्विप्राय भक्तिमान् ॥
जलशायी जगद्योनिः प्रीयतां मम केशवः ।
इति चोच्चार्य्य तां दद्यात् प्रीणयेत् द्विजदम्पतीम्[1] ॥
अहोरात्रोषितो दद्याद्यथाविधि मयेरितम् ।
अपक्वान्नाशिनां देयमहोरात्रमतःपरम् ॥

अपक्वान्नाशिनामनग्निपक्वभोजिनाम् ।

अनेन विधिना दद्याज्जलधेनुं द्विजोत्तमाः ।
सर्व्वान् कामानवाप्नोति लोकानाप्नोति शाश्वतान् ॥
मोक्षमाप्नोति पापेभ्यः सर्व्वेभ्यः स तथा नरः ।
सौभाग्यं महदाप्नोति रूपञ्च परमं तदा ॥
पुरुषः स यदा याति यस्य यस्य च दर्शनम् ।
करोति परमाह्लादं तस्य तस्य द्विजोत्तमाः ॥
नित्याभितृप्तो भवति तथैव च निरामयः ।
सर्व्वबाधाप्रशमनं प्राप्नोति गतकल्मषः ॥
वारुणं लोकमाप्नोति सकृद्दत्वा द्विजोत्तमाः ।
दत्वा तामसकृद्विप्रा लोकमाप्नोति वैष्णवम् ॥

आह्लादहेतोः परमं पवित्रम्
दानं मयेदं कथितं द्विजेन्द्राः ।
धन्यं यशस्यं दुरितापहारि
कामप्रदं लोकहितं प्रशस्तम् ॥

---

1 D प्रीणयेच्च द्विजोऽपि तम् ।

उपोष्यापरदिने जलकुम्भमयीं मुक्तोपकरणसहितां जलधेनुं तत्पार्श्वे तच्चतुर्थभाग जलभृतवारिधानीमयमुक्तोपकरणसहितं वत्सञ्च स्थापयित्वा वासुदेवं यथाशक्त्युपचारैः "ॐ जलशायिने नमः" इति सम्पूज्य ब्राह्मणायार्च्चिताय वराम्बरधरायार्च्चितां ॐ जलमयी-मित्यादि मन्त्रं पठित्वा विष्णुधर्म्मोक्तजलधेनु दानफलप्राप्तिकामः—

धेनुं चतुर्थांशजलभृतवारिधानीमय सुवर्णरजतान्वित रत्नगर्भ-यवस्य शस्य-सर्व्वधान्यपरिवारितसितवस्त्रयुगच्छन्नां दूर्व्वापल्लव-शोभितां कुष्ठमांसी-सुरोशीर वालकामलक-प्रियङ्गुपत्रसहितां सितयज्ञोपवीतिनीं सच्छत्रोपानत्कां सोष्णीषां सहिरण्यतिलपात्र-चतुष्टययुतां दध्योदनयुतपात्रस्थगितमुखीं जलधेनुं दद्यात् । प्रतिगृहीता जलशायी केशवः प्रीयतामिति वदेत् ।

ततो यजमानोऽपक्वान्नाशी तद्दिनं नियतो नयेत् ।

इति जलधेनुदानम् ।

---

ब्रह्मपुराणे—

श्रावण्यां श्रावणे चैव पूर्व्वं हयशिरा हरिः ।
जगाद सामवेदन्तु सर्व्वकिल्बिषनाशनम् ॥
सिन्धुर्नदी वितस्तायां प्रविष्टा तत्र चैव हि ।
अतोऽर्थे श्रावणे तत्र स्नानं सर्व्वार्थसिद्धिदम् ॥

श्रावणे तत्र इति सामानाधिकरण्यं न तु नदीपरत्वं तत्परत्वे "सर्व्वा नद्यो रजस्वलाः" इति बाधसापेक्षत्वापत्तेः

स्नानन्तु यच तत्रास्मिन्निम्नगाजले सिन्धुर्नदीत्यादेस्तिथि-
स्तावकत्वात् ।

कृत्वा सम्पूजयेद्विष्णुं शङ्ख-चक्र-गदाधरम् ।
श्रोतव्यान्यथ नामानि पूज्या विप्राश्च सर्व्वदा ॥
क्रीड़ितव्यञ्च भोक्तव्यं तदैव स्वजनैः सह ।
जलक्रीड़ा च कर्त्तव्या नारीभिर्भर्त्तृलब्धये ॥

विष्णुः—

श्रावण्यां श्रवणायुक्तायां जलधेनुं सान्नां वासोयुगच्छन्नां दत्त्वा स्वर्गलोकमवाप्नोति ।

वशिष्ठः—

श्रावण्यग्रहायण्योरष्टकासु च पितृभ्यो दद्यात् ।

याज्ञवल्क्यः—

अध्यायानामुपाकर्म्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥
पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां[1] कुर्य्यादुत्सर्गं विधिवद्बहिः ॥

अधीयन्त इत्यध्याया वेदाः, तेषां संस्कारकमुपाकर्म्माख्यं कर्म्म श्रावण्यां पञ्चम्यां हस्तेन वेत्यन्वयः, ओषधिभावे शस्यसम्पत्तौ ।

अत्र यद्यपि तुल्यवद्विकल्पो भाति तथापि तदुभयविहित नक्षत्रालाभे केवला पञ्चदश्येवादर्त्तव्या केवलाया अपि तस्या वाक्य-न्तरेण विहितत्वात् ।

---

[1] D छन्दसो .

तथाहि वशिष्ठः—

अथातः स्वाध्यायकर्म्म श्रावण्यां पौर्णमास्यां प्रौष्ठपद्यां वा अग्निमुपसमाधायेत्यादि । पञ्चमीट्टक्कोपाधियुतैवादरणीया तस्याः केवलायाः केनाप्यनभिधानात् ।

पौषमासस्येत्यादिना उत्सर्गविधिः अत्र च कालविकल्पः शाखिभेदेन व्यवस्थितः ।

विष्णुः—उत्सर्गोपाकर्म्मणोर्मध्ये वेदाङ्गाध्ययनं कुर्य्यात् ।

मनुः—

श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान् ॥
पुष्ये तु छन्दसां कुर्य्याद्बहिरुत्सर्ज्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्व्वाह्णे प्रथमेऽहनि ॥
यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।
विरमेत्पक्षिणीं रात्रिं यदाप्येकमहर्निशम् ॥
अत ऊर्द्धन्तु छन्दांसि शुक्लेषु नियतः पठेत् ।
वेदाङ्गानि तु सर्व्वाणि कृष्णपक्षे तु संपठेत् ॥

हारीतः—

अर्द्धपञ्चमान् मासानधीत्योत्सृजति पञ्चाद्धं षष्ठं वा त्र्यहमनध्यायः पञ्चरात्रमेकेषां, उपाकृत्य प्रतिपद्यधीयीत अनध्याये वर्ज्जयेदिति ।

पक्षिणी वर्त्तमानागाम्यहर्युक्ता रात्रिः ।

एवञ्चोत्सर्गानन्तरं पक्षिणीं रात्रिमेकाहोरात्रं वा कृष्णपक्षादि-

कस्य वर्ज्जयित्वा उपाकरणाख्यकर्म्मपर्य्यन्तं पूर्व्वाधीतवेदाध्ययनं नत्वपूर्व्वाध्ययनं कार्य्यमुत्सर्गानन्तरमुपाकर्म्मपर्य्यन्तमष्टम्यादिवर्ज्जनम् । वेदाध्ययनसमय इति तात्पर्य्यार्थः ।

उपाकरणस्याध्ययनाङ्गत्वेऽपि गृहस्थकर्त्तव्यतायामाचारः प्रमाणम् । उपाकर्म्मोत्सर्गौ तु स्मृतिकारैरेव विवेचितौ ।

यमः—

कार्त्तिकस्य तमिस्रे तु मघासु नवमेऽहनि ।
अहोरात्रोषितः स्नात्वा धर्म्मराजाय भोजयेत् ।
विधिवद्ब्राह्मणान् भक्त्या स्वर्गलोके महीयते ॥

इत्यनन्तरम्—

श्रावण्यां पौर्णमास्यां वा सोपवासो जितेन्द्रियः
नदीं समुद्रगां प्राप्य तिलभक्षोऽथवा पुनः ॥
प्राणायामशतं कृत्वा मुच्यते सर्व्वपातकैः ।
गायत्र्यष्टसहस्रन्तु जप्त्वा मुच्येत वा पुनः ॥
गायत्र्यष्टसहस्रन्तु तिलैर्हुत्वा तदा द्विजः ।
मुच्यते पातकैः सर्व्वैर्यदि न ब्रह्महा भवेत् ॥

मत्स्यपुराणे—

श्रावण्यान्तु बलिः कार्य्यः सर्पाणां मन्त्रपूर्व्वकः ।
शयनारोहणञ्चैव कार्य्यं सुखमभीप्सता ॥

अथ शयनं पन्नगानां मार्गशीर्षोत्थानमग्रे वाच्यम् ।

तथा—

श्वेतकल्पप्रसङ्गेन धर्म्मान् वायुरिहाब्रवीत् ।

यत्र तदाथर्वीयं स्याद्रुद्रमाहात्म्यसंयुतम्
चतुर्विंशतिसाहस्रं पुराणं तदिहोच्यते ॥
श्रावण्यां श्रावणे मासि गुड़धेनुसमन्वितम् ।
यो दद्याद्दधिसंयुक्तं ब्राह्मणाय कुटुम्बिने ।
शिवलोके स पूतात्मा कल्पमेकं वसेन्नरः ॥

महासान्धिविग्रहिकठक्कुर श्रीवीरेश्वरात्मज सान्धिविग्रहिक-ठक्कुर श्रीचण्डेश्वरविरचिते कृत्यरत्नाकरे श्रावणतरङ्गः ॥

---

## अथ भाद्रकृत्यम् ।

तत्र वामनपुराणे—

मासि भाद्रपदे दद्यात् पायसं दधिसर्पिषा ।
हृषीकेशप्रीणनार्थं लवणं सगुड़ौदनम् ॥

ग्रहणकमधिकृत्य देवीपुराणे—

भाद्रपदे च गण्डकी पुण्यत्यधिकारः ।

स्कन्दपुराणे—

यस्तु भाद्रपदे मासि एकभक्तं समाचरेत् ।
स तेन कर्म्मणा देव्यो धनवानभिजायते ॥

श्रीमहाभारते—

प्रौष्टपद्यन्तु यो मासमेकाहारो भवेन्नरः ।
गवाढ्यं स्फीतमचलमैश्वर्य्यं प्रतिपद्यते ॥

भविष्यपुराणे—

कृत्वा भाद्रपदे मासि व्योमशालिमयं नृप ।

वितानध्वजवस्त्राढ्यं नानामाल्यविभूषितम् ॥
निशाकरकरप्रख्यैर्महायानैः सुशोभनैः ।
वर्षकोटिसहस्राणि सूर्य्यलोके महीयते ॥
अत्र सूर्य्याय निवेदयेदिति श्रावणोक्तमनुषज्यते ।
सम्प्राप्य विविधान् भोगान् सर्व्वानृद्धिफलास्तथा ।
क्रमादागत्य लोकेऽस्मिन् राजानं विन्दते पतिम् ॥

अत्र मासव्यापकैकभक्तादि-साधारणकृत्यानि कार्त्तिकोक्त-कामव्रतेऽनुसन्धेयानि ।

इति कामव्रतम् ॥

---

तथा—

वीर भाद्रपदे मासि यः कुर्य्यान्नक्तभोजनम् ।
हुतशेषं हविर्दद्यात् वृक्षमूलमुपाश्रितः ॥
स्वप्यादायतने रात्रौ सर्व्वभूतानुकम्पकः ।
दद्याद्गां तरुणीं वीर भास्कराय महात्मने ॥
निशाकरकरप्रख्यैः वज्र-वैदूर्य्यचित्रितैः ।
चक्रवाकसमायुक्तैर्विमानैः सर्व्वकामिकैः ॥
गत्वादित्यपुरं रम्यं ससुरासुरवन्दितम् ।
मोदते स महायानैर्यावदाहूतसंप्लवम् ॥

अत्रापि पौषवक्ष्यमाण भविष्यपुराणीय मासव्यापि नक्तव्रत साधारणोभयसन्ध्युपवासादिकृत्यानि वोद्धव्यानि ।

---

१ D वज्र—।

विष्णुधर्म्मोत्तरे—

कीर्त्तितं सुमहत् फलमित्यधिकृत्य—

पौष्ठपद्ये तथा मासे प्रदानात् फाणितस्य च ।

फाणितं खण्डमरुकीति प्रसिद्धमिति दानसागरः

देवलः—

अयुग्मास्तिथयः सर्व्वा युग्माभ्यः परिपूजिताः

कालतः पूजितौ मासौ माघ-प्रौष्ठपदौ तथा ॥

[1]पक्षयोः शुक्लपक्षस्य शकुनैः परिपूजितः ।

भविष्ये सुमन्तुरुवाच—

नरो भाद्रपदे मासि यः कुर्य्यान्नक्तभोजनम् ।

भुञ्जानः पायसं वीर कालशाकस्य श्रद्धया ॥

उपवासपरो नित्यं नवम्यां पक्षयोर्द्वयोः ।

पूजयेद्वैष्णवीं भक्त्या शङ्खचक्रासिधारिणीम् ॥

जातीपुष्पैर्महाबाहो ! गन्धैः श्रीखण्डमिश्रितैः ।

श्रीखण्डागुरुकर्पूरैः सिह्लकेन च धूपयेत् ॥

नैवेद्यं घृतसंपूर्णं तथा शक्त्या निवेदयेत् ।

मांसेन प्रीणनं तस्यास्ततः पूज्याश्च कन्यकाः ॥

गोशकृत्प्राश्य विधिवत् ततो भुञ्जीत वाग्यतः ।

प्रीणयित्वा द्विजान् भक्त्या योषितश्च नराधिप ॥

य एवं पूजयेद्भक्त्या वैष्णवं सततं नरः ।

विमानवरमारूढ़ो विष्णुलोके महीयते ॥

---

१ D पक्षयोः शुक्लपक्षात्तु बहुलः श्राद्धपूजितः

गोशकृत् गोमयम् । इत्युभयनवमीव्रते मासव्याप्येकभक्तादिकं पौरुषमुन्नेयम् ।

ब्रह्मपुराणे—

अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे ।
अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः ॥
भारावतारणार्थाय क्षत्रियाणां क्षयाय च ।
तस्मात् स तत्र सम्पूज्यो यशोदा देवकी तथा ॥
गन्धैर्माल्यैस्तथा धूपैर्यवगोधूमसम्भवैः ।
सगोरसैर्भक्ष्यभोज्यैः फलैश्च विविधैरपि ।
रात्रौ प्रजागरः कार्य्यो नृत्यगीतसमाकुलः ॥
अरुणोदयवेलायां नवम्याञ्च ततः स्त्रियः ।
रक्तवस्त्रावृताः सर्व्वाः पुष्पमाल्यैरलङ्कृताः ।
नयन्ति प्रतिमा ह्येषां महाविभवसम्भवाः ॥

एषां प्रतिमाः कृष्ण-यशोदा-देवकीप्रतिमाः ।

नदीतीरं शुभं रम्यं विविक्तं[1] वा महत्सरः ।
तत्र स्नानं प्रकुर्व्वन्ति स्नापयन्ति च तास्ततः ॥

ताः प्रतिमाः ।

ततः प्रविश्य च गृहं यवान्नं भुञ्जते च ताः ।

ताः स्त्रियः ।

युक्तमिक्षुविकारैश्च मध्वाज्य-मरीचैः सह ॥

---

१ D विभक्तं।

स्त्रीपुंससामान्याधिकारमेवेदं कृष्णादिपूजनं तत्र सङ्कोचक-विरहात् । प्रतिमानयनादेरङ्गस्य स्त्रीकर्तृकत्वाभावेऽपि सामा-न्याधिकारे बाधाभावात् ।

इयञ्चाष्टमी रोहिणीनक्षत्रमनपेक्ष्यैव फलप्रदा बोद्धव्या रोहिणी-योगाश्रुतेः ।

भविष्यपुराणे—

रोहिणी च यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तम ।
जयन्ती नाम सा प्रोक्ता सर्व्वपापहरा तिथिः ॥
यद्बाल्ये यच्च कौमारे यौवने वार्द्धकेऽपि यत् ।
सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ॥
तत् क्षालयति भूतेशं तस्यामभ्यर्च्य भक्तितः ।
होम जप्यादि दानानां फलञ्च शतसम्मितम् ॥
समाप्नोति न सन्देहो यच्चान्यन्मनसेप्सितम् ।
उपवासस्य तत्रोक्तो महापातकनाशनः ॥

विष्णुधर्म्मोत्तरे भूतेशमिति स्थाने गोविन्दमिति पाठः । भाद्रकृष्णे प्रायश इयं रोहिण्यष्टमी भवति अन्यत्रापि यदा लभ्यते तदा पुण्यैव विशेषानभिधानात् ।

अत्र देवीपुराणे—देव्याः शक्रमपूजायां भाद्रकृत्यानन्तरम्—

अष्टम्यां रोहिणीयोगे सोपवासस्तु पूजयेत् ।
विष्णुलोकमवाप्नोति सर्व्वकामसमृद्धिदम् ॥

गौडीयनिबन्धे—

अर्द्धरात्रिके रोहिण्यष्टम्योर्योगो रोहिण्यष्टमी नाम पुण्यतमः

कालः । अत्र चोपवास-जागर-विष्णुपूजादि प्रशस्तं तिथि-नक्षत्र-योगान्ते पारणमित्युक्तम् ॥

## अथ रथयात्रा ।

भविष्यपुराणे—शतानीक उवाच ।

रथयात्रा कथं कार्य्या कस्मिन् काले तिथौ तथा ।

दुर्गाया द्विजशार्दूल कथ्यात्र विधिरुच्यते ॥

सुमन्तुरुवाच ।

मासि भाद्रपदे देव्याः कृष्णपक्षे स्वशक्तितः ।

कर्त्तव्या सा ततो यात्रा दुर्गायाः श्रद्धयान्वितैः ॥

शस्तदारुमयं कृत्वा रथं दृढ़परिच्छदम् ।

नानारूपगणाकीर्णं सुदृढ़ं दृढ़रूपकम् ॥

सिंहध्वजपताकाढ्यं श्वेतच्छत्रोपशोभितम् ।

मयूरपत्रघण्टाढ्यं नानाशोभाभिरावृतम् ॥

[1]नाना सुगन्धपुष्पाढ्यं नानाचामरभूषितम् ।

अधिवासयेद्रथं देव्या अष्टम्यां विधिवन्नृप ॥

कृत्वाग्निकार्य्यं विधिवत् पूजयित्वा द्विजोत्तमान् ।

पुत्रकांश्च यथाशक्त्या मातरश्च तथा नृप ॥

नवम्यां भोजयित्वा तु ब्राह्मणान् विधिवत्पुनः ।

रथमारोहयेद्दुर्गां शाण्डिलेयं प्रपूज्य च ।

[1] D सुगन्धपुष्पधपाढ्यं ।

शिष्टस्तस्याः पञ्चशिखं वामतः परिकल्पयेत् ॥

अस्या वामत इत्यन्वयः।

शङ्ख-तूर्य्य-निनादैश्च भेरीपणवनिस्वनैः।
ब्राह्मणानान्तु घोषैश्च शुभैः प्रेक्षणकैस्तथा ॥
नृत्यमानैः पुत्त्रकैश्च पूज्यमाना दिने दिने।
तिष्ठेद्भगवती दुर्गा रथारूढ़ा महामते! ॥
यावन्महानवम्यन्तं नवम्याञ्चालयेन्नृप।
अष्टम्यां भोजनं दत्त्वा ब्राह्मणानां महीपते ॥
दत्त्वा च शक्त्या राजेन्द्र दीनान्धकृपणेषु च।
पुत्त्रकेषु च विशेषेण कृत्वा च विधिवद्बलिम्।
महानवम्यां भ्रामयेद्रथारूढ़ां त्रिशूलिनीम् ॥
समेन वर्त्मना वीर यत्नतो भ्रामयेद्रथम्।
ब्राह्मणैः सोपवासैश्च भक्तिनम्रैर्द्विजोत्तम ॥
सन्नाह्य सर्व्वतो यत्ना रथञ्चाश्वैः सुशीलिभिः।
वृषभैर्वा सुबलिभिर्नगरस्यान्ततो नृप ॥
भ्रामयेद्वै पुरं रम्यं विधिवत्तां प्रदक्षिणम्।
विधिनानेन ते वच्मि समासात् कुरुनन्दन! ॥
नानाविधं बलिं वीर भक्त्या मांससमन्वितम्।
खड्गहस्तो गृहीत्वा वै क्षिपेत् पूर्व्वदिशामुखे ॥
नृत्यमानैर्वीरवरैर्वृतो नानायुधोद्यतैः।
खड्गैर्विकोषैः कौरव्य! पट्टिशै ऋष्टिभिस्तथा ॥
वाणैश्च भिन्दिपालैश्च तथान्यैरायुधैर्नृप।

तथा वाद्यस्वनैर्वीर नृत्यमानैश्च रूपकैः॥
एवं बलिं विनिःक्षिप्य पुरे याति रथो नृप।
ब्रह्माणी पृष्ठतस्तस्यास्ततो माहेश्वरी नृप॥
वाराही वैष्णवी मैन्द्री कौमारी वज्रिणी तथा।
एताः पुरो रथारूढ़ा गच्छन्ति प्रथमं विभो॥
नानाविधैः प्रेक्षणकैः शङ्खवाद्यस्वनैः शुभैः।
ततो भगवती देवी पूज्यमाना द्विजोत्तमैः॥
प्रथमं बह्वृचैर्वीर ततो वाजसनेयकैः।
सामगैश्च ततो वीर! विप्रैराथर्व्वणैस्ततः॥
ततो राज्ञा जनैश्चान्यैः सर्व्वैर्नगरवासिभिः।
पूर्व्वद्वारं समासाद्य पूज्यमाना चतुष्पथे॥
तिष्ठेदेकदिनं राजन् ततो गच्छेत दक्षिणाम्।
दिनमेकञ्च तत्रापि तिष्ठेद्राजन् प्रपूजिता॥
तस्माद्गच्छेत् पश्चिमाञ्च दिनमेकञ्च तिष्ठति।
पूज्यमाना धान्यवैश्यैस्तस्माद्गच्छेत्तथोत्तराम्।
तत्रापि पूज्यते शूद्रैर्विधिवत् कुरुनन्दन॥
शूद्रमारोपयेद्यस्तु रथे देव्याः नराधिप।
स गच्छेद्रौरवं नाम नरकं नात्र संशयः।
यः कुर्य्यात्पर्व्वकालेषु महायात्राप्रवर्त्तनम्॥
दुर्गाया रथयात्रायां नगरान्तपरिभ्रमे।
महाचित्रध्वजैः शुभ्रैः किङ्किणीरवकान्वितैः॥
वितानध्वजमालाभिर्घण्टाचामरभूषणैः।

शङ्खभेर्य्यादिमिलित-गीतवाद्यादिमङ्गलैः[१] ॥
लेप्यदारुमयैर्यन्त्रै र्माठरचोगणादिभिः।
उदकाग्नेयमन्त्रैश्च वह्न्याश्चर्य्यैरनेकशः ॥
स्त्रीदोलाचक्रयन्त्रैश्च राजदासीषु शोभितम्।
उद्यानस्नानपानाद्यैर्महाश्चर्य्यसमायुतम् ॥
महाजनसमाकीर्णं यथाविभवविस्तरैः।
स सर्व्वदानपुण्यानि सर्व्वयज्ञफलानि च ॥
लब्धा नरवरः श्रीमान् दुर्गायात्राप्रवर्त्तनात् ॥
ब्रह्मलोके महाभागो मोदते देववत् सदा।
भ्रामयन्ति रथं ये वै नराः भक्तिसमन्विताः ॥
पृष्ठतः पुरतश्चैव ये च भक्ता भ्रमन्ति वै।
कुर्व्वन्तो यात्रां दुर्गायास्ते यान्ति परमं पदम् ॥
नृत्यमाना विशेषेण गायमाना विशेषतः।
ये पश्यन्ति नरा भक्त्या ते यान्ति परमाकृतिम् ॥
तिष्ठमानां रथे देवीं यो नमस्कुरुते नृप।
मुच्यते स नरः पापैर्वाजपेयञ्च विन्दति ॥
कृत्वा प्रदक्षिणं यस्तु प्रणमेदवनीकृतः।
सर्व्वपापविनिर्मुक्तः स याति त्रिदिवालयम् ॥
चन्दनागुरुकर्पूरैः कुङ्कुमेन विलेपयेत्।
योऽम्बिकां रथमारूढ़ां सोऽश्वमेधमवाप्नुयात् ॥

---

१ D—सङ्कुलैः।

नानापुष्परजोभिश्च यथा देवीं समर्चयेत् ।
सेह कामानवाप्याग्र्यान् विष्णुलोके महीयते ॥

सेह स इहेति पदभेदः, सैष राजा युधिष्ठिर इतिवत्

नानाविधैर्भक्ष्यभोज्यैर्यस्तु पूजयतेऽम्बिकाम् ।
सोऽश्वमेधफलं विन्देद्ब्रह्मलोकञ्च गच्छति ॥
नानाविधैः प्रेक्षणकैः दुर्गायाः पुरतो नृप ।
प्रजागरन्तु यः कुर्य्यात् ब्रह्मलोके महीयते ॥
ये वहन्ति नरा दुर्गां श्रद्धया परयान्विताः ।
तेऽश्वमेधफलं प्राप्य विष्णुलोकं व्रजन्ति हि ॥
नानाविधैः प्रेक्षणकैर्ब्राह्मणानाञ्च भोजनैः ।
यात्रां कुर्व्वन्ति ये भक्त्या दुर्गायाः कुरुनन्दन ॥
गोदानैः स्वर्णदानैश्च पावकानाञ्च तर्पणैः ।
ते प्राप्य विविधान् भोगान् गच्छन्ति परमं पदम् ॥
भङ्गं कुर्व्वन्ति ये मूढा यात्रायाः पुरुषाधमाः ।
गच्छन्ति नरकं घोरं ब्रह्महत्यासमन्विताः ॥
तस्मात् प्रयत्नतः कार्य्या यात्रा भक्तिसमन्वितैः ।
महिषाजशिरोभिस्तु नानाबलिसमन्विता ॥
इत्थं भ्राम्य रथं देव्याः स्वस्थानन्तु ततो नयेत्
तत्राप्येकं दिनं दुर्गा तिष्ठेत्सा तु महीपते ॥
अपराह्ने ततः स्नात्वा चतुर्द्दश्यां महीपते ।
कृत्वा नीराजनं राजंस्ततो गर्भगृहं विशेत् ॥

पौर्णमास्यान्ततः कुर्य्याद्देव्याः प्रीत्या महं नृप।
नानाविधैर्भक्ष्य-भोज्यैस्तथा प्रेक्षणकैः शुभैः॥

इति दुर्गादेव्या रथयात्रा।

---

ब्रह्मपुराणे—

युगाद्येषु युगान्तेषु श्राद्धमक्षयमुच्यते।

इत्युपक्रम्य—

अथ भाद्रपदे कृष्णाचतुर्द्दश्याञ्च द्वापरम्।

उक्त रथयात्रायां युगादिव्यवस्थायाञ्च मासपरिस्थित्युक्तन्यायात् शुक्लादिमासक्रमेण कृष्णपक्षो बोद्धव्यः।

तथा—

सूर्य्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य च।

गोतमः—

अथ प्रौष्ठपदे मासि तिष्ययुक्ते च संस्थिताः।
छन्दोगा मिलिताः कुर्य्युः प्रातरौत्सर्गिकीः क्रियाः॥

तिष्यः पुष्यनक्षत्रम्।

ततः प्रभृति सर्व्वेषां छन्दसां समुदीरणम्।
हस्तेन यावत् संयुक्तमुपाकरणवासरम्॥

कर्म्मप्रदीपे—

ऋषीणां सिच्यमानानामन्तरालं समाश्रिताः।
संपिबेयुः शरीरेण पर्षन्मुक्तजलच्छटाः॥

विद्यादीन् ब्राह्मणः कामान् पुत्रादीन् नार्य्यपि ध्रुवम्।
आमुष्मिकाण्यपि सुखान्याप्नुवन्त्याच संशयः॥

सिच्यमानानां तर्प्यमाणानां पर्षन्मुक्तजलच्छटाः तर्पणकर्त्तृगण-मुक्तजलविन्दून्। ब्राह्मण इत्युपलक्षणं य इत्यनेन सर्व्वाधि-कारिकथनात्। अतएव ऋषितर्पणानधिकारिणामप्यत्राधिकारः, एतच्च नार्य्यपि इत्यनेन व्यक्तम्।

अत्र गार्ग्यः—

शुक्लपक्षे च हस्तायामुपाकर्म्मापराह्णिकम्।

तदुभयमपि ग्रामाद्बहिः प्राच्यामुदीच्यां वा नाभ्यर्द्धजले स्नात्वा कर्त्तव्यमध्ययनाङ्गत्वेऽप्यस्याचारात् स्वातन्त्र्यमपि।

भाद्रमुपक्रम्य ब्रह्मपुराणे—

अमावस्यायां पित्र्ये तु नक्षत्रे सति संयुताः।
सप्त प्रकाराः पितरो जाताः कमलसम्भवात्॥
तेभ्यः पूजा तु कर्त्तव्या तत्र सर्व्वात्मना बुधैः।
पिण्डो देयस्तथाष्टाङ्गः श्राद्धं कार्य्यं सुसम्पदा॥

इमामेवामावस्यां श्रावणीयां पुरस्कृत्य शुक्लादिमासरीत्याह मरीचिः—

मासे नभस्यमावस्या तस्यां दर्भचयो मतः।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः॥

मत्स्यपुराणे ईश्वर उवाच—

शृणुष्वावहिता देवि तथैवानन्तपुण्यकृत्।
नराणामथ नारीणामाराधनमनुत्तमम्॥

नभस्ये वाथ वैशाखे पुष्ये मार्गशिरस्य च।
शुक्लपक्षे तृतीयायां [1]स्नातः सन् गौरसर्षपैः॥
गोरोचनं सगोमूत्रमुष्णं गोशकृतं तथा।
दधि-चन्दनसम्मिश्रं ललाटे तिलकं न्यसेत्॥
सौभाग्यारोग्यकृद्यस्मात् सदा च ललिताप्रियम्।
प्रतिपक्षं तृतीयासु पुमानापीतवाससी॥
धारयेदथ रक्तानि नारी चेत् पतिसंयुता।
विधवा धातुरक्तानि कुमारी शुक्लवाससी॥
देव्यर्चां[2] पञ्चगव्येन ततः क्षीरेण केवलम्।
स्नापयेन्मधुना तद्वत् पुष्पगन्धोदकेन तु॥
पूजयेच्छुक्लपुष्पैस्तु फलैर्नानाविधैरपि।
धान्यकाजाजि[3] लवण गुड़क्षीरघृतान्वितैः॥
शुक्लाक्षततिलैरर्चां ततो देव्याः सदार्चयेत्।
अर्चां प्रतिमां शुक्लाक्षताः सिततण्डुलाः।
पादाद्यभ्यर्चनं कुर्य्यात् प्रतिपक्षं वरानने॥
वरदायै नमः पादौ तथा गुल्फौ नमः श्रियै[4]।
अशोकायै नमो जङ्घे पार्व्वत्यै जानुनी तथा॥
ऊरू मङ्गलकारिण्यै वामदेव्यै तथा कटिम्।
पद्मोदरायै जठरमुरः कामश्रियै नमः॥
करौ सौभाग्यदायिन्यै बाहू हरमुखश्रियै।

---

१ D सुस्नातः—। २ BD देवीन्तु।
३ A—जाति। ४ A श्रिय।

मुखं दर्पणवासिन्यै स्मरदायै स्मितं नमः॥
गौर्य्यै नमस्तथा नासामुत्पलायै च लोचने।
तुष्ट्यै ललाटमलकान् कात्यायन्यै नमस्तथा॥
नमो गौर्य्यै नमः पुष्ट्यै नमः कान्त्यै नमः श्रियै।
रम्भायै ललितायै च वासुदेव्यै नमो नमः॥
एवं सम्पूज्य विधिवदग्रतः पद्ममालिखेत्।
पत्रैर्द्वादशभिर्युक्तं कुङ्कुमेन सकर्णिकम्॥
पूर्व्वेण विन्यसेद्गौरीमपर्णाञ्च ततः परम्।
भवानीं दक्षिणे तद्वद्रुद्राणीञ्च ततः परम्॥
विन्यसेत् पश्चिमे सौम्यां सदा मदनवासिनीम्।
वायव्ये पाटलामुग्रामुत्तरेण ततोऽप्युमाम्॥
मध्ये यथास्वमाशासु मङ्गलां कुमुदां सतीम्।
भद्राञ्च[1] मध्ये संस्थाप्य ललितां कर्णिकोपरि॥
कुसुमैरक्षताभिर्वा नमस्कारेण विन्यसेत्।
अक्षताभिस्तण्डुलैः। अक्षता यवा इति पारिजातः।
गीत-मङ्गलघोषञ्च कारयित्वा सुवासिनीम्॥
पूजयेद्रक्तवासोभी रक्तमाल्यानुलेपनैः।
सिन्दूरं स्नानपूर्णञ्च[2] तासां शिरसि पातयेत्॥
स्नानपूर्णं स्नानीयद्रव्यपूर्णं कुङ्कुमम्।
सिन्दूर-कुङ्कुमस्नानमतीवेष्टं यतस्ततः॥

---

१ रुद्राञ्च। २ D स्नानचूर्णं।

तस्योपदेष्टारमपि पूजयेत् यत्नतो गुरुम्।
न पूज्यते गुरुर्यत्र नरैस्तत्राफलाः क्रियाः॥
नभस्ये पूजयेद्गौरीमुत्पलैरसितैः सदा।
बन्धुजीवैराश्वयुज्यां कार्त्तिके शतपत्रकैः॥
आश्वयुज्यामाश्विनतृतीयायां प्रकरणात्॥
जातीपुष्पैर्मार्गशीर्षे पौषे पीतैः कुरुण्टकैः।
कुन्दपुष्पैः सुवर्णाद्यैर्देवीं माघे तु पूजयेत्॥
सिन्दुवारेण जात्या वा फाल्गुनेऽप्यर्च्चयेदिमाम्।
चैत्रे तु मल्लिकाशोकैर्वैशाखे गन्धपाटलैः॥
ज्यैष्ठे कमलमन्दारैराषाढ़े च जयाम्बुजैः[२]।
जया जयन्ती।
कदम्बैरथ मालत्या श्रावणे पूजयेत् सदा॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
विल्वपत्रार्कपुष्पञ्च यवान् गोशृङ्गवारि च॥
पञ्चगव्यञ्च विल्वञ्च प्राशयेत् क्रमशस्तथा।
एतद्भाद्रपदाद्यन्तु प्राशनं समुदाहृतम्॥
प्रतिपत्तञ्च मिथुनं तृतीयायां वरानने।
भोजयित्वार्च्चयेद्भक्त्या वस्त्र-माल्य-विलेपनैः॥
पुंसः पीताम्बरे दद्यात् स्त्रियाः कौसुम्भवाससी।
निष्पावाजाजिलवणमिक्षुदण्डगुणान्वितम्॥

---

१ D सर्व्वैः। २ B जवाम्बुजैः।

तस्यै दद्यात् फलं पुंसः सुवर्णोत्पलसंयुतम् ॥
यथा न देवि! देवेशस्त्वां परित्यज्य गच्छति।
तथा मामुद्धराशेषदुःखसंसारसागरात् ॥
कुमुदा विमला नन्दा भवानी वसुधा शिवा ॥
ललिता कमला गौरी सती रम्भाऽथ पार्व्वती
नभस्यादिषु मासेषु प्रीयतामित्युदीरयेत् ॥
व्रतान्ते शयनं दद्यात् सुवर्णकमलान्वितम्।
मिथुनानि चतुर्विंशान् द्वादशैवाथवार्च्चयेत् ॥
अष्टौ षड्वाप्यथ पुनश्चानुमासं समर्च्चयेत्।
पूर्व्वं दत्वाथ गुरवे शेषानभ्यर्च्चयेद्‌बुधः ॥
उक्तानन्ततृतीयैषा सदानन्तफलप्रदा।
सर्व्वपापहरा देवी सौभाग्यारोग्यवर्द्धनी ॥
न चैनां वित्तशाठ्येन कदाचिदपि लङ्घयेत्।
नरो वा यदि वा नारी वित्त[१]शाठ्यात्पतत्यधः ॥
गर्भिणी सूतिका नक्तं कुमारी वा[२]थ रोगिणी।
यदाऽशुद्धा तदान्येन कारयेत् प्रयता स्वयम् ॥
इमामनन्तफलदां यस्तृतीयां समाचरेत्।
कल्पकोटिशतं साग्रं शिवलोके महीयते ॥
वित्तहीनोऽपि कुर्व्वीत वर्षत्रयमुपोषणैः।
पुष्पमन्त्रविधानेन सोऽपि तत् फलमाप्नुयात् ॥

---

१ A यतः। २ B वा रजस्वला।

नारी वा कुरुते या तु कुमारी विधवाथ वा ।
सापि तत् फलमाप्नोति गौर्य्यनुग्रहलालिता ॥
इति पठति शृणोति वा य इत्थम्
गिरितनयाव्रतमिन्दुलोक[1]संस्थः ।
मतिमपि च ददाति सोऽपि देवै-
रमरवधूजनकिन्नरैश्च पूज्यः ॥
इत्यनन्तव्रततृतीया ॥

---

तृतीयां प्रकृत्य भविष्यपुराणे—

माघे भाद्रपदे वापि स्त्रीणां धन्या प्रचक्षते ।

तथा—

गुड़ापूपास्तु दातव्या मासि भाद्रपदे तथा ॥
तृतीयां पायसं वापि वामदेवस्य प्रीतये ॥

मन्वन्तरादिश्चेयं तृतीया ।

शिष्टाः—

शुक्लपक्षे चतुर्थ्यान्तु सिंहे चन्द्रस्य दर्शनम् ।
मिथ्याभिशापं कुरुते तस्मात् पश्येन्न तं तदा ॥

अत्र ब्रह्मपुराणमपि पठन्ति ।

नारायणोऽभिशप्तस्तु निशाकरमरीचिषु ।
स्थितश्चतुर्थ्यामद्यापि मनुष्यानापतेच्च सः ॥

---

१ B इन्द्रवास—।

अतश्चतुर्थ्यां चन्द्रन्तु प्रमादाद्वीच्य संयतः।
पठेद्धात्रेयिकावाक्यं प्राङ्मुखो वाप्युदङ्मुखः॥

धात्रेयिकावाक्यं विष्णुपुराणे—

सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः।
सुकुमारक! मा रोदीस्तव ह्येष स्यमन्तकः॥

तथा शिष्टाः—

भाद्रशुक्लचतुर्थ्यान्तु हर्य्यालो नाम या मता।
पूजयेत् पार्व्वतीं तस्यां सौभाग्यं न विहन्यते॥

भविष्यपुराणे—

शिवा शान्ता शुभा राजन् चतुर्थी त्रिविधा मता।
मासि भाद्रपदे शुक्ला शिवलोकेषु पूजिता॥
तस्यां स्नानं तथा दानमुपवासो जपस्तथा।
क्रियमाणं शतगुणं प्रसादाद्दन्तिनो नृप॥

दन्तिनो गणपतेः।

गुड़-लवण-घृतानान्तु दानं शुभकरं स्मृतम्।
गूड़ापूपैस्तथा वीर! पुण्यं ब्राह्मणभोजनम्॥
यास्तस्यां नरशार्द्दूल पूजयन्ति सदा स्त्रियः।
गुड़-लवण-पूपैश्च श्वश्रुं श्वशुरमेव च॥
ताः सर्व्वाः सुभगा वै स्युर्विघ्नेशस्यानुमोदनात्।
कन्यका तु विशेषेण विधिनानेन पूजयेत्॥

कन्याकर्त्तृकपूजायां श्वश्रु-श्वशुरपूजा नास्ति तस्यास्तदभावात् गणपतिश्च प्रधानतया पूज्यः।

शुक्लपक्षमुपक्रम्य भविष्यपुराणे—

सुमन्तुरुवाच—

तथा भाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः ।
यस्त्वालेख्ये नरो नागान् कृष्णवर्णादिवर्णकैः ॥
पूजयेद्गन्धपुष्पैस्तु सर्पिर्गुग्गुलु-पायसैः ।
तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः ॥
आसप्तमात् कुलात्तस्य न भयं नागतो भवेत् ।
तस्मात् सर्व्वप्रयत्नेन नागान् सम्पूजयेन्नरः ॥

इत्यालेख्यनागपञ्चमीव्रतम् ॥

तक्षकादयस्तु नागा अष्टौ श्रावणपञ्चम्यामुक्ताः ॥

---

ब्रह्मपुराणे—

शुक्लायामथ पञ्चम्यां नीलो नागपतिः पुरा ।
सतीह्रदं[1] प्रविष्टस्तु तस्मात्तं तत्र पूजयेत् ॥
माल्यैर्वस्त्रोपहारैश्च देवाग्निगुरुतर्पणैः ।
नृत्यगीतैस्तथा वाद्यैः पुष्पैर्धूपान्नसम्पदा ।
स्थाननागांश्च विधिना पूजयेच्चापि सर्व्वदा ॥

स्थाननागाश्च भविष्यपुराणोक्ताः ।

तथा—

ये केचित् पृथिवीतले ये ऽधस्तान्महोदधेः[2], ।
हिमाचले च ये विन्ध्ये येचान्तरीक्षे दिवि स्थिताः ।

---

१ D —देवं । २ D केचिसदो ऽधस्तात् ।

ये नदीषु तथा नागा ये सरःस्वपि भोगिनः।

ये वापीषु तड़ागेष्विति।

पुण्या भाद्रपदे मासि पञ्चमी नागपञ्चमी।

क्षीरस्नानपूजादिभिर्नागप्रीतिहेतुर्नागपञ्चमीसमाख्यानम्।

भविष्यपुराणे एव शतानीक उवाच—

नागदष्टः पिता यस्य भ्राता वा दुहिताऽपि वा।

माता पुत्रोऽथ भार्य्या वा कर्त्तव्यन्तदृदस्व मे॥

मोक्षाय तस्य विप्रेन्द्र दानं व्रतमुपोषितम्।

ब्रूहि मे द्विजशार्द्दूल येन तद्वै करोम्यहम्॥

सुमन्तुरुवाच—

उपोष्या पञ्चमी राजन् नागानां पुष्टिवर्द्धनी।

स्वमेकमेकं राजेन्द्र विधानं शृणु भारत॥

मासि भाद्रपदे या तु शुक्लपक्षे महीपते।

सा तु पुण्या मया प्रोक्ता ग्राह्याऽसौ गतिकाम्यया।

ज्ञेया द्वादश सम्वर्त्तं पञ्चम्यो भरतर्षभ॥

द्वादश पञ्चम्यो ज्ञेया इत्यन्वयः, सम्वर्त्तो वत्सरः।

कल्पतरौ तु—

ज्ञेया द्वादशमासस्य जपं जप्यञ्च भारत!॥

इति पाठः॥

चतुर्थ्यामेकभक्तञ्च तस्यान्नक्तं प्रकीर्त्तितम्।

भूरिभारमयं नागमथवा कालधौतकम्॥

भूरिभारमयं सुवर्णभारमयम्। कालधौतकं रौप्यमयम्।

कृत्वा दारुमयं वापि अथापि मृण्मयं नृप।

शक्त्यपेक्षया विकल्पः।

पञ्चम्यामर्चयेद्भक्त्या नागं पञ्चफणं नृप।
करवीरैः शतपत्रैः जातीपुष्पैश्च सुव्रत॥
तथा गन्धप्रधूपैश्च पूज्य पन्नगमुत्तमम्।
ब्राह्मणान् भोजयेत् पश्चात् घृत-पायस-मोदकैः॥
अनन्तं वासुकिं पद्मं शङ्खं कम्बलमेव च।
तथा कर्कोटकं नागं नागमश्वतरं नृप॥
धृतराष्ट्रं शङ्खपालं कालियं तक्षकं तथा।
पिङ्गलञ्च महानागं मासि मासि प्रकीर्त्तितम्॥
सम्वत्सरान्ते पारणं स्यान्महाब्राह्मणभोजनम्॥
इतिहासविदे नागं [1]गैरिकेण कृतं नृप!।

गैरिकेण सुवर्णेन।

तथार्ज्जुनी प्रदातव्या वाचकस्य महीपते॥

अर्ज्जुनी गौः।

एष पारणके चापि[2] विधिः प्रोक्तो बुधैर्नृप।
तव पित्रा कृतश्चैव पितुर्मोक्षाय भारत॥
एकमेकमुख्या वै वीर पञ्चमी भरतर्षभ।
सुवर्णभारनिष्पन्नं नागं दत्वा तथा च गाम्॥
व्यासस्य कुरुशार्दूल पितुरानृण्यमाप्तवान्।

---

१ B काञ्चनं रत्नचित्रितम्। २ B एष वै नागपञ्चम्याः

तव पित्रा कृतेत्येव पञ्चम्योपासते नृप ॥
उपासते लोकाः पञ्चम्या करणभूतया ।
उत्सृज्य नागतां वीर तव पूर्व्वपितामहः ॥
पुष्येत[1]रसदो यातस्तथा पुष्यसदो नृप ।
पुष्येतर—पुष्यशब्दौ स्वर्गिविशेषवचनौ ।
सुनासीरसदो गत्वा तथा भार्गसदो गतः ।
सुनासीरसदः इन्द्रसभां, भार्गसदः सूर्य्यसभाम् ।
सूरसदस्ततो गत्वा कञ्जजस्य सदो गतः ॥
कञ्जजस्य ब्रह्मणः ।
अन्येऽपि ये करिष्यन्ति इदं व्रतमनुत्तमम् ।
इष्टकं मोचते तेषां शुभं स्थानमवाप्स्यते ॥
यश्चेदं शृणुयान्नित्यं श्रद्धाभक्तिसमन्वितः ।
कुले तस्य न नागेभ्यो भयं भवति कुत्रचित् ॥

इति दष्टोद्धरणपञ्चमीव्रतम् ॥

---

शुक्लपक्षप्रकरणे तत्रैव—
सुमन्तुरुवाच ।
येयं भाद्रपदे मासि षष्ठी स्याद्भरतर्षभ ।
पुण्या चेयं पापहरा शिवा शान्ता [2]शुभा नृप ॥

---

१ B पुष्योत्तर— । २ B गुहप्रिया ।

स्नानदानादिकं किञ्चित्तस्यामक्षयमुच्यते।
येऽस्यां पश्यन्ति गाङ्गेयं दक्षिणापथमाश्रितम्।
ब्रह्महत्यादिपापैस्ते मुच्यन्ते नात्र संशयः॥
तस्मादस्यां सदा पश्येत् कार्त्तिकेयं सदैव हि॥
पूजयन्ति गुहं येऽस्यां नरा भक्तिसमन्विताः।
प्राप्येह ते शुभान् लोकान् गता रुद्रसलोकताम्॥
यस्तु कारयते गेहं सुदृढं सुप्रतिष्ठितम्॥
दारुशैलमयं भक्त्या कृत्वा श्रद्धासमन्वितः।
गाङ्गेयं यानमारुह्य गच्छेद्गाङ्गेयसद्म वै॥
समार्ज्जनादिकं कर्म्म कुर्य्याद्गृहे गृहे नरः।
ध्वजस्यारोहणं राजन् स गच्छेद्रुद्रसद्म वै।
चन्दनागुरुकर्पूरैः यस्तु पूजयते गृहम्।
गवाश्वरथयानाढ्यं सैनापत्यमवाप्नुयात्॥
राज्ञां पूज्यः सदा प्रोक्तः कार्त्तिकेयो महीपते।
कार्त्तिकेयादृते राज्ञां नान्यः पूज्यः प्रचक्षते॥
सङ्ग्रामं गच्छमानोऽपि पूजयेत् कृत्तिकासुतम्।
स शत्रून् जयते वीरो यथेन्द्रो दानवान्रणे॥
तस्मात् सर्व्वप्रयत्नेन पूजयेच्छङ्करात्मजम्।
पूजमानस्तु तं भक्त्या चम्पकैर्विविधैर्नृप॥
मुच्यते सर्व्वपापेभ्यस्तथा गच्छेच्छिवालयम्।
तैलं षष्ठ्यां न भुञ्जीत न दिवा कुरुनन्दन॥
यस्तु षष्ठ्यां नरो नक्तं कुर्य्याद्भरतसत्तम।

सर्व्वपापैः स निर्मुक्तो गाङ्गेयस्य सदो व्रजेत् ॥
चिः कृत्वा दक्षिणामाशां गत्वा यः श्रद्धयान्वितः।
पूजयेद्देवदेवेशं स गच्छेत्कान्तिमन्दिरम् ॥

इति षष्ठीकल्पः।

---

एतस्य षष्ठीकल्पस्य सर्व्वमक्षयमुच्यते ॥
इत्यन्तमेकदेशमात्रमेव समयप्रदीपे लिखितम्।
स्नानदानादिकं सर्व्वमस्यामक्षयमुच्यते।
इति पाठे मत्येवास्यामिति शेषो दत्तः। तत्र हेतुर्न सम्यक् गोपाल-लक्ष्मीधरादिभिस्तैतत्-कल्पमध्ये विद्यमानः—
षष्ठ्यां तैलं न भुञ्जीतेत्यादिमार्द्धश्लोकः।
षष्ठ्यां फलाशनो राजन् विशेषात् कार्त्तिके नृप।
इत्यादि षष्ठीकल्पे—स नक्तेन व्रती भवेदित्यस्याग्रे स्वर्गे च नियतं वास इत्यस्य पश्चाल्लिखितः, शेषन्तु तत्प्रतिपाद्यं कर्म्मजातं न लिखितं। तत्रापि हेतुर्नास्ति। अनेन तु सार्द्धश्लोकेन साङ्ग षष्ठीनक्तव्रतमत्र कल्पे प्रतिपाद्यते। अनेन तु व्रतरूपं स्नानदानादि कार्त्तिकेयपूजादि च प्रतिपाद्यते इति परमार्थः।
भाद्रशुक्लमुपक्रम्य ब्रह्मपुराणे—
षष्ठ्यान्तु माधवः कीर्त्तिं लब्धवान् देवकीसुतः।
स्नाननागः कुमारस्य गावो भूतास्य भूतले ॥

तस्मात्ते तत्र सम्पूज्याः शर्करासम्भवैः फलैः।
मध्वाज्यमरीचोपेतैः पुष्पैर्धूपैर्यथाक्रमम्॥

परिपक्वैरिति भूपाल-कृत्यसमुच्चये पाठः।

भृत्य-मित्र-कलत्रेभ्यो दत्वा भुञ्जीत तान्यपि।

भविष्यपुराणे ब्रह्मोवाच।

मासि भाद्रपदे वीर शुक्लपक्षेऽत्र यो भवेत्।
षष्ठ्यां गणकुलश्रेष्ठ? स भद्रः परिकीर्त्तितः॥

यो भवेद्रविवार इत्यर्थः।

तत्र नक्तञ्च यः कुर्य्यादुपवासमथापि वा।
हंसयानसमारूढ़ो याति हंससलोकताम्॥

उपवासाशक्तौ नक्तं। हंस आदित्यः।

मालतीकुसुमानीह तथा श्वेतञ्च चन्दनम्।
विजयञ्च तथा धूपं नैवेद्यं पायसं परम्॥

विजयनामा धूपः परिभाषोक्तः।

पूजायां भास्करस्यैतत् कुर्य्यात्त्रिपुरनन्दन।
इत्थं सम्पूज्य देवेशं मध्याह्ने भुवनाधिपम्॥
दत्वा तु दक्षिणां शक्त्या ततो भुञ्जीत वाग्यतः।
पायसं गणशार्दूल सगुड़ं सर्पिषा सह॥
य एवं पूजयेद्भाद्रे[1] मानवस्तिमिरापहम्।
सर्व्वान् कामानवाप्नोति पुत्रदारधनादिकान्॥

---

१ B भक्त्या

विमुक्तः सर्व्वपापेभ्यो याति ब्रह्मसलोकताम् ।
एष भद्रविधिः प्रोक्तो मयाऽयन्ते गणाधिप ।
कृत्वा श्रुत्वा [1]सर्व्वपापान्मुच्यते मानवो भुवि ॥

आदित्यवारकल्प भद्रविधिः ।

---

ब्रह्मोवाच—

शुक्लपक्षे तु सप्तम्यां मासि भाद्रपदेऽच्युत ! ।
प्रणम्य शिरसादित्यं पूजयेत् सप्तवाहनम् ॥
पुष्प-धूपादिभिर्वीर कुतपानाञ्च तर्पणैः ।

कुतपानां ब्राह्मणानाम् ।

पाखण्डादिभिरालापं न कुर्व्वन्ति यतात्मवान् ॥
विप्राय दक्षिणां दत्वा नक्तं भुञ्जीत वाग्यतः ।
तिष्ठन् व्रजन् प्रस्खितस्य चुत-प्रस्खलितादिषु ॥
आदित्यनामस्मरणं कुर्य्यादुच्चारणं तथा ।
अनेनैव विधानेन मासान् द्वादश वै क्रमात् ॥
उपोष्य पारणे पूर्णे समभ्यर्च्य जगद्गुरुम् ।
पुण्येन श्रवणेनेह प्रीणयन् पुष्टिमाप्नुते ॥
एवं यः पुरुषः कुर्य्यादादित्याराधनं शुचिः ।
नारी वा स्वर्गमभ्येत्य ह्यनन्तफलमश्नुते ॥

इत्यनन्तफलसप्तमी ।

---

१ B ख यत् ।

देवीपुराणे—

मनुरुवाच—

यदीच्छति स्वभर्त्तारमिह जन्मनि चापरे ।
कन्या कुर्य्यान्नृपश्रेष्ठ विष्णुना कथितं व्रतम् ॥
सर्व्वपापहरं पुण्यं सर्व्वकामफलप्रदम् ।
उमामाहेश्वरं नाम कर्त्तव्यं विधिना यथा ॥
प्रौष्ठाश्विने तथा मार्गे मृगे भाग्येऽथवा पुनः ।
मैत्रे शाक्रेऽथवा कार्य्यमष्टम्यामथ शाङ्करे ॥

प्रौष्ठो भाद्रमासः, मृगे मृगशिरसि, भाग्ये पूर्व्वफाल्गुन्यां, मैत्र अनुराधायां, शाक्रे ज्येष्ठायां, शाङ्करे आर्द्रायाम् ।

पूर्व्वेऽह्नि च सपत्नीकं दाम्पत्यं शुभसंयुतम् ॥
एकभार्य्यारतं वत्स! सर्व्वधर्म्मव्रतान्वितम् ।
आमन्त्रयाम्येष युवां प्रातः कार्य्यस्त्वनुग्रहः ॥

अत्र च मन्त्रप्रयोगे नरनारीकर्त्तृके इदमेव वाक्यं प्रयोक्तव्यं स्त्र्यधिकारस्य नरो वेत्यनेन[१] पुरुषस्याप्यत्रेऽधिकारकथनात् ।

मुदान्वितस्तथा कुर्य्यात् कलि[२] द्वन्द्वविवर्ज्जितः ।
मधुरान्नेन भोज्यन्तु क्षीरेक्षुयवशालिभिः ॥
सितसूक्ष्मे तथा रक्ते शुभे देये च वाससी ।
निर्म्मले सदृशे वस्त्रे देवदेवीप्रसाधके ॥

सिते देवाय रक्ते देव्यै ।

स्नात्वा उमेश्वरं पूज्य स्थण्डिले प्रतिमासु वा ।

---

१ A वेत्यबाधेन । २ A B कालम्—।

कृत्वा दिशां बलिं दत्वा वितानमवतारयेत ॥
चतुरस्रं चतुर्द्वारं गोमयेनोपलेपयेत् ।
चतुष्कं शालि-गोधूमवर्णकैरुपशोभितम् ॥
दीपमालान्वितं कृत्वा दाम्पत्यं भोजयेत्ततः ।
शङ्करं मनसा ध्यायेत् शक्त्या भक्तिसमन्वितः ॥
देवस्त्वन्दनकाश्मीरकर्पूरागुरुधूपितम् ।
जाती-पुन्नाग-मन्दार-शतपत्रैः सुमानितम् ॥
क्षमाप्य युग्मं सम्प्रीतं त्रिधा कृत्वा प्रदक्षिणम् ।

युग्मं स्त्रीपुंसौ ।

सुखालापेन सम्भोज्य ध्यायन्तौ तमुमेश्वरम् ॥
आचम्यार्घपात्रन्तु दद्याद्गन्धोदकं तथा ।
सहिरण्यं सवस्त्रन्तु पुनर्दत्वा क्षमापयेत् ॥

आचम्य आचमनं कारयित्वा—

प्रीयतां मे उमेशस्तु सर्व्वदेवपतिः पतिः ।
उमामन्त्रेण चोमेश ईशमन्त्रेण शङ्करी ॥
पूजिता सर्व्वकामार्थान् प्रयच्छत्यविचारतः ।
अनेन प्राप्नुयान्नारी अवियोगं सुरेश्वर ॥
इह जन्मनि सौभाग्यं धनधान्यसुखानि च ।
मृता याति परं स्थानं शङ्करोमासमन्वितम् ॥
तत्र भुक्त्वा महाभोगानिहायाता महाकुले ।
सद्वृत्ते वृद्धिसम्पन्ने पतिं विन्दति शोभनम् ॥
लावण्यरूपसम्पन्ना भर्त्तुरिष्टा सदा भवेत् ।

श्लाघनीया समस्तस्य विभवान्तःपुरस्य च ॥
सुपुत्रा जीववत्सा च आधिव्याधिविवर्ज्जिता।
भुक्त्वा यथेप्सितान् कामान् इह्लोके पतिपूर्व्विकाः ॥
दिवं यान्ति सुरश्रेष्ठ शङ्करोमार्च्चिकाः स्त्रियः।
नरो वानेन विधिना नारीणां भवते पतिः ॥
समृद्धः सर्व्वभूतानां पतित्वमुपगच्छति।
शङ्करोमाव्रतं शक्र लक्ष्म्या पूर्व्वमनुष्ठितम् ॥
रत्या देव्याऽरुन्धत्या च रोहिण्या सुरसत्तम!।
कृतमासीत् सुखार्थन्तु तासु भुञ्जीत तत्फलम् ॥

इत्युमामहेश्वरव्रतम्।

---

देवीपुराणे— इन्द्र उवाच—

कथितं शङ्करोमाख्यं व्रतं मनसि तुष्टिदम्।
श्रोतुमिच्छाम्यहं तात विष्णुशङ्करसंज्ञितम् ॥

मनुरुवाच—

यथा उमेश्वरं तात तथा कार्य्यमिदं व्रतम्।

तथा कार्य्यमिति पूर्व्वोक्तभाद्रमासादीनां सर्व्वेषामतिदेशः।

किन्तु पीतानि वासांसि केशवाय प्रकल्पयेत् ॥
गन्धपुष्पं तथा धूपं सुगन्धञ्च जनार्द्दने।
कार्य्यं पूजनसम्भारे लड्डुका दधिशर्करम् ॥
एवं तौ पूजयित्वा तु प्रतिमास्थण्डिलेऽपि वा।
आहूय ब्राह्मणौ वत्स वेदसिद्धान्तपारगौ ॥

यती वा व्रतसम्पन्नौ जटाकाषायधारिणौ।
तौ भोजयेद्विधानेन शूलपाणि-जनार्द्दनौ॥
समाप्य विधिना वत्स सर्व्वकाम-प्रसाधकौ।
हेम तु दक्षिणा विष्णोर्मौक्तिकं शङ्करस्य च।
दत्त्वानुव्रज्य तौ लोकौ क्रमाद्देहक्षये व्रजेत्॥

तौ लोकाविति वैष्णव—शाङ्करौ।

भुक्त्वा भोगांस्तथा शक्र इहायातो नरेश्वरः।
कुले भवति भूपानां सुख-पुत्रादिसंयुतः॥
पूर्व्वभावाद्भवेद्भक्तिः शिव-विष्णुप्रसाधके।
योगं प्राप्य परं याति यत्तत्स्थानमनामयम्॥

इति विष्णुशङ्करयोर्व्रतम्।

---

भविष्यपुराणे— विष्णुरुवाच—

ब्रह्मन् भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः।
पूजयेच्छङ्करं भक्त्या यो नरः श्रद्धयान्वितः।
स याति परमं स्थानं यत्र देवस्त्रिलोचनः॥
गणेशं पूजयेद्यस्तु दूर्व्वया सहितं मुने।
फलानां सकलैर्द्रव्यैः गन्धपुष्पविलेपनैः॥

फलानां सकलैरखण्डफलैः।

खर्ज्जूर-नारिकेलैश्च मातुलुङ्गफलैस्तथा।
पूजयेच्छङ्करं भक्त्या दूर्व्वया विधिवद्द्विज॥
दध्यक्षतैर्द्विजश्रेष्ठ अर्घं दत्त्वा त्रिलोचने।

दूर्व्वामीशञ्च सम्पूज्य यत्नतः श्रद्धया द्विज ॥
त्वं दूर्व्वेऽमृतजन्मासि सर्व्वदेवैस्तु वन्दिता ।
पूजिता हर तत्सर्व्वं यन्मया दुष्कृतं कृतम् ॥
एवं सम्पूज्य देवेशं दूर्व्वाञ्च ब्रह्मनन्दन ।
ब्राह्मणेभ्यः फलं दद्यात् नारिकेलादि सुव्रत ! ॥
दधि प्राश्य गृहं गच्छेत् चमयित्वा त्रिलोचनम् ।
दूर्व्वा गौरी स्मृता ब्रह्मन् शङ्करस्तु फलानि वै ॥
यस्तु तस्यां तिथौ ब्रह्मन् पूजयेच्छङ्करं नरः ।
स तु गच्छेद्गृहं रम्यं दिव्य-गन्धर्व्वसेवितम् ॥
कृत्वोपवासं सप्तम्यामष्टम्यां पूजयेच्छिवम् ।
पूर्व्वोक्तेन विधानेन सर्व्वकामान् स विन्दति ॥
विद्यां प्राप्नोति विद्यार्थी पुत्रार्थी पुत्रमाप्नुयात् ।
धनार्थी धनमाप्नोति भार्य्यार्थी लभते च ताम् ॥
मनसा यद्यदिच्छेत तत्तदाप्नोति मानवः ।
य एवं पूजयेद्देवीं भक्तेशं मानवः फलैः ॥
समस्तजन्मपापौघान्मुच्यते नात्र संशयः ।
कृतोपवासः सप्तम्यामष्टम्यां पूजयेच्छिवम् ।
दूर्व्वासमेतं विप्रेन्द्र दध्यचतफलैः शुभैः ॥
ततः सम्पूजयेद्विप्रान् फलैर्नानाविधैर्द्विज ॥
अनग्निपक्वमश्नीयाद्द्रव्यं दधिफलं तथा ।
अचारलवणं ब्रह्मन्नश्नीयान्मधुरान्वितम् ॥
दद्यात् फलानि विप्रेभ्यः फलाहारः स्वयं भवेत् ।

प्रणम्य शिरसा दूर्व्वां शिवस्य शिवमाप्नुयात् ॥
य एवं कुरुते भक्त्या महादेवस्य पूजनम् ।
गणत्वं यात्यसौ ब्रह्मन् मुच्यते ब्रह्महत्यया ॥
एवं पुण्या पापहरा अष्टमी दूर्व्वसंज्ञिका ।
चतुर्णामपि वर्णानां स्त्रीजनस्य विशेषतः ॥

इति दूर्व्वाष्टमीव्रतम् ।

ब्रह्मपुराणे—

जनार्द्दनस्य दुर्गा च धनदो वरुणस्तथा ।
वनस्पतिश्च पञ्चैते नवम्यान्तु कृते युगे ॥
उत्पादयेयुर्गोधूमांस्तृप्त्यर्थमिह देहिनाम् ।
तस्मात्तान् पूजयेत्तच्च भक्ष्यैर्गोधूमसम्भवैः ॥
गुड़ाज्यमरीचोपेतैः पुष्पधूपैर्यथाक्रमम् ।
गोधूमैस्तर्पयेद्वह्निं गोधूमैश्चार्च्चयेद्धरिम् ॥
तन्निवेदितशिष्टानि भक्ष्याणि प्रयतात्मवान् ।
दत्वा विप्राय विप्रेभ्यो दद्यात्तान्येव दक्षिणाम् ॥
सुसंस्कृतायां नद्याञ्च सुपुण्ये च जलाशये ।
आरामे वृक्षवङ्कले पश्चाद्भुञ्जीत तान्यपि ॥

देवीपुराणे—

ततः कदलीचुदण्डेन पताकाश्च समुच्छ्रयेत् ।
अन्याश्च विविधाः शोभाः शक्रकेतुसमुच्छ्रये ॥
प्रौष्ठपदे तथाष्टम्यां शुक्लायां शोभने क्षणे ।
आश्विने वाथ शुक्लायां श्रवणे वाथ चोच्छ्रयेत् ॥

विष्णु धर्म्मोत्तरे—

मासि भाद्रपदे शुक्लनवम्यां द्विजपुङ्गवाः ।
गोधूमभक्ष्यान् सगुड़ान् दत्वा पुण्यमवाप्नुयात् ॥

ब्रह्मपुराणे—

नभस्यान्ते दशम्यान्तु कश्यपो लब्धवान् वरम् ।
अवतारं वितस्तायाः सतीदेहे पुरातने ॥
एकादश्यान्ततो रुद्रः सतीं भार्य्यामदेशयत् ।
रसातलगता सा च द्वादश्यां शङ्कराज्ञया ॥
अथ जाता त्रयोदश्यां शूलभेदाद्रसातलात् ।
चतुर्दश्यां पुनर्नष्टा पौर्णमास्यां समुत्थिता ॥
प्रतिपद्यथ निष्क्रान्ता फणामार्गेण सा नदी ।
दशम्यामादितः स्नात्वा दिवसेष्वपि सप्तसु ।
पश्येत् सम्पूजयेत् ध्यायेत् पिवेत् स्नायाच्च सर्व्वदा ॥
गन्धैर्माल्यैश्च नैवेद्यैर्धूपदीपैः सुशोभनैः ।
अङ्गरागैश्च विविधैर्वस्त्रैः पुष्पैर्विलेपनैः ॥
रक्तसूत्रैः कङ्कणैश्च स्त्रीणामाभरणैस्तथा ।
फलैर्मूलैस्तथा शाकैर्होमैर्ब्राह्मणतर्पणैः ॥
पूजनीया विशेषेण वितस्ता-सिन्धुसङ्गमे ।
महयाचोत्सवः कार्य्यः पूज्याश्च नटनर्त्तकाः ॥

भविष्यपुराणे—

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ।

अर्चयित्वाऽच्युतं भक्त्या लभेत् पुण्यं दशाब्दिकम्।
फलं दानकृतानाञ्च तस्य लक्षगुणं भवेत्॥

विष्णुधर्म्मे—

यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणा भवेत्।
तदा सा तु महापुण्या द्वादशी विजया स्मृता॥
तस्यां स्नातः सर्व्वतीर्थे स्नातो भवति मानवः।
सम्पूज्य वर्षपूजायाः सकलं फलमश्नुते॥
एकजप्यात् सहस्रस्य जप्तस्याप्नोति तत्फलम्।
स्नानं सहस्रगुणितं तथा वै विप्रभोजनम्।
होमस्तथोपवासश्च सहस्राख्यफलोपमः॥

ब्रह्मपुराणे—

विजयद्वादशीं प्राप्य पूजयेत्तु जनार्द्दनम्।
मासो भाद्रपदः शुक्लद्वादशी श्रवणे बुधः॥
प्रशस्तः सोदयः कालः सिंहसंस्थो दिवाकरः।
सिंहात्तृतीयद्रेक्काणः प्राप्टनद्योश्च सङ्गमः॥

द्रेक्काणोराशेस्तृतीयभागः।

ब्राह्मणो वेदसम्पूर्णः पात्रं हृदयनन्दनः।
जितन्त इति मन्त्रश्च स्वधर्म्मोपार्ज्जितं धनम्॥
युगपद्द्वादशैतानि दुर्लभानि सुरैरपि।
द्वादशात्मा हृषीकेशो येषां दैवतमुच्यते॥
सिंहस्थिते तु मार्त्तण्डे श्रवणस्थे दिवाकरे।
सबुधा द्वादशी शुक्ला न स्याद्भाद्रपदादृते॥

सबुधा बुधवारसहिता ।

सुदुर्लभा च सा पुण्या विजया द्वादशी शुभा ।
अनुग्रहार्थं मर्त्यानां कदाचित्स्यान्न नित्यशः ॥
आकस्मिकीं तु तां लब्ध्वा सर्व्वसम्भारसम्भृतः ।
एकादश्यामुपोष्यादौ द्वादश्यां सुसमाहितः ॥
प्रयागादिषु तीर्थेषु नदीनां सङ्गमेषु च ।
कृत्वा स्नानन्तु विधिना हृषीकेशं प्रपूजयेत् ॥
जले स्थलेऽम्बरे मूर्त्तौ कुम्भे वा कमलोपरि ।
वह्नौ विप्रे गवि गुरौ पितर्य्यपि च मातरि ॥
आह्वयासन-पुण्याह-स्वागतैरथ विस्तरैः ।

आह्वयावाहनं कृत्वा ।

पाद्यार्घ्य पुष्प-धूपैश्च दीपालङ्कार-चामरैः ॥
अङ्गरागैः सुगन्धैश्च पयसा पायसेन च ।
भक्ष्यैर्मूलफलैः शाकैर्मांसैः शुद्धैर्मनोरमैः ॥
मधुपर्कं दधि क्षीरमधुभिः साक्षतैस्तिलैः ।
मात्रया च तथा लाजैर्मनोज्ञैर्देशसम्भवैः ॥

मात्रा परिच्छदो वस्त्रादिः ।

पवित्रैः पानकैर्हृद्यैर्गीतनृत्यैः सवाद्यकैः ।
स्तोत्रैरनेकैः पौराणैर्वेदमन्त्रैः सुसंस्कृतैः ॥

सुसंस्कृतैरध्ययनसंस्कृतैः ।

पौरुषेणाथ सूक्तेन सूक्तैरन्यैश्च वैष्णवैः ।
हृषीकेशं समभ्यर्च्य दद्याज्जलमयीश्च गाः ॥

जलमयीगौः जलधेनुः। एकवचनान्तस्य पाठः पारिजातीय-कृत्यसमुच्चयादिपाठविसम्वादादुपेक्षितः।

यथाशक्त्या च विप्रेभ्यः श्रद्धापूतेन चेतसा।
सौवर्णीं राजतीं ताम्रीं रङ्गजां मृण्मयीञ्च ताम्॥
शतमानान्तु मणिकां जलपूर्णां सुशोभनाम्।
तस्यान्तु जलपूर्णायां सौवर्णं राजतञ्च वा॥
ताम्ररङ्गमयं पात्रं मृण्मयं वा सुशोभनम्।
सम्पूर्णं परमान्नेन दधि-सर्पिर्गुडैस्तथा॥
शर्करा-क्षीर-मधुभिस्तिल-चामीकराम्बुभिः।
सेवितं मन्त्रपूतञ्च दद्यादाच्छादनं शुभम्॥
जलधेनुं सवत्सान्तां[1] नवेन सदशेन च।
सपवित्रेण शुद्धेन वस्त्रेणाच्छाद्य यत्नतः॥
छत्रेण च सुशुद्धेन सर्व्वमाच्छाद्य शास्त्रवित्।
[2]विषचरक्षताद्दोषाद्रक्षेद्भौमाच्च वैद्युतात्॥
जितन्त इति मन्त्रेण हृषीकेशं स्मरन्निह।
ब्राह्मणेभ्यः परां श्रद्धामाश्रित्य सुसमाहितः॥
दद्यादुपानहौ तद्वत् पादुके तदनन्तरम्।
रजतं गां तथा भूमिं सुवर्णं रत्नमेव वा॥
हस्त्यश्वरथयानानि गृहाणि शयनानि च।
आसनान्यथ भाण्डानि वस्त्राण्याभरणानि च॥

---

१ A D सवत्सान्तां।
२ A विषचरक्षतात् दोषाद्रक्षेद्भौमाच्च वैद्युतात्।



A384
Library Regr. No. 219/24

उद्दिश्य सर्व्वांश्च पितॄन् पैतृकान् मातृकांस्तथा ।
भार्य्या-मित्र-गुरूणाञ्च ये केचित् पितरश्च तान् ॥
गोत्र-नाम-स्वधाकारैः पितृयज्ञविधानवत् ।
पितृभ्यश्चान्नमक्षय्यमिदमस्त्विति सञ्जपेत् ॥
अथान्नदानाद्भगवान् प्रीतो भवति केशवः ।
गुड़-क्षीर-घृतैर्वस्त्रैः प्रीतो भवति चन्द्रमाः ॥
जलदानात्तु वरुणः सुप्रसन्नो भवेत् सदा ।
रजतेन प्रदत्तेन प्रीतः स्याच्च महेश्वरः ॥
सुवर्णेन तु दत्तेन वह्निर्नित्यं प्रसीदति ॥
हस्त्यश्वरथयानैश्च मघवा आसनैस्तथा ।
शयनैर्वेश्मभिर्धर्म्मश्छत्रेणार्कश्च तुष्यति ॥
उपानद्भ्यां यमो गोभिः सौरभेयः कपर्द्दिनः ।
पादुकाभ्यां प्रदत्ताभ्यां पद्मयोनिश्च तुष्यति ॥
अलङ्कारैस्तथा माल्यैर्जगन्माता च पार्व्वती ।
दानं होमो जपः पूजा तथा ब्राह्मणतर्पणम् ॥
नदीनां सङ्गमे स्नानं तथा विप्रेषु दक्षिणा ।
सहस्रगुणितं तत्र सर्व्वमक्षयमुच्यते ॥
यः प्रीणाति हृषीकेशं तत्र श्रद्धासमन्वितः ।
स सर्व्वलोकान् जयति याति विष्णोः पदञ्च तत् ॥
तारयेच्च पितॄन् सर्व्वान् दशपूर्व्वान् दशावरान् ।
तस्मिन् काले तु सम्प्राप्ते वितस्तां सिन्धुसङ्गताम् ॥
सुशीतलेन पुण्येन जलेनालोड्य मृत्तिकाम् ।

सुगौरीं लक्षणोपेतां सङ्गमस्नानपुण्यदाम्।
तामालभेत यत्नेन स्नानकाले सदैव हि॥

मणिका मणिरिति प्रसिद्धो जलाधारविशेषः।
मणिका-पात्रयोः शक्त्यपेक्षया सौवर्णत्वादिविकल्पः।

जितन्ते इति मन्त्रेण—

जितन्ते पुण्डरीकाक्ष जितन्ते विश्वभावन!।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्व्वज!॥

इत्यनेन हृषीकेशं स्मरन्—

गोत्र-नाम-स्वधाकारैः पितृयज्ञविधानवत्।

इत्यनेन श्राद्धान् पित्रादीनां लभते, कपर्द्दिनः सौरभेयः शिववृषः। होम इत्यग्निमानुवादबलेन होमः पूर्व्वमनुपन्यस्तोऽपि अस्यानन्तफलदः। शतमानां शतसम्मितां शतसंख्यामित्यर्थः। दद्याज्जलमयीश्च गा इति वचनात्।

लिङ्गपुराणे—

अतः परन्तु संवेद्यं गङ्गावरणसङ्गमम्।
श्रवणाद्वादशीयोगे बुधवारो यदा भवेत्।
तदा तस्मिन् नरः स्नात्वा सन्निहित्याफलं लभेत्॥
श्राद्धं करोति यस्तत्र तस्मिन् काले यशस्विनि!।
तारयित्वा पितॄन् सर्व्वान् विष्णुलोकं स गच्छति॥

सन्निहित्या नदीविशेषः। तस्मिन् गङ्गा-वरणानद्योः सङ्गमे।

विष्णुधर्म्मोत्तरे— द्वादशीमुपक्रम्य—

गोदः प्रयाति गोलोकं मासि भाद्रपदे द्विजाः।

तथा भाद्रपदे मासि श्रवणेन तु संयुता ॥
नक्षत्रयुक्तास्वेतासु तथा दानमुपोषितम् ।
सर्व्वं महाफलं ज्ञेयमनन्तं द्विजसत्तमाः ॥

इत्यन्तेऽभिधानाद्‌च गोदानादिकमनन्तफलमित्यर्थः ।

ब्रह्मपुराणे—

इन्द्रो भाद्रपदे मासि शुक्लपक्षे तु सर्व्वदा ।
निर्म्मुक्तः सर्व्वशस्यानि व्रीहींश्चैव फलानि च ॥
ओषधीर्वज्रहस्तश्च ताड़येत् पातयत्यपि ।
तद्भयात्तानि सर्व्वाणि वर्द्धयन्त्यखिलं जगत् ॥
तस्मात् स तत्र सम्पूज्यः सभार्य्यश्च दिने दिने ।
सगणः सायुधश्चैव सानुयात्रः सवाहनः ॥
पटभित्तिकृतो देवो राज्ञा पूज्यो विशेषतः ।
भक्षैऽरन्नैः फलैर्मूलैर्नवैर्वस्त्रैः सुधूपनैः ।
तमुद्दिश्यार्च्चयेद्विप्रान् तथा रङ्गोपजीविनः ॥

शुक्लपक्षे दिने दिनइत्यन्वयश्रुतौ शुक्लपक्षं व्याप्य प्रत्यहं पूजा ।

शिष्टास्तु—

इन्द्रोत्थानदिनादारभ्य विसर्ज्जनं यावदिक्षुदण्डादिनिर्म्मितं शचीजयन्तसहितमिन्द्रमर्च्चयन्ति श्रवणाद्यपादे शक्रोत्थापनं भरण्यां विसर्ज्जनमिति वदन्ति ।

फलमिहानुवादिकं ओषधीपाकादि, शक्रमुद्दिश्य चार्च्चयेत् सम्मानयेत् ।

ज्योतिःशास्त्रे—

द्वादश्यां भाद्रमासस्य सिते पक्षे विशेषतः।
शक्रमुत्थापयेद्राजा शक्र-श्रवण-वासवैः॥
विश्वे समुत्थितोऽश्विन्यां श्रवणे यमदेवते।
वासवे कृत्तिकायान्तु निशि शक्रन्तु वासयेत्॥
द्वादशीन्तु परित्यज्य तिथावन्यच कुत्रचित्।
शक्र उत्थापितो हन्ति राज-विप्र-कृषीवलान्॥
सौरि-भूमिजयोर्वारे सूतके मृतके तथा।
भूमिकम्पादिकोत्पाते शक्रं नैव प्रवासयेत्॥

पूजामन्त्रः—

एह्येहि सर्व्वामरसिद्धसाध्यै-
रभिष्टुतो वज्रधरामरेश।
समुत्थितस्त्वं श्रवणाद्यपादे
गृहाण पूजां भगवन् नमस्ते॥
ऐरावतसमारूढ़ो वज्रहस्तो महाबलः।
शतयज्ञाधिपो देवस्तस्मै इन्द्राय ते नमः॥
वज्रहस्तः सुरारिघ्नो बहुनेत्रः पुरन्दरः।
रक्षार्थं सर्व्वलोकानां पूजेयं प्रतिगृह्यताम्॥

इति इन्द्रोत्थानद्वादशी।

अथ शिष्टाचारपरिगृहीतानन्तव्रतम् ।

सम्पूजिते महेन्द्रे तु ध्वजाकारासु यष्टिषु ।
भाद्रशुक्लचतुर्द्दश्यामनन्तं पूजयेद्धरिम् ॥

अनन्तं दर्भमयं कृत्वा वारिधान्यां स्थापयेत् ।

पूजाडोलकमन्त्रस्तु—

अनन्तसंसारमहासमुद्रे
मग्नान् समभ्युद्धर वासुदेव ।
अनन्तरूपे विनियोजयस्व
अनन्तरूपाय नमो नमस्ते ॥

अनन्तकथामप्यत्र शृण्वन्ति ।

मत्स्यपुराणे— नारद उवाच—

कथमर्घप्रदानन्तु कर्त्तव्यं तस्य वै प्रभो ।
विधानं यदगस्त्यस्य पूजने तद्वदस्व मे ॥

ईश्वर उवाच ।

प्रत्यूषसमये विद्वान् कुर्य्यात्तस्योदये निशि ।
स्नानं शुक्लतिलैस्तद्वत् शुक्लमाल्याम्बरो गृही ॥
स्थापयेदव्रणं कुम्भं माल्यवस्त्रविभूषितम् ।
पञ्चरत्नसमायुक्तं घृतपात्रेण संयुतम् ॥
नानाभक्ष्यफलैर्युक्तं ताम्रपात्रसमन्वितम् ॥

अङ्गुष्ठमात्रं पुरुषं तथैव
सौवर्णमत्यायतबाहुदण्डम् ।
चतुर्भुजं कुम्भमुखे निधाय
धान्यानि सप्ताम्बरसंयुतानि ॥

स कांस्यपात्राचतशुक्तियुक्तं
मन्त्रेण दद्याद्विजपुङ्गवाय ।
उत्क्षिप्य लम्बोदरदीर्घबाहु-
मनन्यचेता यमदिङ्मुखस्थः[1] ॥
श्वेताञ्च दद्याद्यदि शक्तिरस्ति
रौप्यैः खुरैर्हेममुखीं सवत्साम् ।
धेनुं नरः चीरवतीं प्रणम्य
सवस्त्रघण्टाभरणां द्विजाय ॥

धेनुं हेममुखीं सुवर्णशृङ्गीमन्यत्र दर्शनात् ।

आसप्तरात्रादुदयेऽर्घमस्य
दातव्यमेतत्सफलं[2] नरेण ।
यावत्समाः सप्त दशाथवा स्यु-
रथोर्द्धमप्येव वदन्ति केचित् ॥

काशपुष्पप्रतीकाश ! अग्निमारुतसम्भव ! ।
मित्रावरुणयोः पुत्र ! कुम्भयोने ! नमोऽस्तु ते ॥
प्रत्यब्दञ्च फलत्यागमेवं कु॰॰न सीदति ।
होमं कृत्वा ततः पश्चाद्वर्जयेन्मानवः फलम् ॥

अत्रागस्त्यार्घदानमन्त्रः—

काशपुष्पप्रतीकाश अग्निमारुतसम्भव ।

इत्यादिरेव बोद्धव्यो मन्त्रान्तरानुपदेशात् । गन्धादिकञ्च ॐ अगस्त्याय नम इत्यनेन दातव्यम् । सामान्यप्राप्तत्वात् विशेषानुप-

---

१ B—दिङ्मुखः सन् ।  २ मूले—सकलं ।

देशाच्च । अर्घदानन्तु सतोयशङ्खेन सितपुष्पाक्षतैः कार्य्यं नरसिंह-पुराणे— अगस्त्यार्घ एव तथाकथनात् । सफलमिति पाठे तु तत्रैव फलान्वयः ।

भक्त[1]विल्वाक्षतैः पुष्पैर्दधिदूर्व्वांकुशैस्तिलैः ।
सामान्यः सर्व्वदेवानामर्घोऽयं परिकीर्त्तितः ॥

इति देवीपुराणवाक्यादेभिर्द्रव्यैरर्घदानं तस्य संवत्सरमण्डल-बलिहरण एव तद्देवानामेव कथितत्वात् ।

अत्र—

बीजपूरं नारिकेलं रम्भां जातीफलं तथा ।
खर्ज्जूर-चूत-दाड़िम्यः फलान्येतानि वर्ज्जयेत् ॥

इति शिष्टवाक्यात् प्रतिवर्षं क्रमेण फलत्याग इति ।

अनेन विधिना यस्तु पुमानर्घं निवेदयेत् ।
इन्द्रलोकमवाप्नोति रूपारोग्यसमन्वितः ॥

पञ्चरत्न-सप्तधान्यानि परिभाषायामनुसन्धेयानि यमदिङ्मुखस्य इति सर्व्वत्र कर्म्मणि कुम्भस्थापनादौ प्रयोगाङ्गकर्त्तृधर्म्मत्वात् ।

सप्तैव लोकानाप्नोति सप्तार्घ्यान् यः प्रयच्छति ।
यावदायुश्च यः कुर्य्यात् परं ब्रह्माधिगच्छति ॥

इति पठति शृणोति वा य एतत्
[2]वसुयुगलप्रभवस्य सम्प्रदानम् ।
सकृदपि च ददाति सोऽपि विष्णो-
र्भवनगतः परिपूज्यते नरौघैः ॥

---

१ D रक्त— गन्ध— । २ B युगलमुनिप्रभवार्घ— ।

अत्र चैवं क्रमः— प्रथमं यथोक्तस्नानं यथोक्तकुम्भस्थापनं यथोक्तसौवर्णपुरुषस्थापनञ्च ततोऽगस्त्यपूजाऽर्घदानञ्च महाव्याहृतिभिराज्यहोमः स्वयमाचार्य्यद्वारा वा, ततः फलत्यागः सौवर्णपुरुषदानं सम्पत्तौ धेनुदानञ्च आसप्तरात्रादेवमयमर्थः।

यस्मिन्नंशकेऽगस्त्योदयः तस्मात् परभूतो यः सप्तमोंऽशस्ततः प्रागर्घो दातव्य इति।

अगस्त्योदयास्तमयौ च प्रति ब्रह्मपुराणम्—

अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः।
वरुणस्यात्मजो योगी विन्ध्यपादविमर्द्दनः॥
कन्यांशेभ्यः पश्चिमेभ्यः षड्भ्यः प्रारभ्य संख्यया।
अंशान् द्वाविंशतिं यावत् भुंक्ते सूर्य्यस्तु राशिषु॥

द्वासप्ततिमिति कल्पतरौ पाठः।

उदेति तावद्भगवानगस्त्यो व्योम्नि तोयभुक्।
स्वर्चांशेभ्यः पश्चिमेभ्यः षड्भ्यः प्रारभ्य पूर्व्ववत्॥
षड्विंशतन्तु यावच्च भुंक्ते भानुर्यथाक्रमम्।
तावच्छान्तस्तु पातालं प्रयात्यस्तमुपैति च॥

तथा तत्रैव

कृतोपवासः सम्पश्येदगस्त्यमुदितं मुनिम्।
सर्व्वकामप्रदं पुण्यं सर्व्वकामप्रवर्द्धनम्॥
[1]अर्च्चितः स च भगवान् श्रद्धाभक्तिसमन्वितैः।
पूर्णकुम्भैः सकुष्माण्डैर्यवैर्धान्यैर्घृतेन च॥

---

१ D अर्च्चितव्यश्च भगवान्।

जातौ पद्मोत्पलैः शुभ्रैश्चन्दनेन सितेन च ।
गन्धैर्हृतैस्तथा वस्त्रै रत्नैः सागरसम्भवैः ।
उपानच्छत्रदण्डैश्च पादुकाञ्जन वल्कलैः ॥
भूरिणा परमान्नेन फलैः पुष्पैश्च शोभनैः ।
अन्यप्रकारैर्भक्ष्यैश्च होमैर्ब्राह्मणतर्पणैः ॥
आशास्य च शुभं काममुद्दिश्य च मनोगतम् ।
यद्यहं प्राप्नुयां कामं भगवन् मनसेप्सितम् ।
त्वत्प्रसादादविघ्नेन ततस्त्वां पूजयाम्यहम् ॥
इत्युक्त्वा पूजयेत् पश्चाद्देवज्ञांश्च गुरूंस्तथा ।
ब्राह्मणान् भोजयित्वा तु ततो भुञ्जीत वाग्यतः ॥

नरसिंहपुराणे—

यदागस्त्योदये प्राप्ते? तदा सप्तसु रात्रिषु ।
अगस्त्याय ददात्यर्घं नत्वा पुण्यविवृद्धये ॥
शङ्खे तोयं विनिःक्षिप्य सितपुष्पाक्षतैर्युतम् ।
मन्त्रेणानेन वै दद्यात् श्वेतपुष्पसमन्वितम् ॥
काशपुष्पप्रतीकाश अग्निमारुतसम्भव ।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ॥

अनेनार्घं दत्वा पठेत् ।

[1]आतापी भक्षितो येन वातापी च महासुरः ।
समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु ॥

---

१ मूले आतापिः—वातापिश्च— ।

एवन्तु यो दद्यादर्घमगस्त्याय महामुने ।
सर्व्वपापविनिर्मुक्तः सर्व्वां तरति दुर्गतिम् ॥

कन्यांशकप्राचीनषड्‌ष्टकादिभूतांशकादारभ्य द्वाविंशतिमंशकान् यावदगस्त्योदयस्तत्र प्रथमोदयदिनादारभ्य सप्तदिनाभ्यन्तरैक-दिवसेऽगस्त्यार्घ आचारात् । एवञ्चोदयप्रतिपादकब्रह्मपुराणस्याप्यय-मेवार्थः । अतः—

अप्राप्ते भास्करे कन्यां सत्रिभागैस्त्रिभिर्दिनैः ।

इत्यादिवाक्यं ज्योतिःशास्त्रीयमनादेयं धर्म्मशास्त्रस्य ततो बलवत्वात् ब्रह्मपुराणार्थपरत्वेनैवानेतव्यं यथायथं कल्पत्रयश्चैतत् फलान्यपि भिन्नान्येव ।

एवञ्च—

कन्यामनागते सूर्य्ये अर्घो वै सप्तमाद्दिनात् ।
कन्यायां समनुप्राप्ते सूर्य्येऽर्घः सन्निवर्त्तते ॥

इति स्वागमद्वयं स्वरसमेव मन्त्रान्तरञ्च वैदिकं धर्म्मशास्त्र-[1]निबन्धव्यासेन पौराणिकं मन्त्रमत्र लिखता[2] सामान्याधिका-रिकमर्घं कथयताऽनादृतमिति सर्व्ववर्णसाधारण एव पौराणिक-मन्त्रान्वय इति ।

कामधेनौ तु नरसिंहपुराणलिखनं मूले तद्दर्शनेनैवादृतम् ।

विष्णुः—

प्रौष्ठपद्यां तद्युक्तायां गोदानेन सर्व्वपापविनिर्मुक्तो भवति ।

---

१ D निबन्ध ।                    २ A लिखितम् ।

तद्युक्तायां पूर्व्वभाद्रपदोत्तरभाद्रपदयोरन्यतरनक्षत्रयुक्तायाम् दानसागरपारिजातावप्येवम् ।

ब्रह्मपुराणे—

पूर्व्वभाद्रपदायोगे पौर्णमास्यां पितामहः ।
शक्राग्नि-यम-जालेशो-वायु-वित्तेश-शङ्करान् ॥
लोकपालांस्तु रक्षार्थं त्रैलोक्यस्याभ्यषेचयेत् ।
पृथिव्या धारणार्थाय तथानन्तञ्च भोगिनम् ॥

जातू राक्षसः ।

तस्मात्तत्र लिखेत् पद्ममष्टपत्रं सकर्णिकम् ।
कर्णिकायां लिखेत्तत्र सानन्तं कमलोद्भवम् ॥
प्राच्यादिषु च पत्रेषु वासवाद्यांश्च सायुधान् ।
ग्रहान् नागान् क्रमेणैव यथारूपान् समालिखेत् ॥
ततः क्रमेण तेनैव स्थापयेत् कलसान् शुभान् ।
पश्चात् सम्पूजनीयास्ते भक्त्या ब्रह्मादयः सुराः ॥
अर्घ्यपाद्यादिभिः सम्यक् धूपमाल्यानुलेपनैः ।
वस्त्रैः सर्व्वफलैर्भक्ष्यैर्होमै र्ब्राह्मणतर्पणैः ॥
मनोज्ञैः सगुडैः चोरैः सर्व्वशस्यसमुद्भवैः ।
नृत्यैर्गीतैस्तथा वाद्यैः सर्व्वकामार्थसिद्धये ॥
विप्रेभ्यश्चाथ बन्धुभ्यो धाना देयाश्च शास्त्रवत् ।
गावौ धानाः स्वयं भक्ष्याः संयमस्थैर्विवेकिभिः ॥
धाना भृष्टयवा वक्तुरिति[1] प्रसिद्धाः ।

---

1 D वक्तुः ।

दुर्गाधिकारे देवीपुराणे—

प्रौष्ठपद्यां प्रकर्त्तव्या पूजा जागरणं निशि ।

महोत्सवविधानेन सौत्रामणिफलं लभेत् ॥

विष्णुधर्म्मोत्तरे—

गोदानञ्च प्रौष्ठपदे पौर्णमास्यां महाफलम् ।

महाफलमित्यस्यान्यत्रोक्तदानफलातिरिक्तफलदायकमित्यर्थः ।

मत्स्यपुराणे—

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्म्मविस्तरः ।

वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥

लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।

पौर्णमास्यां प्रौष्ठपद्यां स याति परमं पदम् ॥

महासान्धिविग्रहिकठक्कुरश्रीवीरेश्वरात्मज महासान्धिविग्रहिक-ठक्कुर-श्रीचण्डेश्वरविरचिते कृत्यरत्नाकरे भाद्रतरङ्गः ॥

---

## अथाश्विनकृत्यम् ।

भविष्यपुराणे— सुमन्तुरुवाच—

श्रीमानाश्वयुजे मासि यः कुर्य्यान्नक्तभोजनम् ।

[1]हुताशनञ्च भुञ्जानो जितक्रोधो जितेन्द्रियः ॥

दद्याद्गां पद्मवर्णाभां भानोरमिततेजसः ।

दिव्याभरणसम्पन्नां तरुणीञ्च पयस्विनीम् ॥

---

१ B मिताशनम् ।

पुच्छमौक्तिकसङ्काशैरिन्द्रनीलोपशोभितैः
जीवञ्जीवकसंयुक्तैर्विमानैः सार्व्वकामिकैः ॥
गच्छेद्भानुसलोकत्वं तेजसा रविसन्निभः।
कान्त्या विधुसमो राजन् प्रभयाऽण्डजसन्निभः ॥

अथ सप्तमीद्वयव्यतिरिक्तयावदाश्विनदिवसे नक्तभोजनं सत्यवादित्वं गोधूमगोरसान्नं पक्षयोः सप्तम्युपवासः त्रिसन्ध्यं शाण्डिलेयसहितभान्वर्च्चनमधःशयनं सर्व्वभोगवर्ज्जनञ्च पूर्व्ववत् त्वगति। घृतप्रधानमशनं घृताशनं दद्याद्वा मासान्ते, अण्डज आदित्यः।

तत्रैव—

राजन्नाश्वयुजे मासि यः कुर्य्यान्नक्तभोजनम्।
गुडौदनन्तु भुञ्जानो जितात्मा संयतेन्द्रियः ॥
उपवासपरो भूत्वा नवम्यां पक्षयोर्द्वयोः।
माहेश्वरीं पूजयेत कृत्वा रुक्ममयीं शुभाम् ॥
वृषभञ्च तथा वीर श्वेतपुष्पोपलेपनैः।
धूपेन च महार्हेण खण्डखाद्यादिभोजनैः ॥
अजानां महिषाणाञ्च मृगाणाञ्च तथा वधात्।
प्रीणयेद्विधिवद्देवीं मांसशोणिततर्प्पणैः ॥
कुमारीर्भोजयेद्भक्त्या ब्राह्मणान् योषितस्तथा।
भक्ष्यभोज्यैरनेकैश्च मांसैर्बहुविधैर्नृप ॥
पूजयित्वा तु तां दुर्गां विल्वपत्रैः सद्रोणजैः।
विल्वपत्राशनात् पूतस्ततो भुञ्जीत वाग्यतः ॥
एवं सम्पूजयित्वा तु भक्त्या माहेश्वरीं नृप।

अश्वमेधसहस्रस्य फलं प्राप्य दिवं व्रजेत् ॥
द्विजाङ्कप्रभया तुल्यः कान्त्या पुष्पायुधस्य च।
पुष्पकं यानमारूढो मोदते शाश्वतीः समाः॥

महाङ्गो धूपः परिभाषायामुक्तः, द्विजाङ्कश्चन्द्रमाः।

आश्विनप्रकरणे ब्रह्मपुराणे—

शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम्।
सुतिथौ च सुनक्षत्रे सुमुहूर्त्ते सुशोभने॥
गच्छेत् क्षेत्रे[1] विधानेन गीतवाद्यपुरःसरः।
तत्र वह्निं च प्रज्वाल्य धान्यैः संस्तीर्य्य शास्त्रवत्॥

शास्त्रवदिति स्वगृह्योक्तविधिना।

कृत्वा होमं ततःपश्चान्नयेद्धान्यञ्च भूषितम्।
पुष्पैर्वस्त्रैः फलैर्मूलैर्हस्त्यश्वरथसंस्थितम्॥
तेन देवान् पितॄन् बन्धूंस्तर्पयित्वा यथाक्रमम्।
विभज्यास्य यथाशक्त्या दैवज्ञाः शस्यरक्षिणः॥
नववस्त्रावृतः स्रग्वी अनुलिप्तः स्वलङ्कृतः।
स्थितः पूर्व्वमुखस्तुष्टो ब्रह्मघोषपुरःसरः॥
शृण्वन् वाद्यरवं तुष्टो मङ्गलालभनान्वितः[2]।
प्राश्नीयाद्दधिसंयुक्तं नवं विप्राभिमन्त्रितम्॥
कृताहारश्च कुरुते गीतवाद्यैर्महोत्सवम्।
क्षीरोदसागरात् पूर्व्वं मथ्यमानात् पुरातनात्॥
श्यामा देवी समुत्पन्ना सर्व्वलक्षणसंयुता।

---

१ A B क्षेत्रं विधानेन कृत्य —। २ D— चालभनादनु।

नारायणाज्ञया सा च सुकुमारा यशस्विनी ॥
सतीदेहसमुद्भूता लता परमशोभना।
तां दृष्ट्वा चकितास्तत्र ततः सर्व्वे सुरासुराः।
मनोज्ञा सुमुखी [1]कैषा हन्त द्रक्ष्यामहे वयम् ॥
एवमुक्त्वा वचस्तास्तु ददृशुः सर्व्व एव ते।
चक्रुर्नाम च तस्यास्ते द्राक्षेति भुवि विश्रुतम् ॥
अतोऽर्थं सा सुपक्वा च पूजितव्या प्रयत्नतः।
पुष्पधूपान्नभक्ष्याद्यैस्तथा ब्राह्मणतर्पणैः ॥
द्वौ बालौ च तथा वृद्धौ सम्पूज्यौ तदनन्तरम्।
धर्मार्थकाममोक्षांस्तु समुद्दिश्य कुटीरके ॥
क्षौमहार्येण कृष्णेन (?) भृत्य-मित्रसुतैः सह।
अनुलिप्तेन विधिवत् स्रग्विणा च सुवाससा ॥
निवेदिता गुरुभ्यस्तु स्वयं भक्त्या न चान्यथा।
उत्सवश्चापि कर्त्तव्यो गीतनृत्यसमाकुलः ॥

इति नवान्नद्राक्षाभक्षणविधिः।

---

देवीपुराणे—

एकाहमपि ये भक्त्या कन्यास्थे दिवाकरे।
पूजयित्वा शिवाचक्रं दीपान् सम्बोधयन्ति च ॥
शिवाचक्रं दुर्गासमूहः, सम्बोधनमुद्दीपनम्, एतदेवात्र प्रधानम्।
ते लभन्ते शुभान् लोकानायुरारोग्यसम्पदः।

---

१ D कैषाम्।

सन्ध्याकाले तु सम्प्राप्ते पूजयित्वा तु मातरम् ॥
ये ददन्ति घृतैर्दीपानुत्करं पललान्वितम्।
न तेषां दुरितं किञ्चिद्विद्यते मुनिसत्तम ॥

उत्करं भक्तं, पललं मांसम्।

रुद्रो ब्रह्मा तथा ईशः स्कन्दो विष्णुर्यमो हरिः।
परे च विघ्नसहिताः स्त्रीरूपाः सप्त संस्थिताः ॥

परे सूर्य्यादयः, विघ्नो विनायकः।

मातॄणां पूजनाद्विप्र! सर्व्वे देवाश्च पूजिताः।
निष्कलं सकलं वाथ एकं पञ्चकमेव वा ॥
पूजयेत्तत्र कन्यास्थे क्षणं पूजां न लङ्घयेत्।

निष्कलं चन्द्रकलाशून्यतिथिरमावस्या, सकलम् पूर्णिमा कन्यास्थे सूर्य्ये क्षणं पूजां न लङ्घयेदित्यस्य क्षणमपि पूजां कुर्य्यादित्यर्थः।

तथा—

मृण्मयीं प्रतिमां कृत्वा विल्वे वा यस्तु पूजयेत्।
आत्मवित्तानुसारेण स लभेन्मौलिकं फलम् ॥

मौलिकं साक्षाद्भगवतीपूजाजन्यम्।

एकं वा यदि वा देवीं देवं वा वल्लकीकरम्।

वल्लकी वीणा देवं महादेवम्।

गजाननयुतं पूज्य सर्व्वकामफलप्रदम् ॥
ब्रह्माणीं वैष्णवीं वापि कौमारीं शक्रवन्दिताम्।
पूजयेद्यः स आप्नोति ईप्सितं फलमुत्तमम् ॥
वृषारूढां महादेवीं त्रिनेत्रां शूलधारिणीम्।

पूजयेद्यः स आप्नोति यद्यन्मनसि संस्थितम् ॥

तथा प्रसङ्गात्—

चन्दनागुरुकर्पूरनखं धूपे वरं स्मृतम् ।

नखं सुगन्धिद्रव्यविशेषः— नखीति व्याख्यातम् ।

मधुकर्पूरकाश्मीर रोचना च चतुष्टयम् ।

एतेन लेपयेद्देवीं सर्व्वकामानवाप्नुयात् ॥

जातीकक्कोलपत्रैला कुष्ठ-कुङ्कुमपत्रिकाः ।

जातीफललताः ख्याताः स्नानगन्धाः सदा वराः ॥

नागकेशर कर्पूरं मुरा मांसी सवालिका ।

मुरा मोटव[1] इति प्रसिद्धा वालिका वार इति प्रसिद्धा ।

उदर्त्तने समाख्याता मातृणां सर्व्वतः प्रियाः ॥

मणिमौक्तिकमालाश्च वितानञ्च दुकूलजम् ।

घण्टादि सर्व्वदा दत्वा हेमपुष्पफलं लभेत् ॥

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः ।

अपर्य्युषित-निश्छिद्रैः प्रोक्षितैर्जन्तुवर्ज्जितैः ।

आत्मारामोद्भवैर्वापि पुष्पैः सम्पूजयेच्छिवाम् ।

पुष्पजातिविशेषेण भवेत्पुण्यं विशेषतः ॥

तपःशीलगुणोपेते पात्रे वेदस्य पारगे ।

दश सुवर्णानि दत्वा च यत् फलं कुसुमेषु तत् ॥

मातृणाञ्च सकृद्दत्वा लभते नृपसत्तम ।

तस्मात् पुष्पाणि वक्ष्यामि पत्राणि सुरभीणि च ॥

---

१ D मोटलर ।

केतकी चातिमुक्तश्च बन्धूक बकुलान्यपि।
कदम्बः कर्णिकारस्तु सिन्धुवारः समृद्धये॥
पुन्नागचम्पकैश्चैव यूथिका बक-मल्लिका।
तगरार्ज्जुनमल्ली च बृहती शतपत्रिका॥
सुरसा शर्व्वरी भद्रा सुरभी नवमल्लिका[1]।
दमनो मरूपत्रश्च शतधा पुष्पवृद्धये॥
कदम्बैरर्च्चयेद्रात्रौ मल्लिका उभयोः शुभा।
दिवाशेषाणि पुष्पाणि यथालाभेन पूजयेत्॥
केशकीटापविद्धानि शीर्णपर्य्युषितानि च।
स्वयंपतितपुष्पाणि त्यजेदुपहृतानि च॥
मुकुलैर्नार्च्चयेद्देवीमपक्कं न निवेदयेत्।
फलं कथितविद्धञ्च कालापकमपि त्यजेत्॥

विष्णुः— आश्विनं सकलं मासं ब्राह्मणेभ्यः प्रत्यहं घृतं प्रदायाश्विनौ प्रीणयित्वा रूपभाग्भवति।

अत्रैव यमः—

घृतमाश्वयुजे मासि नित्यं दद्याद्द्विजातये।
प्रीणयित्वाश्विनौ देवौ रूपभागभिजायते॥

आश्विनानुवृत्तौ विष्णुः—

तस्मिन्नेव मासि गोरसैर्ब्राह्मणान् भोजयित्वा आरोग्यभाग्भवति।

स्कन्दपुराणे—

योऽपि चाश्वयुजं मासमेकभक्तेन तिष्ठति।

---

१ A D कथमल्लिका।

वाणिज्यं लभते तस्य कृषिः पशुगणास्तथा ॥

महाभारते—

तथैवाश्वयुजं मासमेकभक्तेन यः क्षिपेत्।

मृजावान् वाहनाढ्यश्च बहुपुत्रश्च जायते ॥

मृजा शुद्धिः।

भविष्ये—

कृत्वा चाश्वयुजे मासि विपुलं धान्यपर्व्वतम्।

सुवर्णवस्त्रगन्धाढ्यं सूर्य्यस्याग्रे निवेदयेत् ॥

सुविचित्रैर्महायानैर्वरभोगसमन्वितैः।

वर्षकोटिसहस्राणि सूर्य्यलोके महीयते ॥

अस्मिन् लोके पुनःप्राप्य राजानं विन्दते पतिम् ॥

अत्र चैकभक्तादि कार्त्तिकवद्बोद्धव्यम्।

वामनपुराणे—

तिलांस्तुरङ्गवृषभं दधिताम्रायसादिकम्।

प्रीत्यर्थं पद्मनाभस्य देयमाश्वयुजे नरैः ॥

आदिपदेन विद्यमानाभीष्टशुचिद्रव्यपरिग्रहः।

देवीपुराणे—

घृताभिषेकं यः कुर्य्यादहोरात्रं नराधिप!।

सूक्ष्माधारेण भाण्डेन भवगत्या विचक्षणः ॥

मासि चाश्वयुजे वीर सर्व्वपापैः प्रमुच्यते ॥

विष्णुधर्म्मोत्तरे—

आश्विने घृतदानेन रूपवानभिजायते।

ग्रहणमुपक्रम्य देवीपुराणे—

आश्विने सरयूः श्रेष्ठा स्नानदानादिकर्म्मणि।

नन्दिपुराणे—

अथवाश्वयुजं मासं वर्ज्जयेन्मांसभक्षणम्।

मासषट्ककृतं पुण्यं लभेताश्वयुजे नरः॥

मासषट्कावच्छिन्नमांसवर्ज्जनजन्यपुण्यं लभते इत्यर्थः।

ब्रह्मपुराणे—

कृष्णाश्वयुक्तृतीयायां पूर्व्वन्तु वरुणो ह्यभूत्।

तस्मात् स तत्र सम्पूज्यो यथाविभवविस्तरैः॥

[1]स यक्षः शङ्खपद्मौ तु निधी लेभे धनेश्वरः।

चतुर्थ्यां तेन तत्रासौ सम्पूज्यो ब्राह्मणानुगः।

पञ्चम्यां वसुधा देवी पातालादुद्धृता पुरा॥

वराहेणाथ सा तत्र पूज्या दिङ्नागसंयुता।

षष्ठ्यां कुमाराः सम्भूताः पौराणाः केचिदेव हि।

तानुद्दिश्य कुमारास्तु पुत्राः पूज्याः स्वलङ्कृताः॥

सप्तम्यामभिमानस्तु स्ववीर्य्याज्जितवान् जगत्।

तमुद्दिश्यात्मनः पूजा कार्य्या स्त्रीबालकेषु च॥

अशोका योगिनी सिद्धा कृष्णाष्टम्यां पुरा यदा।

तदा सा तत्र सम्पूज्या योगनिद्रा तु वैष्णवी॥

विशेषेण कृतस्नानैः सुवस्त्रैश्च स्वलङ्कृतैः।

सिन्दूरकर्द्दमालेपैः नृत्यवाद्यपुरःसरैः॥

---

१ A B स यक्षेशः।

शक्त्या शय्यासने तस्मै निवेद्य सोत्तरच्छदे।
पुष्पान्नवस्त्रधूपन्तु क्रीड़ितव्यञ्च सर्व्वदा॥
गुड़ाज्यमरीचोपेतं यवान्नं भक्षयेत्ततः॥

ब्राह्मणानुगो ब्राह्मणानुयायी, दिङ्नागा दिशां नागा ऐरावतादयः, सिन्दूरकर्द्दमालेपैर्जलक्रीड़ितसिन्दूरलेपैः। सोत्तरच्छदे सोपरिवसने पुष्पान्न-वस्त्र-धूपन्तु निवेद्यमिति वचनपरिणामेनान्वयः।

भविष्यपुराणे— विष्णुरुवाच—

कन्यागते सवितरि कृष्णपक्षेऽष्टमी च या।
सा च पुण्या पापहरा शिवस्यानन्दवर्द्धिनी॥
स्नानं दानं जपो होमः पितृदेवाभिपूजनम्।
सर्व्वं प्रीतिकरं स्याद्दे प्रीते तस्मिन् त्रिलोचने॥

अष्टकाश्राद्धमप्यत्र।

देवीपुराणे— शक्र उवाच।

येनोपायेन सर्व्वेषां देवी सर्व्वफलप्रदा।
तदहं श्रोतुमिच्छामि नवम्यामाश्रितं फलम्॥

ब्रह्मोवाच—

आश्विने वाऽथ माघे वा चैत्रे वा श्रावणेऽपि वा।
कृष्णादारभ्य कर्त्तव्यं व्रतं शुक्लावधिं हरे!॥

कृष्णपक्षतः शुक्लपक्षमवधिं यावत्, हरे इन्द्र। एतच्चोक्तसामान्यतम(?)मासेषु वक्ष्यमाणप्रकारेण कृष्णाष्टमीमारभ्य शुक्लाष्टमीं यावत् कर्त्तव्यम्।

आश्विनीमष्टमीं कृष्णामेकभक्तेन कारयेत्।
मङ्गलारूपिणीं देवीमथवा रुरुघातिनीम्॥
पूजयेन्नवभेदेन गन्धमाल्यनिवेदनैः।
कन्यका भोजयेदत्र देवीभक्तांश्च मानवान्॥
नक्तेन नवमी कार्य्या अयाची दशमीं क्षिपेत्।
एकादशीमुपवसेत् पुनरेष विधिर्भवेत्॥

पुनरेष विधिरिति यथा कृष्णाष्टम्यादिदिनचतुष्टयमेकभक्तनक्तायाचितोपवासैरेवमपरमपि दिनचतुष्कत्रयं नेतव्यमित्यर्थः। तेन चतुष्कचतुष्केण व्रतमिदं सम्पद्यत इति।

यावच्छुक्लाष्टमी शक्र उपोष्या तु विधानतः।

विधानत इत्यनेनान्यत्रोक्तोपवासगुणानुवादः।

दानं होमो जपः पूजा कन्याभोज्यन्तु प्रत्यहम्॥
कर्त्तव्यं जितरोषेण देव्या भक्तिरतेन च।
नवधा पशुघातन्तु महिषादि अजाविकम्॥
कर्त्तव्यं भूतवेताले नचैवात्मचिकीर्षया।
कन्या अलङ्कृतास्तद्वद्द्विजा देवीपरायणाः॥

नवधा नवप्रकारेण भूतवेताले भूतवेतालार्थं नचैवात्मचिकीर्षया नात्मोपभोगचिकीर्षया अलङ्कृताः कर्त्तव्या इत्यन्वयः। द्विजा इत्यत्रापि तथैवान्वयः।

नटनर्त्तनप्रेक्षणकं रथयात्रा प्रजागरम्।
दानं देयं सदा भक्त्या सर्व्वेषामपि शक्तितः॥
महाभैरवरूपेण ग्रन्थिमालाधराश्च ये।

पूजनीया विशेषेण वस्त्रशोभा पुरादिषु ॥
कर्त्तव्या सिद्धिकामार्थप्रापणाय सुरोत्तम ।
अनेन विधिना शक्र यथेष्टं लभते फलम् ॥
मङ्गला भैरवी दुर्गा वाराही चिदशेश्वरी ।
उमा हैमवती कन्या कपाली कैटभेश्वरी ॥
काली ब्राह्मी महेशी च कौमारी मधुसूदनी ।
वाराही वासवी शर्व्वा नामान्येतानि वै जपेत् ॥
पूजयेद्भोजयेत् कन्याः शास्त्रदृष्टेन कर्म्मणा ।
वस्त्रालङ्कारकण्ठादिकटकाः कटिसूचकाः ॥
दातव्याश्चात्मनः शक्त्या देव्या भक्तैः सुखार्थिभिः ।
अथवा नवरात्रन्तु सप्तपञ्चत्रिकेऽपि वा ॥

अथवेति विकल्पः पूजयेदित्यादिना सम्पद्यते ।

तेन—

प्रत्यहं भोजयेत् कन्याः शास्त्रदृष्टेन कर्म्मणा ।
वस्त्रालङ्कारकण्ठादिकटकाः कटिसूचका दातव्याः ।

अथवा नव-पञ्च-सप्त-त्रिदिवसेषु शक्त्यपेक्षया—

एकभक्तेन नक्तेन तथैवायाचितेन च ।
क्षपयेत् स पुमान् शक्र यावच्छुक्ला तु अष्टमी ॥
पूजयेन्मङ्गलां तत्र मण्डले विधिवत् सदा ॥

मङ्गलां रुरुघातिनीं चेत्यपि द्रष्टव्यं तथैव प्रक्रमात् ।

सर्व्वसम्भारसम्पन्ने सर्व्वविधिविधायके ।
सर्व्वकामप्रदे शक्र सर्व्वकामानवाप्नुयात् ॥

अर्थकामस्यार्थदन्तु राज्यकामस्य राज्यदम्।
आरोग्यपुत्रदं वत्स महापातकनाशनम्॥
सर्व्ववर्णैश्च कर्त्तव्यं पुं-स्त्री-बाल-नपुंसकैः।
नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत्॥
सङ्गरेष्वजितो नित्यं महानेकोऽपि जायते।
श्रवणात् सर्व्वकार्य्याणि सिध्यन्ति नात्र संशयः॥

एतच्च व्रतं नवमीमाश्रितं फलमिति प्रश्ने दर्शनात् भूपालकृत्यसमुच्चये नवमीव्रतमित्युपसंहृतम्।

अष्टमीमाश्विनीं कृष्णामिति व्रतोपक्रमे दर्शनादष्टमीव्रतमिति कल्पतरावुपसंहृतम्। देवीपुराणे तु अष्टमीनवमीव्रतमित्युक्तम्।

वस्तुतस्तु—

अष्टम्यादिशुक्लाष्टमी पर्य्यन्तेन यावान् दिनप्रचयस्तावद्दिनसमाप्यं तृटीपक्षे नवमीमपि यावत् कृतिः, [1]अष्टमीपक्षे विधिसंकोचान्नवमीव्रतमित्युक्तम्।

वस्तुतस्तु— अष्टम्यादि पक्षौ शुक्लाष्टमीं यावदिति चतुष्कत्रयं पुनरावर्त्तते इति कल्पतरुव्याख्यानं न सङ्गत इति।

तदनुसारेणात्र व्यवस्था साधीयसी—

आश्विनवन्माघे चैत्रे श्रावणेऽपि लिखितप्रायमिदमूहनीयम्। व्रताङ्गमेकभक्तञ्चात्र सप्तम्यामष्टम्यां प्रातर्यथाविधि व्रतग्रहणम्।

---

१ B D अन्तिमकृत्य—।

भविष्यपुराणे— सुमन्तुरुवाच—

कृत्वैवाश्वयुजे मासि कृष्णपक्षे नराधिप।
नवम्यामुपवासौ तु दुर्गादेवीं प्रपूजयेत्॥
धूपपुष्पोपहारैश्च ब्राह्मणानाञ्च तर्पणैः।
पूजयित्वा रथं कृत्वा नानावस्त्रोपशोभितम्॥
शोभितं ध्वजमालाभिश्छत्रचामरदर्पणैः।
नानापुष्पस्रजोभिश्च सिंहैर्युक्तं मनोरमम्॥
कृत्वा स्वर्णमयीं दुर्गां महिषे शूलशोभिताम्[1]।
विन्यस्य रथमध्ये तु पूजयेत् कृतलक्षणाम्॥
तद्रथं राजमार्गेण शङ्खभेर्य्यादिनिस्वनैः।
नवम्यां भ्रामयित्वा तु नयेद्दुर्गालये नृप॥
तत्र जागरपूर्व्वन्तु प्रदीपाद्युपशोभितम्।
नानाप्रेक्षणकैर्वीर नृत्यमानैश्च पुत्रकैः॥
जागरं कारयेद्वीर पूजमानश्च चण्डिकाम्।
प्रभाते स्नपनं कृत्वा तद्भक्तानाञ्च भोजनम्॥
रथं शोभासमायुक्तं भगवत्यै निवेदयेत्।
भुक्त्वा च बान्धवैः सार्द्धं प्रणम्यार्य्यान् गृहं व्रजेत्॥
सर्व्वव्रतानां प्रवरं सर्व्वपापप्रणाशनम्।
नवमी रथव्रताख्यं सर्व्वकामार्थसाधकम्॥
सर्व्वयज्ञेषु यत्पुण्यं सर्व्वदानेषु यत् फलम्।
तत्फलं सकलं विन्देन्नवमीव्रतपालनात्॥

---

१ B महिषासनशोभिताम्

कल्पकोटिशतं साग्रं विष्णुलोके महीयते।
पुनरेत्य मही राजा सार्व्वभौमो भवेदिह॥
रत्नोपकरणैर्युक्तां [1]दन्तदारुमयीं शुभाम्।
शय्यां निवेदयेद्यस्तु भगवत्यै नराधिप॥
सम्पूज्य गन्धपुष्पाद्यैर्वस्त्रालङ्कारभूषणैः।
भक्ष्यभोज्यैरशेषैश्च विधिवच्चण्डिकां नृप॥
दुकूलतूलवस्त्राणां परिसङ्ख्या तु यावती।
तावद्वर्षसहस्राणि दुर्गालोके महीयते॥
वृषं शूलाङ्कितं यस्तु भगवत्यै निवेदयेत्।
आसप्तमं स तु कुलं पूज्य देवालयं व्रजेत्॥
दत्त्वोभयमुखीं गाञ्च भगवत्यै सुशोभनाम्।
सप्तद्वीपार्णवां दत्त्वा यत् फलं तदवाप्नुयात्॥
पदद्वयं शिरोऽर्द्धञ्च यावद्वत्सस्य निर्गतम्।
तावद्गौः पृथिवी ज्ञेया तद्दाता स्यान्महीप्रदः॥

नवमीरथव्रतम्। अत्र शुक्लादिर्मासः।

अथ मघात्रयोदशी।

मनुः—

यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम्।
तदप्यक्षयमेवाहु[2]र्वर्षासु च मघासु च॥
अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम्।
पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च॥

---

१ B देवदारु—। २ B एव स्यात्।

याज्ञवल्क्यः—

अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्य्यसङ्क्रमः॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्य्ययोः।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः॥

वसिष्ठः—

पिता पितामहश्चैव तथैव प्रपितामहः।
उपासते सुतं जातं शकुन्ता इव पिप्पलम्[1]॥
[2]मधु मांसेन खड्गेन पयसा पायसेन च।
[3]एष दास्यति नस्तृप्तिं वर्षासु च मघासु च॥

विष्णुः—

अथ पितृगीते गाथे भवतः—

अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः।
प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः॥

असिते कृष्णे।

मधुप्लुतेन[4] यः श्राद्धं पायसेन समाचरेत्।
कार्त्तिकं सकलं वापि प्राक्छाये कुञ्जरस्य च॥

श्रीमहाभारते—

अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम्।
मघायां सर्पिषा युक्तं पायसं दक्षिणायने॥

---

१ B पिप्पलान् शकुना इव। २ B मधुमांसेन शाकैश्च।
३ C D एष नो दास्यति श्राद्धम्। ४ B मधूत्तरेण।

अजेन सर्व्वलोहेन मघासु च यतव्रतः।
हस्तिच्छायासु विधिवत् कर्णव्यजनवीजितम्॥

पैठीनसिः—

छागेन सर्व्वलोहेन वर्षासु च मघासु च।
पुत्रो वा यदि पौत्रो यो नो दद्यात्त्रयोदशीम्॥

इति पितरः समुद्दीयन्ते सर्व्वलोहेन सर्व्वलोहितवर्णेन छागेन।

तथाच हविष्यप्रस्तावे देवलः—

छागो वा सर्व्वलोहितः।

याज्ञवल्क्यः—

यद्ददाति गयास्थश्च सर्व्वमानन्त्यमश्नुते।
तथा वर्षात्रयोदश्यां मघासु च विशेषतः॥

शङ्खः—

प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम्।
प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च॥

ब्रह्मपुराणे—

आश्वयुज्यान्तु कृष्णायां त्रयोदश्यां मघासु च।
प्रावृट्तौ यमः प्रेतान् पितॄंश्चापि यमालयात्॥
विसर्ज्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम्।
क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतन्तु स्वयं कृतम्॥
पायसं पुत्रपौत्रेभ्यः काङ्क्षन्तो मधुसंयुतम्।
तस्मात्तांस्तत्र विधिना तर्पयेत् पायसेन च॥
मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा।

ग्रासमात्रं परगृहाद्भक्तं यः प्राप्नुयान्नरः ॥
भिक्षामात्रेण यः प्राणान् सन्धारयति वा [1]स्वयम् ।
यो वा संवर्द्धयेद्देहं प्रत्यहं स्वात्मविक्रयात् ॥
श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः ।
त्रयोदश्यां प्रयत्नेन वर्षासु च मघासु च ॥
नास्मात् परतरः कालः श्राद्धेष्वन्यत्र विद्यते ।
यत्र साक्षात्तु पितरो गृह्णन्त्यमृतमक्षयम् ॥

श्राद्धकालं प्रकृत्य विष्णुः—

प्रौष्ठपद्या ऊर्द्धं कृष्णत्रयोदशी ।

कृष्णत्रयोदशी-मघयोः प्रत्येकमेव निमित्तत्वं नैरपेक्षश्रुतेः, मिलितयोरपि ब्रह्मपुराणानुसारात् विशिष्टफले निमित्तत्वं, पुत्रिणि अस्यावश्यकश्राद्धस्यानिषेधात् सपुत्रापुत्रयोर्द्वयोरप्यधिकारः ।

पिण्डवत्येव श्राद्धे—

तत्रापि महती पूजा कर्त्तव्या पितृदैवते ।
तत्रैव पिण्डप्रदानन्तु ज्येष्ठपुत्री विवर्ज्जयेत् ॥

इति देवीपुराणे केवलमघानिमित्तकस्य श्राद्धस्य सपुत्रापुत्रयोर्विधानात् ज्येष्ठपुत्रिणि च पिण्डदाननिषेधात् पिण्डरहितं श्राद्धं ज्येष्ठपुत्रिणापि कर्त्तव्यम् । न च पिण्डदाननिषेधमुखेन श्राद्धनिषेधः, श्राद्धं विदधत एव ज्येष्ठपुत्रिणि तन्निषेधकत्वात् । तथाच पिण्डं विनापि नित्यश्राद्धवत् श्राद्धफलम् ।

---

१ मूले चान्यदं ।

गजच्छाया तु—

योगो मघात्रयोदश्यां कुञ्जरच्छायसंज्ञितः ।

भवेन्मघायां हंसस्थे च शशिन्यर्कें करे स्थिते ॥

इति ब्रह्मपुराणे व्युत्पादिता । एवं प्राक्छाये कुञ्जरस्य चेत्यत्रापि गजच्छायोक्ता ।

यच्च व्यासवचनं कर्णव्यजनवीजितं सोऽनुवाद इति हलायुधः ।

कल्पतरु-पारिजातयोः-प्राक्छाये कुञ्जरस्य चेति प्राचीमुपगतायां हस्तिच्छायायामिति व्याख्यातम् । तच्च निमित्तान्तरत्वेन समाधेयम् । युक्तञ्चैतत् ।

तदुक्तं वायुपुराणे—

छायायां हस्तिनश्चैव दत्वा श्राद्धं न शोचते । इति ।

एवञ्चानयोर्मते कर्णव्यजनवीजितमित्यपि समयव्यतिरिक्तमेव निमित्तं गजच्छायायाश्च समत्वेन लिखनेऽपि याज्ञवल्क्यीये प्राक्छाये कुञ्जरस्य चेत्यनेन निमित्तान्तराभिधानेऽविरोधात् ।

नेच्छेत्त्रयोदशीश्राद्धं पुत्रवान् यः सुतायुषे ।

तथा श्राद्धं नैकस्य वर्गस्य त्रयोदश्यामुपक्रमेत् ।

न तु दृष्टास्त्रयो यस्य सुता हि सन्ततिश्च ते ॥

इति वाक्यद्वयान्निषेधः त्रयोदशीश्राद्धस्येति तु न वाच्यम् । अनयोर्वाक्ययोरमौलिकत्वात् ।

ब्रह्मपुराणे—

सूतके मृतके वापि ग्रस्तयोश्चन्द्रसूर्य्ययोः ।

छायायां कुञ्जरस्याथ भुक्त्वा तु नरकं व्रजेत् ॥

मुक्त्वा प्रमादादिभिस्तु सम्यक् चान्द्रायणं चरेत् ॥

तथा—

अश्वयुक्कृष्णपक्षे तु श्राद्धं देयं दिने दिने ।

त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा ॥

दिने दिने इति सर्व्वस्मिन्नेव दिने त्रिभागहीनं पक्षमिति पञ्चमीतः प्रभृति अपरपक्षश्राद्धं कुर्व्वीत ।

आचतुर्थ्यां यदहः सम्पद्यते तदहरिति कात्यायनात् ।

अथवा— श्राद्धममावस्यायां दद्यात् पञ्चमीप्रभृति वा अपरपक्षस्य यथा श्राद्धं सर्व्वस्मिन्नेव । इति गोतमवचनाच्च ।

त्रिभागमिति दशमीतः प्रभृति ।

कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्द्दशीम् ।

श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ॥

इति मनुवाक्यात् । एवञ्च त्रिभागपदद्वयार्थो वक्तोऽप्यादर्त्तव्यः । अर्द्धमिति अष्टमीप्रभृति ।

एके तु अर्द्धमिति खण्डमात्रवचनमिति एकह्यादिदिनेऽपि श्राद्धकरणं विहितं बोद्धव्यमित्याहुः ।

शक्त्यपेक्षया चायं विकल्पः । अत्राश्विनकृष्णपक्षत्वमेव तन्त्रं न तु कन्यागतत्वं निरपेक्षश्रवणात् ।

आषाढ़ीमवधिं कृत्वा यः स्यात् कृष्णस्तु[1] पञ्चमः ।

अत्र श्राद्धं प्रकुर्व्वीत कन्यां यातु न यातु वा ॥

इति जातुकर्णवाक्यदर्शनाच्च, अतएव तथाचारोऽपि ।

---

१ B पक्षस्तु ।

एषु सर्व्वपक्षेषु चात्र चतुर्द्दशीत्यागः ।

कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्द्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ॥

इति मनुवचनात् ।

ब्रह्माण्डपुराणे—

कन्यां गते सवितरि यान्यहानि तु षोडश ।
क्रतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयम् ॥

अत्र कन्यागतषोड़शदिनमेव तत्त्वं तच्च तिथिवृद्धिक्रमं विनापि लभ्यते अतस्तिथिवृद्धिविषयकमेतदिति कस्यचिद्वचनमयुक्तम् ।

तथाच ब्रह्मपुराणे—

श्राद्धन्तु पौर्णमास्यां वै कृत्वा पूर्णफलं लभेत् ।
प्रतिपद्धनलाभाय द्वितीयाऽर्थाय चापरा ॥
तृतीयायां वरार्थाय शत्रुनाशाय चापरे ।
पञ्चम्यां धनलाभाय श्राद्धं कुर्य्यात् प्रयत्नतः ॥
षष्ठ्यान्तु बालरक्षार्थं सप्तम्यां बन्धुवृद्धये ।
वृद्धिकामस्तथाष्टम्यां स्त्रीकामो नवमेऽहनि ॥
दशम्यां ब्रह्मतेजोऽर्थी सन्तत्यर्थी तथापरे ।
द्वादश्यां जयलाभाय त्रयोदश्यां विभूतये ॥
प्रायानशनशस्त्राग्नि विषोदन्धनिनान्तथा ।
चतुर्द्दश्यां भवेत् पूजा तृप्त्यर्थमिति निश्चयः ॥
अमावस्यान्तु सर्गाय भक्त्या सन्तर्पयेत् पितॄन् ॥

तेन ब्रह्मपुराणकथितश्राद्धे पूर्णिमासहिताश्विनकृष्णपक्षः

ब्रह्माण्डपुराणीयवाक्ये षोड़शदिवसाः। तथाच कन्यागतादित्यत्व-मादायैतेष्वेव प्रशंसा तेन य एते पूर्णिमासहितकृष्णपक्षरूप-षोड़शदिवसास्ते कन्यागतादित्यमासाद्य क्रतुतुल्या भवन्तीत्यर्थः।

ब्रह्मपुराणे—

यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः।
तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं तदा॥

यतः कुतश्चिन्निमित्तात् कन्यागतापरपक्षे श्राद्धं न सम्पन्नं तं प्रति यावत्तुलास्थः सविता तावान् श्राद्धस्य कालोऽभिहितः।

भविष्यपुराणे—

येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि।
तस्यां दद्यान्नचेद्दत्तं पितॄणान्तु महालये॥

कन्यागतापरपक्षो महालयः। अत्र चामावस्यामात्रश्राद्ध-प्राप्तावपि कन्यागतापरपक्षे श्राद्धाकरणेन यः प्रत्यवायस्तत्परी-हारबोधनमिति न वैफल्यं, अनयोस्तु ब्रह्मपुराण-भविष्यपुराण-वाक्ययोरेकवक्तृकयोः कन्यागतापरपक्षश्राद्धकरणाभावे कार्त्तिका-मावस्यायां तत्कार्य्यबोधकत्वं पुराणभेदाश्रयनादपौनरुक्तम्।

यावत्तुलास्थः सविता तावान् श्राद्धकालः।

इति पूर्व्ववाक्यव्याख्यानं कल्पतरोः सङ्कोचनीयम्, यदि च पूर्व्वेण कन्यागतापरपक्षे असम्भवे तुलापरपक्षविधिः। अनेन च तदसम्भवे कार्त्तिक्यमावस्याविधिः। तदा सामान्यविशेषमादाय पौनरुक्तं मन्तव्यम्। तेनैकेन तत्कार्य्येऽग्रिमपक्षविधिरुत्तरेण तत्कार्य्येऽमा-वस्याविधिरिति विकल्प एव शक्त्यपेक्षया।

केचित्तु— महालयशब्देनामावस्यायामेव महान् लयश्चन्द्रमसोऽस्यामिति योगतो विवचां गोचरीकृत्य पूर्व्वामावस्याकार्य्यमावस्यान्तरविधिमेव मन्यन्ते ।

अथ प्रसङ्गात् काम्यानि ।

तत्र कात्यायनः—

स्त्रियः प्रतिपदि द्वितीयायां स्त्रीजन्म [1]अविस्तृतीयायां चतुर्थ्यां चुद्रपशवः पुत्राः पञ्चम्यां षष्ठ्यां द्यूतविजयः, ऋद्धिः कृषिः सप्तम्यामष्टम्यां वाणिज्यमेकशफं नवम्यां गावो दशम्यां परिचारका एकादश्यां द्वादश्यां धान्यं कुप्यं ज्ञातिश्रैष्ठ्यं त्रयोदश्यां युवानस्तु म्रियन्ते शस्त्रहतस्य चतुर्द्दश्याममावस्यायां सर्व्वम् ।

मनुः—

कुर्व्वन् प्रतिपदि श्राद्धं सुरूपांल्लभते सुतान् ।
कन्यकाश्च द्वितीयायां तृतीयायान्तु वन्दिनः ॥
पशून् चुद्रांश्चतुर्थ्यान्तु पञ्चम्यां शोभनान् सुतान् ।
षष्ठ्यां द्यूतं कृषिञ्चापि सप्तम्यां लभते नरः ॥
अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा ।
स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु ॥
एकादश्यां तथा रूप्यं ब्रह्मवर्च्चस्विनः सुतान् ।
द्वादश्यां जातरूपञ्च रजतं कुप्यमेव च ॥
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्द्दश्यान्तु सुप्रजाः ।
प्रीयन्ते पितरश्चात्र ये शस्त्रेण हता रणे ॥

---

1 D अयाः ।

पञ्चत्यादिविनिर्द्दिष्टान् विपुलान् मनसः प्रियान् ।
श्राद्धदः पञ्चदश्यान्तु सर्व्वान् कामान् समश्नुते ॥

वन्दिनः स्तावकास्तैः स्तुत्यो भवतीत्यर्थः। द्यूतं द्यूतजयं कुप्यं सुवर्णरजतातिरिक्तं ताम्रादिकम् । पञ्चत्यादीति पञ्चतिः प्रतिपत् प्रतिपदादिकथिततिथिफलं शोभनं सर्व्वममावस्यायामित्यर्थः ।

अत्र सर्व्वानित्यनेनैव प्रस्तुतफललाभे पञ्चत्यादिविनिर्द्दिष्टानिति पुनर्वचनात् तत्तत् सम्पूर्णफलकामस्याधिकारः। न तु सर्व्वेभ्यो दर्शपौर्णमासाविति योगसिद्धिन्यायेनान्यतमफलकामस्येति ।

आपस्तम्बः—

प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते ।

क्रियमाणे श्राद्धे स्त्रीबहुलं, द्वितीये स्तेनाः तृतीये ब्रह्मवर्चस्विनः चतुर्थे क्षुद्रपशुमान् पञ्चमे पुमान् बह्वपत्यो नचानपत्यः प्रमीयते, षष्ठेऽध्वशीलोऽक्षशीलश्च, सप्तमे कृषिवृद्धिरष्टमे पुष्टिः, नवमे एकखुराः, दशमे व्यवहारवृद्धिः,[१] एकादशे कृष्णायसं त्रपुशीसं द्वादशे पशुमान् त्रयोदश्यां बहुपुत्रो बहुमित्रो दर्शनीयापत्यो, युवमारीणश्च भवन्ति। चतुर्द्दशे आयुधर्द्धिः[२] । ऋद्धिरिति संसिद्धिरित्यर्थः पञ्चदशे पुष्टिः स्त्रीप्रायमपत्यम् ।

सततं श्राद्धं कुर्व्वन्नाप्नोतीत्यधिकारे विष्णुः—

गृहेऽभिरूपाः स्त्रियः प्रतिपदि, कन्यां युतां द्वितीयायां,

---

१ B सिद्धिः । २ मूले आयुधेनर्द्धिः ।

सर्व्वकामान् तृतीयायां, [1]यशश्चतुर्थ्यां, श्रियं पञ्चम्यां द्यूतविजयं षष्ठ्यां कृषिं सप्तम्यां वाणिज्यमष्टम्यां पशून् नवम्यां वाजिनो दशम्यां पुत्रान् ब्रह्मवर्चस्विनस्त्वेकादश्यां कनकरजते द्वादश्यां सौभाग्यं त्रयोदश्यां सर्व्वान् कामान् पञ्चदश्याम्। शस्त्रहतानां श्राद्धकर्मणि चतुर्द्दशी प्रशस्ता।

श्राद्धं कुर्य्यादित्यधिकारे हारीतः—

पञ्चमीं पुत्रकामः षष्ठीं धनकामः सप्तमीं पशुकामः, अष्टमीं शस्त्रहताय आरोग्यकामोः नवमीं सेनाहतायाभिजित्कामः दशमीमन्नादिकाम एकादशीमृद्धिकामो द्वादशीं श्रीकामः त्रयोदशीं यशस्कामः चतुर्द्दशीं भूतिकामः स्वस्तिकामो वा अमावस्यायां सर्व्वकामः, चतुर्द्दश्यां शस्त्रहतस्यैव स्वस्तिकामेन भूतिकामेन श्राद्धं कर्त्तव्यम्।

वायुपुराणे—

पुष्टिं प्रज्ञां स्मृतिं मेधां पुत्रानैश्वर्य्यमेव वा।
कुर्व्वाणः पौर्णमास्यान्तु सम्पूर्णं फलमश्नुते॥
प्रतिपद्धनलाभाय लब्धं वापि न नश्यति।
द्वितीयायान्तु यः कुर्य्याद्द्विपदाधिपतिर्भवेत्॥
वरार्थिनां तृतीया स्याच्छत्रुघ्नी पापनाशिनी।
श्राद्धं चतुर्थ्यां कुर्व्वाणः शत्रोश्छिद्राणि पश्यति॥
पञ्चम्याञ्चैव कुर्व्वाणः प्राप्नोति महतीं श्रियम्।
षष्ठ्यां श्राद्धानि कुर्व्वाणो द्विजास्तं पूजयन्त्युत॥

---

१ B पशूंश्चतुर्थ्याम्।

कुरुते यस्तु सप्तम्यां श्राद्धानि सततं नरः।
महासत्रमवाप्नोति गणानाञ्चाधिपो भवेत्॥
सम्पूर्णामृद्धिमाप्नोति योऽष्टम्यां कुरुते नरः।
श्राद्धं नवम्यां कर्त्तव्यमैश्वर्य्यं स्त्रीषु काङ्क्षता॥
कुर्व्वन् दशम्यान्तु नरो ब्राह्मीं श्रियमवाप्नुयात्।
वेदांस्तथाप्नुयात् सर्व्वान् विप्राणां समतां तथा॥
एकादश्यां परं दानमैश्वर्य्यं सन्ततिन्तथा।
द्वादश्यां जयलाभञ्च राज्यमायुर्वसूनि च॥
प्रजावृद्धिं पशून् मेधां स्वातन्त्र्यं पुष्टिमुत्तमाम्।
दीर्घमायुरथैश्वर्य्यं कुर्व्वाणस्तु त्रयोदशीम्॥
युवानश्च मृता यस्य गृहे तेषां प्रदापयेत्।
शस्त्रेण तु हता ये वै तेषां दद्याच्चतुर्द्दशीम्॥
अमावस्यां प्रयत्नेन श्राद्धं कुर्य्याच्छुचिः सदा।
सर्व्वान् कामानवाप्नोति स्वर्गञ्चानन्त्यमश्नुते॥

अत्र स्तेन-युवमरणादावपुत्रतया तद्दोषसहिष्णोरधिकार इति कल्पतरुः। यः (श्येनादियागविधयो) उल्लङ्घितशास्त्रः स्तेनादि कामयते तं प्रतीदं शास्त्रमित्यन्यः।

पुत्रगतानिष्टश्रवणादपुत्रस्य पश्वादिफलकामस्याधिकारः, अनुवादकस्याप्यधिकारिविशेषोपदर्शकतया सार्थकत्वं विध्यविरोधकत्वञ्चेति पारिजातनिबन्धः। स तु सङ्गतः।

ब्रह्मपुराणे—

प्रायानशनशस्त्राग्नि विषोद्बन्धनिनान्तथा।

चतुर्द्दश्यान्तु कर्त्तव्यं तृप्त्यर्थमिति निश्चयः॥

प्रायो महापथगमनम्।

मरीचिः—

विषशस्त्रश्वापदाहि तिर्य्यग्ब्राह्मणघातिनाम्।

चतुर्द्दश्यां क्रिया कार्य्या अन्येषाञ्च विगर्हिता॥

विषेति. विषादिप्रयुक्तशस्त्रघातभाजामित्यर्थः। एतच्च सर्व्वं कृष्णचतुर्द्दशीविषयं शस्त्रविषहतानां तृप्त्यर्थत्वे श्राद्धस्य ब्रह्मपुराणे विहिते अच तदश्रवणेऽपि काम्यत्वमपि न तद्वाक्यविषयांश एव काम्यत्वं अवैषम्येनाचापि फलकल्पनस्योचितत्वात्।

देवीपुराणे—

आहवेषु विपन्नानां जलाग्निभृगुपातिनाम्।

चतुर्द्दश्यां भवेत् पूजा अमावस्यान्तु कामिकी॥

अमावस्यान्तु कामिकीत्यमावस्योक्तफलार्थः, शस्त्रघातिनामप्यमावस्यायां श्राद्धं कार्य्यमिति हलायुधः।

अमावस्यान्तु कामिकीति श्रवणाच्चतुर्द्दश्यां नित्यं श्राद्धम्। एतच्च काम्यं नित्यञ्च स्त्रिया अपि कर्त्तव्यं विशेषाश्रुतेः।

न योषिद्भ्यः पृथग्दद्यादितिनिषेधान्नेति चेत्।

तर्हि—

येऽसपिण्डीकृताः प्रेता नैव तेषां पृथक् क्रिया।

इति शातातपवचनात् पुंसोऽपि न स्यात्। विशेषविधेः करणमिति चेत् तुल्यं स्त्रिया अपि, विशेषविधिः पुंस्येव चरितार्थ—

इति चेत् न, वैपरीत्यप्रसङ्गात्। पुंस्त्वश्रुतेर्विनिगमना इति

चेत् न तस्यानाकाङ्क्षितत्वेनोपादेयेऽप्यविवक्षितत्वान्निमित्तकोटित्वे तु सुतरामिति पारिजातः।

अत्र शस्त्रहतशास्त्रे यावद्वचनं हि वाचनिकमिति न्यायात् यावन्तो वचनविषयास्तावतामेव निमित्तत्वमायाति, कैश्चिदाचारानुरोधाद्व्याधिव्यतिरेकमृतत्वं शस्त्रहतत्वं विवक्षितमतः स्त्रिया अपि प्रसवाभिघातमृताया अत्रैव श्राद्धमित्युक्तं अत उपसर्गमृतत्वं चतुर्द्दशीश्राद्धे निमित्तत्वम्।

वायुपुराणे—

युवानस्तु गृहे यस्य मृतास्तेषान्तु दापयेत्।
शस्त्रेण वा हता ये वै तेषां दद्याच्चतुर्द्दशीम्॥

अत्र यौवनं षोड़शवर्षोपरि त्रिंशद्वर्षपर्य्यन्तं शास्त्रान्तरोक्तम्। नत्वाषोड़शाद्युवानः सप्तत्यूर्द्धं स्थविरा इत्यनुसारात् षोड़शवर्षोपरि सप्ततिवर्षपर्य्यन्तं, न वा प्रथमे वयसि नाधीयितमितिवचनात् पञ्चविंशत्यूर्द्धं पञ्चाशद्वर्षपर्य्यन्तमिति आचारबाधात्। गृह इत्युपलक्षणं वहिर्मरणेऽपि विधिप्रवृत्तेः। अन्यथा स्वगृहे मृतयूनोऽसगोत्रस्यापि श्राद्धप्रसङ्गात्।

शस्त्रहतश्राद्धञ्चेदं काम्यं क्रियमाणं पार्व्वणविधानेन कर्त्तव्यम्।

कामाय विहितं काम्यमभिप्रेतार्थसिद्धये।
पार्व्वणेन विधानेन तदप्युक्तं यथाक्रमम्॥
इति शातातपवचनात्।

पार्व्वणविधानं पार्व्वणेतिकर्त्तव्यताकविश्वेदेवावाहनाग्नौकरणानि एतदेव तु नित्यतया क्रियमाणमेव न तु पार्व्वणविधानकमाचारात्।

चतुर्द्दशन्तु यच्छ्राद्धं सपिण्डीकरणे कृते ।
तदेकोद्दिष्टविधिना कर्त्तव्यं शस्त्रघातिनाम् ॥

इति गौड़वाक्यदर्शनाच्च ।

यत्तु—

औरस-क्षेत्रजौ पुत्रौ विधिना पार्व्वणेन तु ।
प्रत्यब्दमितरे कुर्य्युरेकोद्दिष्टं सुता दश ॥

इति जावालवचनम्—

तथा— ततः प्रभृति संक्रान्तावुपरागादि पर्व्वसु ।
त्रिपिण्डमाचरेच्छ्राद्धं वर्ज्जयित्वा मृताहनि ॥
एकोद्दिष्टं परित्यज्य पार्व्वणं यः समाचरेत् ।
सदैव पितृहा स स्यान्मातृभ्रातृविनाशकः ॥

तथा— मृताहे पार्व्वणं कुर्व्वन्नधो याति च मानवः ।
सम्पूर्णे ह्याकुलीभावः प्रेतेषु तत्ततो नयेत् ॥

तथा— यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम् ।
पार्व्वणेन विधानेन देयमग्निमता सदा ॥

इति मत्स्यपुराणवाक्यानि च लिखित्वाऽत्र च मृताह एव पार्व्वणैकोद्दिष्टविकल्पे प्राप्ते व्यवस्था साग्निभ्यामौरसक्षेत्रजाभ्यां पुत्राभ्यां पार्व्वणं विधेयम् ।

जावाल-मत्स्यपुराणवाक्यपरामर्शात्त्रिरग्निसकलपुत्रैः साग्निभिस्तेतरपुत्रैरेकोद्दिष्टं कार्य्यमिति स्मृतिमहार्णवप्रकाशकार इति कल्पतरौ लिखितमन्यैस्त्वनुमोदितं तल्लघु ।

तथाहि मत्स्यपुराणं तावन्मातामहे पार्व्वणनिषेधकं तत्र

च मृताह एव पार्व्वणश्राद्धविधायकं भवत् साग्निपुत्रविषयतया न व्यवस्थाप्येत ।

नच— पार्व्वणेन विधानेन देयमिति वाक्यं पार्व्वणं विधत्ते इति निश्चितमितिकर्त्तव्यतामादायार्थसन्देहात् पार्व्वणविधानेन पार्व्वणं देयमित्यभिधानापातात् तृतीयानुपपत्तेश्च वैपरीत्यात् ।

तथाच— विरोध एव न श्रौतः कुतो विषयव्यवस्था यदा तु पार्व्वणेन विधानेन पार्व्वणेतिकर्त्तव्यतयैवाब्राह्ण नाग्नौकरणविश्वदेव-रूपेण लक्षितं श्राद्धमग्निमता देयमित्यर्थः स्यात् तदा न विरोधो न वा[1] सङ्कोचः सर्व्वत्रयाहेषु ह्यग्निमतः पार्व्वणेतिकर्त्तव्यताक-श्राद्धविधानात् ।

एवञ्चानयैवोपपत्त्या—

अमावस्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।
सपिण्डीकरणादूर्ध्वन्तस्योक्तः पार्व्वणो विधिः ॥

इत्यत्रापि पार्व्वणेतिकर्त्तव्यतयैकोद्दिष्टबोधनमेव तथैवाचा-रोऽपि दृश्यते पारिजातस्वरसोऽप्येवम् ।

पार्व्वणश्राद्धविधेरनन्तरं मनुः—

अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।
हेमन्त-ग्रीष्म-वर्षासु पाञ्चयज्ञिकमन्वहम् ॥
न पैत्रयज्ञियो होमो लौकिकेऽग्नौ विधीयते ।
न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः ॥

त्रिरब्द संवत्सरे वारत्रयमयञ्च साग्निनिरग्निसाधारणः, तेन

१ D न क्वापि च ।

संवत्सरमध्ये यत्कर्त्तव्यत्वेनोक्तं तस्य कुतश्चिन्निमित्ताद्द्रव्यासम्पत्त्यादेरकरणेऽयं कल्पः ।

पाञ्चयज्ञीयं पञ्चयज्ञान्तर्गतं श्राद्धं तत् प्रतिदिनमुदकादिनाऽपि कर्त्तव्यम् । अतएव पार्व्वणश्राद्धमभिधाय देवलेनापि—

एतेन विधिना श्राद्धं कुर्य्यात् संवत्सरं सकृत् ।
द्विस्त्रिरृतुर्वा यथाश्राद्धं मासे मासे दिने दिने ॥

इति शक्तिसम्भवासम्भवतारतम्येन बहवः कल्पाः प्रदर्शिताः ।

हेमन्तग्रीष्मवर्षासु तदनुष्ठीयमानं श्राद्धं कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षे यस्यां कस्याञ्चित्तिथौ कर्त्तव्यम् ।

अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्व्वपेत् ।
कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षे तु सर्व्वदा ॥

इति मत्स्यपुराणानुसारात् एकमूलत्वानुरोधाच्च ।

आहिताग्निना तु दर्श एव । एवञ्च—

न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः ।

इत्यनेनायं कल्पः साग्नेर्दर्शश्राद्ध एव बोध्यते न तु यस्यां कस्याञ्चित्तिथौ कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षे, तथा च दर्शं विनापि साग्नीनां तत्र तत्र श्राद्धमविरुद्धम् ।

केचित्तु—

न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः ।

इत्यौत्सर्गिकमेतत्तेनान्यत्रापि विशेषबोधकमानमाश्रित्य साग्निकर्त्तृकं श्राद्धम् ।

अन्ये तु— कृष्णपक्षे यच्छ्राद्धं विहितं तद्दर्श एव साग्निना कर्त्तव्यमित्यस्यार्थमाहुः।

हलायुधेन तु-न दर्शेन विना इति न दर्शेतिकर्त्तव्यतां विनेति व्याकृतं। अत्र च दर्शपक्षे लक्षणा स्यादित्यपरे।

कल्पतरौ तु—

आहिताग्निना तु तत्रैव दर्श एव इत्युक्ता यस्मात् श्राद्धाङ्ग-भूतपैतृयज्ञीयशब्दोपात्ताग्नौकरणहोमाङ्गभूतो दक्षिणाग्निर्न दर्श-व्यतिरेके नास्ति निमित्तान्तरात्तु यदष्टकादिश्राद्धं तद्वत् किञ्चिद्विप्र-पाण्यादिनिष्पाद्याग्नौकरणाङ्गकमेव कार्य्यमिति लिखितम्।

तस्य चायमभिप्रायः—

किञ्चिद्धि श्राद्धं सम्भवदमावस्याकं यथा हेमन्त ग्रीष्म वर्षा-स्वित्यादिसाधारणविधिविषय कृष्णपक्षे वा किञ्चिच्च श्राद्ध-ममावस्यां विलङ्घ्यैव[1] विधीयते।

तथाष्टकान्वष्टकाश्राद्धमाश्विनकृष्णपक्षश्राद्धं वा तत्र दिने दिने इति वीप्साश्रुतेरमावस्यान्यसमयमनादाय विधेरपर्य्यवसानात्ततः पूर्व्वस्मिन् श्राद्धेऽङ्गभूतहोमाधारदक्षिणाग्नेरपेक्षस्य सति सम्भवे-ऽनर्हत्वाद्विधेरमावस्यामादायैव साग्निं प्रत्युपपत्तेः।

उत्तरन्तु श्राद्धं साग्निं प्रति दक्षिणाग्नेरवश्यं बाधात् संस्कृता-ग्न्यन्तरमपेक्ष्यते न तु लौकिकमपि तत्र पैतृयज्ञीय इत्यनेन सर्व्वथा निषेधात्।

अतएव श्राद्धकल्पेऽन्वष्टकायां, वह्नौ कृत्वेति पुनर्विधाना-

---

१ A विलङ्घ्य न।

लौकिकाग्निबाधमभिधाय इहदिस्याद्दक्षिणाग्निबाधात् तदन्यसंस्कृत-वह्निमादाय साग्नेरधिकारो व्यवस्थापितः शोभते एवञ्च मौद्गि-यवपाकादावपि समयबोधके सम्भवत्यमावस्यैव साग्निं प्रत्यादर्त्तव्या ।

अबाधादपि दक्षिणाग्नेस्तद्विधेरमावस्यामादायोपपत्तेः ।

तथा पूर्णिमाश्राद्धेऽपि साग्निं प्रत्यवश्यं दक्षिणाग्निबाध एवेति संस्कृताग्न्यन्तरमाधार इति ।

लिङ्गपुराणे—

पितृपक्षे चतुर्द्दश्यां पूजयित्वा तथेश्वरम् ।
प्राप्यते पितृलोकस्तु क्रीड़ते मुदितस्तु तैः ॥

पितृपक्षे आश्विनकृष्णपक्षे—तथैवोपक्रमात् । तैः पितृभिः ॥

व्यवहारपरिगृहीतनीराजनविधिः ॥

अश्वयुक्शुक्लपक्षे(तिथौ) द्वितीयादिसप्तरात्रन्तु वड़वारूपेणैका स्वातिः सूर्य्यस्य वहति रथे सा भारेणातिक्रान्ता क्रुद्धा यान् यान् वीक्षते वाहान् तेषां तेजश्च बलं कृत्स्नं निगृह्णाति सञ्जायन्ते रोगास्तत उपसर्गैः समन्विता वाहाः ।

तस्मात् स्वात्युपतापे वाजिनि पीड़ा भवेन्महती एवञ्च सप्तरात्रं स्वातेः सन्ताप एष निर्द्दिष्टः । तत्र तत्र दिवाकरकिरणैरस्पृष्टा वाजिनो वृक्षान् शालास्तत्रोपक्षिपेत् मनोरमां वर्ज्जिताञ्च रवि-किरणैः नानाकारैः पुष्पैरलङ्कृतां धूपितां कुर्य्यात् ।

तस्यां स्वातास्तुरगाः सुपूजिता अर्च्चिता द्वितीयायां पुरुषैश्च शस्त्रहस्तैः सप्ताहं रक्षितव्यास्तु गुग्गुलुहिङ्गुवचस्याः ।

सवचापामार्गं तण्डुलं लोहं सिद्धार्थांस्तैस्तान् बध्नीयाद्वाजिनः

कण्ठे बध्वा आमलकी चेलं वस्त्रं, वेदीञ्च कल्पयित्वा [1]विधानेन पावकं जुहुयात् सायं प्रातश्च शुचिश्च पुरोहितो ब्रह्मचारी स्यात् शालिहोत्रोदितेन मन्त्रेणानेन होमयेत्।

रोहिताश्व महाभाग हव्यवाह सुरोत्तम।
धूपध्वज क्रतुद्वार स्वर्गस्य प्रथितः पथः॥
उत्तिष्ठ होमं गृह्णेमं शान्तिरस्तु हयेषु च।
स्वाहेति चात्र मन्त्रेण दापयेत् प्रथमाहुतिम्॥
ततः प्रजापतीन्द्राभ्यां[2] सोमाय वरुणाय च।
विवस्वते कुबेराय वसु-शेषाश्वशायिने॥
आदित्यानामथाश्विन्यां रुद्राणां वसुभिः सह।
विष्णोश्च विश्वदेवानां साध्यानां मरुद्भिः सह।
स्वाहाकारेण जुहुयात् द्वितीयेन हुताशनम्॥
एवमन्येषामपि च स्वाहाकारेण होमयेत्।
दुर्बलानीह रक्षांसि प्रत्युषे ब्रह्मतेजसा॥
भवन्ति तस्मात् प्रत्यूषे पाययेत् स्नापयेद्धयान्।
पुरोहितस्तु द्विःकालं तर्पयित्वा द्विजोत्तमान्॥
पुण्याहं वाचयेन्नित्यं स्वस्त्याशीर्मङ्गलैर्युतम्॥
नटनर्त्तकगन्धर्व्वाः सुत-मागध-चारणाः।
तुरङ्गानुपतिष्ठेयुः सप्ताहं शान्तिकारणात्॥
मनोज्ञान् मधुरान् शब्दान् श्रुत्वा गच्छन्ति वै ग्रहाः।
वादित्रं वाहना गावस्तस्मान्नित्यं प्रयोजयेत्॥

---

१ A ध्वनि च। २ A D प्रजापतीन्द्राय।

अतिक्रम्य च सप्ताहमष्टम्यां स्नापयेद्धयान् ।
वरुणाय बलिं दत्वा पश्चात्तोयेऽवगाहयेत् ॥
विभूषयेच्च मालाभिस्तत्रैवाधिवासयेत् ।
ततः शुक्लनवम्यान्तु निष्क्रम्य नगराद्बहिः ॥
दिशि पूर्व्वोत्तरायान्तु देशे प्राकरणे शुचौ ।
तत्र तोरणमुत्थाप्य दशरत्निसमुच्छ्रितम् ॥
विस्तारेऽष्टौ समाख्यातं ध्वजमालाविभूषितम् ।
सुरचितं चायुधीयैः प्राङ्मुखं तन्मनोरमम् ॥
शुद्धस्नातास्ततो वाहाः साम्वाहिकपुरःसराः ।
पुण्याह-ब्रह्मघोषैश्च गीतवादित्रनिस्वनैः ॥
सूत-मागध-गन्धर्व्वैः स्तूयमानाः स्वलङ्कृताः ।

गन्धर्व्वैः गायनैः ।

पुरुषैः शस्त्रहस्तैश्च तथैवाश्वोपजीविभिः ।
नेतव्या रक्ष्यमाणाश्च तत्र तोरणसन्निधौ ॥
दक्षिणस्तम्भनिकटे गत्वाग्नौ च पुरोहितः ।
दिशां बलिं ततो दत्वा स्वस्ति राज्ञे निवेदयेत् ॥
उल्काभीरूणि रक्षांसि न वै हिंसन्ति वाहनम् ।
उल्कां प्रज्वालयेत् तस्माद्दक्षिणोत्तरपार्श्वयोः ॥
अष्टौ मनुष्यानव्यङ्गानुल्काहस्तान् द्विधास्थितान् ।
तेनाग्निव्यतिरेकेण कुर्य्यादुल्काप्रदीपनम् ॥
हविःशेषेण स्वात्यश्वं[1] भोजयित्वा तु तर्पयेत् ॥

---

१ A स्वस्त्यश्वं ।

अथ राजपुरोधास्तु विष्णुस्ते पुरतः स्थितः ।
वरुणः पाशहस्तस्त्वां पृष्ठतो परिरक्षतु ॥
वैवस्वत-कुबेरौ च पार्श्वयोरभिरक्षताम् ।
चन्द्रादित्यौ पृष्ठवंशमुदरं पृथिवीधराः ॥
रक्षन्तु वक्त्रं गन्धर्व्वा बलमिन्द्रो ददातु ते ।
हविःशेषमिमं प्राश्य विजयस्व महीपतेः ॥
ततस्तु प्राशिते चास्मिन् जपेच्च भिषजां वरः ।
कर्णजाप्यमिदं चास्य दक्षिणे श्रवणे न्यसेत् ।
कुलाभिजनजात्या च लक्षणस्याङ्गने स्थितम् ।
भर्त्तारमभिरक्ष त्वं शिवस्तव भवेदिति ॥
अङ्कुदण्डमनिष्टानि क्षमस्व तुरगोत्तम ।
एवञ्च मन्त्रितो वाजी[1] ब्रह्मघोषनिनादितः ।
सिच्यमानः कुशोत्सृष्टैर्वारिभिर्मन्त्रसंस्कृतैः ।
ततस्तोरणमध्येन मन्त्रिभिः सह पार्थिवः ।
निर्गच्छेत्तु जयेत्युक्ता शेषैरनुगतो हयैः ॥
स्वातीसम्पाताध्याये एको नीराजनविधिः ।

---

अपरस्तु आश्विनाधिकारादाश्विनस्य—

शुक्लपक्षे द्वितीयायां शालां संवेश्य रक्षयेत् ।
आदित्यरश्मितो वाहान् कटैर्वस्त्रादिकैस्तथा ॥
अस्तङ्गते दिनकरे कटादीन्यपकर्षयेत् ।

---

[1] B राजा ।

प्रवातार्थं पुनर्दद्यात् यावत् सन्ध्या न जायते ॥
शालाप्रवेशविहितां रक्षां कण्ठे प्रदापयेत् ॥

रक्षा तु—

लोहकं निम्बपत्राणि गुग्गुलुं सर्षपान् घृतम् ।
चेले बद्धा वचां हिङ्गुं बध्नीयाद्वाजिनाङ्गके ॥
घर्षणं भ्रामणञ्चैव तथाचैवोपवर्त्तनम् ।
निशाशेषे प्रकर्त्तव्यं यावद्दूरं दिवाकरः ॥
एतत् प्रतिदिनं कुर्य्यात् सप्तरात्रमतन्द्रितः ।
कारयेद्ब्राह्मणांश्चैव शान्तिं स्वस्त्ययनानि च ॥
सप्तरात्रे व्यतिक्रान्ते चौरितान् स्नापितांस्तथा ।
अर्च्चितान् कुसुमैर्गन्धैस्ततो नीराजयेद्बुधः ॥
ततो वादित्रनिर्घोषैर्नेतव्या ग्रामतो बहिः ।
दिशं पूर्व्वामथोदीचीं गत्वा विप्रैरधिष्ठिताम् ॥
वह्नौ हुत्वा द्विजो मन्त्रैर्वेदोद्दिष्टैर्यथाक्रमम् ।
अर्घं शान्तिं तुरङ्गाणां ततो हृष्टः प्रदापयेत् ॥
प्रदक्षिणं ततो वह्नेः कारयित्वा द्विजोत्तमैः ।
पुनरेत्य प्रवेष्टव्यास्तोरणान्तरनिर्गताः ॥
अर्घमाल्यैश्च गन्धैश्च भोजनाद्यैस्तथैव च ।
गृहागतेषु वाहेषु अर्घं दद्यान्नराधिपः ॥
ततस्तेनैव विधिना सर्व्वानापूज्य[1] शास्त्रिभिः ।
नाना चापि नैवेद्यानि रेवन्ताय प्रदापयेत् ॥

---

१ D शरावान् पूर्व्वं ।

अर्च्चितेषु ततो वैद्यः कर्णजापमिमं वदेत् ।
कीर्त्तितं मुनिभिः पूर्व्वं वाजिशास्त्रार्थवेदिभिः ॥
पूर्व्वं देवमय त्वं हि स्मर जातिं हयोत्तम ।
सर्व्वं यत्नात्त्वया रक्ष्यं मम भर्त्तुः सुखाभव ॥
कर्णजापं भिषग्दत्वा यथास्थानं ततो हयान् ।
स्थापयेत् कृतमङ्गल्यान् हृष्टान् कल्मषवर्ज्जितान् ॥
नार्च्चयेज्जलजैः पुष्पैर्वाहानर्घविधिं प्रति ।
सौगन्धिकं विशेषेण तेषां दद्याच्च सर्व्वदा ॥

एको नीराजनविधिः ।

अपरस्तु—

स्वाती नाम रवेः पत्नी वड़वारूपिणी रथम् ।
वहन्ती चाश्विने मासि सुर्य्यरश्मिसमाश्रिता ॥
सप्ताहं पीड़येद्वाहान् ततः स्नातार्च्चिता गृहे ।
रेवन्तं पूजयित्वाथ बद्धा पोट्टालिकां गले ॥
मुरायोऽरिष्ट हिङ्गूया पञ्चरत्नाज्यसर्षपैः ।

मुरा भोटवर इति प्रसिद्धा अयो लोहं अरिष्टं हरिठ इति ख्यातं वृषं वचा ॥

धूपो निम्बाज्य-सिद्धार्थ-भूतकेशी-वरा(हो)दिभिः ॥
द्वितीयादि नवम्यन्तं शुक्लपक्षेऽर्कतेजसः ।
सप्ताहं तान् कटे तस्मात् पटैर्वावद्ध्य रक्षयेत् ॥
वातायोद्घाटनं रात्रौ कारयेत्पुष्ठनादिकम् ।
माषकुल्माषमांसाद्यैर्दद्यो दिक्षु बलिर्निशि ॥

ॐ लोकपाल-ग्रह-नक्षत्र-सुरासुर-गन्धर्व्व-राक्षस-विद्याधर-गरुड़-महोरग-गज-देवता-तिर्य्यग्भूत-पिशाच-क्रव्याद्-मनुष्येभ्यो-ऽयमाहार इममादाय समन्तादुपशाम्यन्तु सुरालयं गच्छन्तु स्वाहा।

शान्तिहोमौ ततः कुर्य्यात् स्वाप्यास्व वृषधेन्वजाः ।

अजाश्छागाः ।

इति स्वातीपाताध्यायः ॥

---

हस्तद्वादशविस्तीर्णमैशान्यां यागमण्डपम् ।

प्राक्प्रतीचीमुखं कुर्य्यात्तोरणद्वयसंयुतम् ॥

नानाध्वजपताकाभिर्घनमाल्याद्यलङ्कृतम् ।

शास्त्रविन्निपुणः स्नातः शुक्लमाल्याम्बरः शुचिः ॥

उपवासी यती वैद्यः कनकाङ्गुलिभूषितः ।

श्वेतं पीतं तथा रक्तं कृष्णञ्च हरितं क्रमात् ।

पञ्चवर्णरजः कृत्वा पातयेदेकमानसः ॥

अविच्छिन्नाः शुभा रेखा मध्याङ्गुलिमिताःसमाः ।

अवभक्तरजः श्वेतं ग्रहान् वन्यरुणं गणान् ॥

पीतं रक्षोऽसुरान् कृष्णं समस्तं विश्वरूपकम् ।

शान्त्यर्थं शान्तिकं चक्रं चतुर्वाङ्कसमायुतम् ।

चतुरस्रं चतुर्द्वारं सर्व्वतोभद्रमण्डलम् ।

चतुर्हस्तायतं वाष्टौ षोड़शारन्नि वा शुभम् ॥

गजेन्द्रवाहनं पीतं शक्रं वज्रायुधं तथा ।

प्राच्यामेतं लिखेद्वीरो विदिक्ष्वग्निं लिखेत् पुनः ॥

आरक्तमजारूढ़ञ्च शक्तिहस्तन्तु वा भिषक् ।
यमं दण्डायुधं श्यामं महिषस्थञ्च दक्षिणे ॥
प्रेतस्थं खड्गहस्तन्तु कृष्णं विदिशि नैर्ऋतम् ।
सपाशं वरुणं शुक्लं प्रतीच्यां मेघवाहनम् ॥
वायुं विदिशि धूम्राभं मृगारूढ़ाङ्कुशायुधम् ।
कुवेरं हरित्युदीच्यां विमानस्थं गदायुधम् ॥
वृषभस्थं त्रिशूलेन पाशानां श्वेतवर्णकम् ।
विदिश्येवं लिखेत्सर्व्वं लोकपालेष्वयं क्रमः ॥
त्रिभागमण्डलात्पूर्व्वं पश्चात्पुष्करमालिखेत् ।
दूष-धेनु-मस्तु-लाजान् मत्स्य-कुक्कुट-शायकान् ॥
प्रशस्तान् स्थापयेत्तत्र ॐ स्वाहान्तर्गतान् यजेत् ॥

ॐकारस्वाहाकारमध्यगतानित्यर्थः ।

लोकेशान् वस्त्रगन्धाद्यैर्नानादध्यन्नपिष्टकैः ।
सुवर्णायुधदिक्पालान् सोपानच्छत्रपीठकैः ॥

सुवर्णायुधदिक्पालान् स्वकीयासाधारणवर्णवतस्तथाविधायुधवतश्च तानित्यर्थः ।

हेमान् हेमाम्बुजैः शान्तः स्नातो-ग्रहीश्वरीश्वरान् ।
प्राङ्मुखो व्याघ्रचर्मस्थस्तिष्ठेद्राजोपवीत्यथ ॥
क्षीरतण्डुलसर्पिर्भिर्द्विजः पात्रे चरुं श्रपेत् ।
विधिवत् पावकाशायामाहुतीर्जुहुयात्ततः ॥
[1]ब्रह्माणमग्निं सोमञ्च विष्णुमिन्द्रं प्रजापतिम् ।

---

1 B मार्त्तण्डम् ।

ईशानं विश्वकर्म्माणमश्विनौ वरुणं यमम् ॥
वसून्रुद्रांस्तथादित्यान् विश्वावसु-मरुद्गणान् ।
साध्यान् स्वातीमथ मघां नक्षत्रं गरुड़ोरगान् ॥
शक्रं बृहस्पतिञ्चैव बुद्धिं मेधां सरस्वतीम् ।
सिद्ध-गुह्यक-गन्धर्व्वान् दिङ्नदी-नद-सागरान् ॥
गणेशान् दिग्गजान् शैलान् यक्षानप्सरसो मुनीन् ।
वनस्पत्योषधीस्तारा अन्तरीक्षतलस्थितान् ॥
सुरानसुरांश्च ॐकारस्वाहान्तर्गतान् यजेत् ।
दक्षिणावर्त्तस्तु गन्धोग्रहचो विश्वोदिजा(ग)करः ।
विप्रकीर्णशिखो व्यक्तवर्णो धूमाकुलः स्थितः ॥
चिरोत्थायी च दुर्गन्धः सप्ताङ्गराज्यनाशनः ।
क्षौद्रदाही च धनदो गजहा शक्रचापवत् ॥
प्रदक्षिणावर्त्तशिखो विधूमः काञ्चनप्रभः ।
क्षीर-लाजाम्बु-माल्य-हविर्गन्धिर्जयावहः ॥

अग्निपरीक्षा ।

---

## अश्वाभिषेकः ।

कांस्यं ताम्रं तथा शङ्खं गन्धमाल्यार्घधारकम् ।
प्रत्येकं तोरणद्वारे पूर्णकुम्भान् न्यवेक्षुभान् ॥
सप्रसूनगन्धमाल्यवाद्यछत्रविभूषितान् ।
तुरगान् चौरितान् स्नातान् हयान् राजपुरःसरान् ॥
यागागारं नयेत् सर्व्वानभिषिकोक्तमाचरेत् ।
प्रदक्षिणत्रयं कृत्वा त्यजेद्दीपोल्कया शुभम् ॥

करोत्येवं हि यस्तस्मै त्रिवर्गफलमिच्छति।
लक्ष्मीं विभूषणञ्चायुर्लभते स सुखं यशः॥
नृपतेस्तोरणे भग्ने पतिते मन्त्रिणो वधः।
सक्व्यादे कुमारस्य सर्पे च पुरोधसः॥
भद्रमश्वकुलोद्भूतं वयःस्थं सुप्रमाणकम्।
सर्व्वलक्षणसम्पन्नं वर्णकमभिषेचयेत्॥

वर्णकमविचित्रवर्णम्।

मङ्गलालङ्कृतं नीला नद्यां कर्म्म समाचरेत्।
दध्यक्षश्वेतमाल्याद्यैर्मन्त्रेण वरुणं जपेत्॥
ॐ पवित्रं मङ्गलं श्वेतं पाशहस्तं जलासनम्।

जीवनं प्रतीच्यां समासीनं सर्व्वसलानाममृतसम्भवं स्वाहा।

इन्द्रप्रस्थाव'वल्मीक राजवेश्माङ्गनान् मृदम्।
नदी भद्रन्त-गोश्टङ्गादादायालेपयेत् क्रमात्॥

इन्द्रेति इन्द्रस्थानम्।

हरेर्वक्त्रं शिरः कर्णौ हृदयं शिश्नमेव च॥
प्राक्पश्चाच्छोत्रपुच्छादीन् वैद्यः शुचिविभूषणः।
स्नापयेच्छीधुसिक्ताङ्गं दधि क्षीर घृताम्बुभिः॥
वचा-विल्वाऽमृता-देवी सहा चैवापराजिता।

देवी घोरमहरिति प्रसिद्धा सहा घितकुमारीति प्रसिद्धा।

पिष्टोन्माद्य(?) ततः स्नातं जलोत्थमनुमार्ज्जयेत्।
माषतैर्वन्धनैः पिष्टैः क्षीरमृत्समधुकजैः॥

---

१ D कुल्माष।

शैल-पियङ्गु-सिद्धार्थं शोभापामार्गतण्डुलैः।
ततस्तं स्नापयेदश्वं प्राङ्मुखं कुशसंस्तरे स्थितम्॥
सौवर्णैं राजतैस्ताम्रैः पल्लवैर्वा मृण्मयैर्घटैः।
पूरितं साहतचौमं श्वेतचन्दनचर्चितम्॥
रक्षान्वितं महोपाश्वं नयेत् स्रग्दामभूषितम्।

महोपाश्वं सानुचराश्वम्।

राजा गत्वोत्तरे यागगृहं कृत्वा यथाविधि॥
इतः प्रभृति वाहानां हयराजस्त्वमग्रणीः।
अभिषेकं प्रतीच्छस्वेत्युक्त्वा तोरणमध्यगम्॥
प्राङ्मुखं व्याघ्रचर्मस्थं पञ्चरत्नाक्षतैर्युतान्।
वचादि-स्त्री-शिला-ताल-भद्र-दन्ती-निशा-मदान्[1]॥
त्रायन्तीं सोमराजीञ्च समङ्गामञ्जनं वरीम्।
पिष्ट्वा कुम्भाम्भसि प्राश्य शाखामौदुम्बरीं स्पृशेत्॥

वचादि—

वचा विश्वामृता देवी सहा चैवापराजिता।

इति पूर्व्वकथिता, स्त्री हरिद्रा, शिला मनःशिला तालो हरितालः, भद्रं मुस्तकं दन्ती दान्तीति प्रसिद्धा निशा दारुहरिद्रा, मदः कस्तुरी त्रायन्ती तिला सोमराजी जीवाष्डजिरिति प्रसिद्धा समङ्गा मञ्जिष्ठा अञ्जनः शोभाञ्जनः, वरी शतावरी।

नृपोऽथ पूजयेत्पद्मैः काञ्चनैर्भिषजा सह॥
मन्त्रपूतं चरुं भोज्यं शोचयित्वानुलेपयेत्।

---

१ A— मयान्।

गन्धैस्ततोऽर्च्चयेत् पुष्पैः स्थलजैर्जलजैर्विना ॥
ब्रह्माण्डे च नमस्कृत्य मुनये कश्यपाय च ।
हविःशेषं बलिं गृह्णन् कुरुष्व विजयं प्रभो ॥
वैद्योपनीतं पिण्डं चेद्‌दतिजिघ्रति वा हयः ।
जयक्षेमसुभिक्षाय दक्षिणाङ्घ्रिं च वर्जयेत् ॥
ब्रह्मविन्ते गुरुर्बुद्ध्यां केशेऽर्क्कौ वरुणो[1] हृदि ।
आवर्त्ते दिक् दृशीन्दर्क्कौ कर्णयोरश्विनौ वचः ॥
जिह्वायाञ्च जवे वायुर्बले विष्णू रदे यमः ।
पार्श्वे रुद्राः स्वधा वेदे वैनतेयः पराक्रमे ॥
नागपृष्ठन्तु पृष्ठे स्यात् विश्वेदेवाश्च मर्म्मसु ।
खुराग्रे पन्नगा धर्म्मो ग्रीवायामनलो मुखे ।
कुक्षावध्वा रतिः श्रोण्यां मारुतो जानुसन्धिषु ॥
पक्षाञ्च क्रेषिते चोर्व्वोरोषध्युरसि वासुकिः ।
विन्यस्याङ्गे सुरान् कर्णे जपेद्दक्षिणतो भिषक् ॥
स्मर गन्धर्व्वराज त्वं शृणुष्व वचनं मम ।
गन्धर्व्वकुलजस्त्वञ्च माभूः कुलविदूषकः ॥
द्विजानां सत्यवाक्यानां सोमस्य भास्करस्य च ।
रुद्रस्य वरुणस्यैव पवनस्य बलेन वा ॥
हुताशनस्य दीप्त्या च स्मर जातिं तुरङ्गम ।
स्मर राजेन्द्रपुत्र त्वं सत्यवाक्यमनुस्मरन् ॥
स्मर त्वं वारुणीं कन्यां स्मर त्वं कौस्तुभं मणिम् ।

---

1 A वरुना ।

क्षीरोदसागरे चैव मथ्यमाने सुरासुरैः ॥
तत्र जातोऽसि गन्धर्व्वं नाम्ना उच्चैःश्रवा हयः।
तत्र देवकुले जातः स्वकुलं[1] प्रतिपालय ॥
कुले जातस्त्वमस्माकं मित्रं मे भव शाश्वतम्।
यस्य मित्रत्वमेतत्त्व सर्व्वं सर्व्वेण सर्व्वथा ॥
यथाहं सर्व्वभूतानां तथा मां प्रतिपालय।
अव्ययस्याव्ययस्यापि श्रावहे सिद्धिमावह ॥
मण्डलं दर्शयित्वा तु पुनर्मन्त्रं जपेच्छ्रुतौ।
युष्मत्पृष्ठं समारुह्य हता दैत्याः सुरैः पुरा।
अधुना त्वां समारुह्य रिपुं जयतु मत्प्रभुः ॥

कर्णजापमन्त्रः।

---

राक्षसं मृण्मयं न्यस्य मुदीच्यां दक्षिणामुखम्।
रक्तपुष्पांशुकं विप्रो हृदि शस्त्रेण ताड़येत् ॥
सम्यूज्यारुह्य चाश्वेन्द्रं निर्गच्छेत्तोरणान्तरे।
पार्थिवो मन्त्रसंपूतैः सिच्यमानः कुशोदकैः ॥
जयेत्याशिषमादाय वैद्यामात्यपुरोधसाम्।
स तथैव गृहं गत्वा ह्यानभ्यर्च्चयेत् सुरान्।
भिषक्पुरस्कृतान् कृष्णान् यथास्थानं समादिशेत् ॥

अभिषेकविधिः।

---

[1] A सुकुलम्

## अथ वरुणपूजा ।

ॐ वरुण इहागच्छ ॐ वरुणाय नमः ।

एहि देव जलाध्यक्ष यादोगणमहेश्वर ।
नागदैत्योरगगणैः सततं सेविताच्युत ! ॥
नमोऽस्तु ते वारिचरश्रेष्ठ पाशधर यक्ष ।
महीपालं जगत्पाशं रक्षस्व च शतं समाः ॥
ये श्रेष्ठा भुजगा दिव्या भुवि श्रेष्ठा जलाश(ल)याः ।
भगवद्भ्यो नमस्तेभ्यो जले रक्षन्तु वाहनम् ॥
या नद्यः सागरं यान्ति पूर्व्वगाः पश्चिमाश्च याः ।
याश्चापि दक्षिणां यान्ति ये च सर्व्वे जलाशयाः ।
तानहं प्रणतः सर्व्वान् प्रणमामि कृताञ्जलिः ॥

वरुणपूजामन्त्रः—

यां गतिं ब्रह्महा गच्छेत् पितृहा मातृहा तथा ।
व्रज त्वं तां गतिं क्षिप्रं तच्च पापं भवेत्तव ॥
विकृतिं यदि गच्छेस्त्वं युद्धेऽध्वनि तुरङ्गम ।
रिपुं विजित्य समरे सह भर्त्रा सुखी भव ॥

कर्णजापमन्त्रः—

नमो देवाधिदेवाय तुरङ्गवनचारिणे ।
सूर्य्यपुत्राय देवाय तुरङ्गाणां हिताय च ॥
तुरङ्गपरिषद्यस्य मृगयोपरि धावति ।
सामसप्ताधिपं रक्ष शरणं त्वां व्रजाम्यहम् ॥

रेवन्तपूजामन्त्रः ।

ब्रह्मपुराणे—

अश्वयुक्शुक्लपक्षे तु स्वातियोगे सुशोभने।
पूर्व्वमुच्चैःश्रवा नाम प्रथमं सूर्य्यमावहत्॥
तस्मात् साश्वैर्नरैस्तत्र पूज्योऽसौ श्रद्धया सदा।
पूजनीयाश्च तुरगा नवमीं यावदेव हि॥
शान्तिस्वस्त्ययने कार्य्ये तदा तेषां दिने दिने।
धान्यं भल्लातकं कुष्ठं वचां सिद्धार्थकं तथा॥
पञ्चरङ्गेण सूत्रेण कण्ठे तेषान्तु बन्धयेत्।
वायव्यैर्वारुणैः सौरैः शाक्रैर्मन्त्रैः सविस्तरैः॥
वैश्वदेवैस्तथाग्नेयैर्होमः कार्य्यो दिने दिने।
तुरगा रक्षणीयाश्च पुरुषैः शस्त्रपाणिभिः॥
न च ताड्याः कचित्तत्र न च वाह्याः कथञ्चन।
ज्येष्ठायोगे पुरा तत्र गजाश्चाष्टौ महाबलाः॥
पृथिवीमवहन् पूर्व्वं सशैलवनकाननाम्।
कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः॥
सुप्रतीकोऽञ्जनो नीलः तस्मात्तान् तत्र पूजयेत्॥
शाक्रादृक्षात् समारभ्य नवम्यन्तञ्च पूर्व्ववत्।

ज्योतिःशास्त्रे पूजामन्त्रः—

पान्तु वो वसवो रुद्रा आदित्याः समरुद्गणाः।
भर्त्तारं रक्ष नागेन्द्र समयः प्रतिपाल्यताम्॥
अवाप्नो हि जयो युद्धे समये स्वस्ति नो व्रज।
श्रीस्ते सोमाद्बलं कृष्णात् तेजः सूर्य्याद् जवोऽनिलात्॥

खेच्चं मेरोर्जयो रुद्राद्यशो देवात् पुरन्दरात् ।
युद्धे रचन्तु नागास्त्वां दिशश्च सह दैवतैः ।
अश्विनौ सह गन्धर्व्वैः पान्तु त्वां सर्व्वतः सदा ॥

इति गजाष्टकपूजा ।

ब्रह्मपुराणे—

शुक्लाश्वयुक्चतुर्थ्यान्तु जहौ देहं जले सती ।
तस्मात् सा तत्र सम्पूज्या सर्व्वसौभाग्यवर्द्धिनी ॥
अर्घ्यैः पुष्पैश्च दीपैश्च धूपैर्माल्यैश्च कङ्कणैः ।

कङ्कणं सिन्दूरम् ।

कुङ्कुमाञ्जनवस्त्रैश्च नितम्बिन्युपयोगिभिः ।
लवणामलकाभ्याञ्च गुडार्द्रकफलैस्तथा ॥
तामुद्दिश्य तु नार्य्यस्तु पूज्याः सुजीवभर्त्तृकाः ।
भगिन्यो मातरश्चैव तथा नार्य्यः पतिव्रताः ॥

भविष्यपुराणे—

तथा चाश्वयुजे मासि पञ्चम्यां कुरुनन्दन ।
कृत्वा कुशमयान् नागानिन्द्राण्या सह पूजयेत् ॥
घृतोदकाभ्यां पयसा स्नापयित्वा विशाम्पते ।
गोधूमैः पयसा स्विन्नै र्भक्ष्यैश्च विविधैस्तथा ॥
यस्त्वस्यां विधिवन्नागान् शुचिर्भक्त्या समन्वितः ।
पूजयेत् कुरुशार्दूल तस्य शेषादयो नृप ॥
नागाः प्रीता भवन्तीह शान्तिमाप्नोति वै प्रभो

इति शान्तिपञ्चमीव्रतम् ॥

## अथ मूर्त्तिपूजाव्रतम्।

भविष्यपुराणे—

मासि चाश्वयुजे वीर शुक्लपक्षे व्रतं शृणु।
कृत्वैकभक्तं पञ्चम्यां षष्ठ्यां नक्तं समाचरेत्॥
अयाचितन्तु सप्तम्यामुपवासमतःपरम्।
उपवासपरोऽष्टम्यां पूजयेच्चण्डिकां बुधः॥
पद्मपत्त्रेक्षणां सौम्यां पूर्णचन्द्रनिभाननाम्।
चतुर्भुजां शूलधरां खड्ग-घण्टाग्रहस्तिनीम्॥
दन्तेषु मौक्तिकं न्यस्य विद्रुमं चोष्ठयोर्द्वयोः।

खड्ग-घण्टाग्रहस्तिनीं खड्ग-घण्टाग्रसमुदग्रहस्ताम्॥

कृत्वाक्षिणी वज्रमये दीर्घापाङ्गे नराधिप।
खड्गप्रहरणादीनि नानावर्णानि विन्यसेत्॥

वज्रमये हीरकप्रकृतिके।

कार्पासिकैरण्डजैश्च वासोभिः पूजयेदुमाम्।
विविधैर्भक्ष्यभोज्यैश्च फलैर्नानाविधैस्तथा॥
भोजयेद्ब्राह्मणान् भक्त्या तथा भागवतान् नृप।
भोजयित्वा तु तान् भक्त्या दुर्गायाः पुरतो न्यसेत्॥

अण्डजैर्वासोभिः पट्टवस्त्रैः। भागवतान् भगवतीभक्तान्।

एवं यः पूजयेदर्च्चां दुर्गायाः श्रद्धयान्वितः।
स नरः सर्व्वयज्ञानां फलं प्राप्य दिवं व्रजेत्॥
पुनरेत्य महाभागो राजराजाधिपो भवेत्।
दाता सुरूपः सुभगः पुत्रवान् धनवान् भवेत्॥

ब्रह्मपुराणे—

तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।
प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह ॥
अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः ।
उपोषितै-र्वस्त्र-धूप-माल्य-रत्नानुलेपनैः ॥
दीपैरन्यैस्तथा भक्ष्यैः फलैर्मूलैश्च धान्यकैः ।
आमिषैर्विविधैः शाकैः होमैः ब्राह्मणतर्पणैः ॥
विल्वपत्रैः श्रीफलैश्च चन्दनेन घृतेन च ।
पशुभिः पानकैर्हृद्यै रात्रिजागरणेन च ॥
दुर्गागृहे तु शस्त्राणि पूजितव्यानि पण्डितैः ।
वाद्यभाण्डानि चिह्नानि कवचान्यायुधानि च ॥
रात्रौ च शिल्पिभिस्तानि स्वानि पूज्यानि सर्व्वदा ।
नवम्यान्तु कृतस्नानैः सर्व्वैः पूज्याश्च ब्राह्मणाः ॥
भुक्त्वा तु शान्तिः कर्त्तव्या योगे गोधूलिनामनि ।
यदुक्तं शालिहोत्रे च ज्योतिःशास्त्रे च यन्मतम् ।
अथर्व्ववेदे यत् प्रोक्तं तत्र तच्च समाचरेत् ॥

शालिहोत्रे अश्वशिक्षाशास्त्रविशेषे ।

चित्रा सकुकुटं छागं कृत्रिमे दारुवेश्मनि ।
श्रवणे चाथ सन्ध्यायां निर्दहेत्तु गृहं ततः ॥
निर्दह्यमानौ तौ तत्र निर्गच्छन्तौ विभावयेत् ।
दिशं शान्तां प्रदीप्तां वा दग्धां वा तत्फलप्रदाम् ॥
द्रष्टव्यास्तास्तशस्त्रास्च राज्ञां नीराजने जनाः ॥

अथ देवीपुराणे—

आश्विने मासि मेघान्ते महिषासुरनिवर्हिणीम्।
देवीं तां पूजयित्वा तु अर्द्धरात्रेऽष्टमीषु च॥
घातयन्ति पशून् भक्त्या ते भवन्ति महाबलाः।
बलिञ्च ये प्रयच्छन्ति सर्व्वभूतविनाशनम्॥
तेषान्तु तुष्यते देवी यावत् कल्पन्तु शाङ्करम्।
क्रीड़न्ति विविधैर्भोगै र्देवलोके सुदुर्लभे॥

तथा—

कन्यासंस्थे रवौ वत्स शुक्लाष्टम्यां प्रपूजयेत्।
सोपवासो निशार्द्धे तु महाविभवविस्तरैः॥
पूजां समारभेद्देव्या रक्षर्क्षे वारिभेऽपि वा।
पशोर्घातः प्रकर्त्तव्यो [1]गवलाजवधस्तथा॥
बलिक्षेपस्तु रक्षोभ्यः कार्य्यः सर्व्वाधिशान्तये।
रक्षर्क्षं मूलनक्षत्रं वारिभं पूर्व्वाषाढ़ानक्षत्रं गवलो माहिषः॥

आगमान्तरे—

आश्विनस्य सिताष्टम्यां महिषासुरनाशिनी।
प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह॥
अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः।
उपोषितै-र्वस्त्र-माल्यै-र्धूप-गन्धानुलेपनैः॥
दीपैर्बहुविधैर्भक्ष्यैः फलैर्मूलैश्च धान्यकैः।
आमिषै र्विविधैश्चैव बह्नि-ब्राह्मणतर्पणैः॥

---

१ A गवलाजस्य वाप्यथ।

विल्वपत्रैश्चन्दनैश्च कुङ्कुमेन घृतेन च।
पशुभिः पानकैर्हृद्यै रात्रिजागरणेन च॥
समांसरुधिरैर्दत्तै र्देवी तुष्यति वै भृशम्।
दुर्गागृहे तु शस्त्राणि पूजितव्यानि मानवैः॥
वाद्यभाण्डानि चिह्नानि कवचान्यायुधानि च।
रात्रौ च शिल्पिभिस्तानि स्वानि पूज्यानि यत्नतः॥

ॐ दुर्गे दुर्गे रक्षणि स्वाहा।

जयन्ती मङ्गला काली भद्रकाली कपालिनी।
दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते॥
अमृतोद्भवं श्रीवृक्षं महादेवप्रियं सदा।
विल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि॥
चन्दनेन समालब्धे कुङ्कुमेन विलेपिते।
विल्वपत्रकृतापीडे दुर्गेऽहं शरणं गतः॥

एभिर्मन्त्रै द्रोणपुष्प-विल्वपत्र-जात्यादिभिः पूजयेत्।

कर्पूरागुरुचन्दनै विलिप्तां गुग्गुलु चन्दनादिभिर्धूपं दत्वा वस्त्रेणाच्छाद्य नैवेद्यं दद्यात्।

पश्चान्महिषमजं मेषं वा लक्षणान्वितम्—

ॐ कालि कालि वज्रेश्वरि लोहदण्डाय नम इति जप्त्वा विजयकामः खड्गेन घातयेत्।

ततश्च तद्रक्तमांसाभ्यां महाकौशिकमन्त्राभिमन्त्रिताभ्यां नैऋत्यां दिशि—ॐ पूतनायै नमः, वायव्यां ॐ पापराक्षस्यै नमः, ऐशान्यां ॐ चरक्यै नमः, आग्नेय्यां ॐ विदार्य्यै नमः, एभिर्मन्त्रैर्बलिं दद्यात्।

महाकौशिकमन्त्रस्तु—

ॐ ह्रौं ॐ स्फुरु ॐ कुल्व २ ॐ धुन २ ॐ गुलू २ ॐ तुलु २ ॐ धुनु २ मारय २ विभ्रामय २ कम्पय २ कम्पातय २ पुर २ पूरय ॐ ट्रूँ ॐ ॐ भं रं ह्रूं फट् फट् मर्द्दय २ ॐ ह्रूँ ॐ ह्रौं। अनेन अजं पिष्टमयं खड्गेन घातयित्वा सप्रणवेन स्वनाम्ना स्कन्द-विशाखयोर्द्दत्वा स्नातव्यम् ॥

ॐ असिर्विशसनः खड्गस्तीक्ष्णधारो[1] दुरासदः ।
श्रीगर्भो विजयश्चैव धर्म्माधारस्तथैव च[2] ॥
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ।
नक्षत्रं कृत्तिका तुभ्यं गुरुर्द्देवो महेश्वरः ॥
हिरण्यञ्च शरीरन्ते दैवतन्तु[3] जनार्द्दनः ।
पिता पितामहो देवस्त्वं मां पालय सर्व्वदा ॥
इयं येन धृता क्षोणी हतश्च महिषासुरः ।
तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः ॥

इति खड्गपूजा ।

सर्व्वायुधानां प्रथमं निर्म्मितासि पिणाकिना ।
शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिग्रहं शुभम् ॥
चण्डिकायां प्रदत्तासि सर्व्वाशुभनिवर्हणी ।
तया विस्तारिता चासि देवानां प्रतिपादिता ॥

---

१ D विकर्म्मा च । २ A धर्म्मपालस्तथैव च ।
३ B धाता देवो ।

सर्व्वसत्वाङ्गभूताऽसि सर्व्वदुष्टनिवर्हणी।
छुरिके रक्ष मां नित्यं शान्तिं यच्छ[1] नमोऽस्तु ते॥

इति छुरिकापूजा।

रक्षाङ्गानि गजाश्चैव रक्ष वाजि धनानि च।
मम देहं सदा रक्ष कट्टारक नमोऽस्तु ते॥

इति कट्टारकपूजा।

सर्व्वायुधमहामात्र सर्व्वदेवारिसूदन।
चाप मां समरे रक्ष साकं शरवरैरिह॥
धृतं कृष्णेन रक्षार्थं संहारार्थं हरेण च।
त्रयीमूर्त्तिगतं देवं धनुरस्त्र नमाम्यहम्॥

इति धनुःपूजा।

दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पनः।
भव भूमिपसैन्यानां तथा विजयवर्द्धनः॥
यथा जीमूतघोषेण हृष्यन्ति वरवारणाः।
तथास्तु तव घोषेण हर्षोऽस्माकं जयावहः॥

इति दुन्दुभिपूजा।

ऊतमुम्वसवो रुद्रा वायुः सोमो महर्षयः।
नाग-किन्नर-गन्धर्व्व-यक्ष-भूत महोरगाः॥
प्रमथास्तु सहादित्यैर्भूतेशा मातृभिः सह।
शक्रसेनापतिः स्कन्दो वरुणश्च स्थितस्त्वयि॥

---

१ A शान्तिं देहि।

कालनेमिवधे यद्वत् तथा त्रिपुरघातने ।
हिरण्यकशिपोर्युद्धे युद्धे देवासुरे तथा ॥
शोभितासि तथैवाद्य शोभस्व समयं स्मर[1] ।
नीलां श्वेतामिमां दृष्ट्वा नश्यन्त्वाशु ममारयः ॥

इति पताकापूजा ।

शर्म्मप्रदस्त्वं समरे वर्म्मन् सैन्ये यशोऽद्य मे ।
रक्ष मां रक्षणीयोऽहं तापनेय नमोऽस्तु ते ॥

इति वर्म्मपूजा ।

प्राणान् पातय शत्रोस्त्वमनया लोकमायया ।
गृहाण जीवितं तेषां ममाशास्त्वञ्च वल्गताम् ॥

इति कुन्तपूजा ।

शशाङ्ककरसङ्काश शङ्खडिण्डीरपाण्डर ।
प्रोत्सारय त्वं दुरितं चामरादिविभूषितः ॥
यथाम्बुदश्छादयते शिवायेनां वसुन्धराम् ।
तथा मां छादय छत्र युद्धेऽध्वानं शतं सदा ॥

इति छत्रपूजा ।

पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानाञ्च मङ्गलम् ।
विष्णुना त्वं धृतो नित्यमतः शान्तिं प्रयच्छ मे ॥

इति शङ्खपूजा ।

विजयो जयदो जेता रिपुघाती प्रियङ्करः ।
दुःसहो धर्म्मदः शान्तः सर्व्वारिष्टविनाशनः ॥

---

१ क्वचित्— शोभस्वाद्यांच संस्मर ।

[1]इत्यष्टौ तव नामानि यस्मात् सिंहपराक्रमे।
तेन सिंहासनेति त्वं नाम्ना देवेषु गीयसे॥
नमस्ते सर्व्वतोभद्र भद्रो भव महीपतेः।
त्रैलोक्यजयसर्व्वस्व सिंहासन नमोऽस्तु ते॥

इति सिंहासनपूजा।

इति महाष्टमी।

भविष्यपुराणे— सुमन्तुरुवाच—

नवम्यां श्रीसमायुक्ता देवैः सर्व्वैः प्रपूजिता।
जघान महिषं दुष्टमवध्यं देवतादिभिः॥
लब्धाभिषेका वरदा शुक्ले चाश्वयुजस्य तु।
तस्मात् सा तत्र सम्पूज्या नवम्याञ्चण्डिका बुधैः॥
महत्त्वं हि यतः प्राप्ता तत्र देवी सरस्वती।
अतोऽर्थं महती प्रोक्ता नवमीयं सदा बुधैः॥
पूजयित्वा महादेवीं नवम्यान्तत्र चण्डिकाम्।
महत्त्वं प्राप्तवान् वीरो ब्रह्मा विष्णुस्तथामराः॥
तस्मादियं महापुण्या नवमी पापनाशिनी।
उपोष्या तु प्रयत्नेन सततं सर्व्वपार्थिवैः॥
मूलोत्तरेण ऋक्षेण संयुक्ता विधिवन्नृप।
विशेषतो ध्यानजपैर्बलिरुद्रैः सयौवतैः॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च सेवकैः।
अत्र दानानि देयानि सोपवासैर्नरैर्नृप॥

---

१ मूले— इत्यष्टौ सन्निधौ प्रोक्तास्तव सिंहा महाबलाः।

गोसुवर्णादि राजेन्द्र वस्त्राणि विविधानि च।
स्वमांसरुधिरैर्दत्तै र्देवी तुष्यति वै भृशम्॥
महिषी-छाग-मेषाणां रुधिरेण तथा नृप।
स्वमेकमेकं वरदा तृप्ता भवति चण्डिका॥
सहस्रं तृप्तिमायाति स्वदेहरुधिरेण तु।
तर्पिता विधिवद्दुर्गा भिला बाहुरुजङ्गके।
नारेण शिरसा वीर पूजिता विधिवन्नृप।
तृप्ता भवेन्नृशं दुर्गा वर्षाणां लक्षमेव च॥
एवं नानाम्लेच्छगणैः पूज्यते सर्व्वदस्युभिः।
अङ्ग-वङ्ग-कलिङ्गैश्च किन्नरैर्व्वर्बरैः शकैः॥
मासि चाश्वयुजे शुक्ला नवमी या नराधिप।
तस्यां यत् क्रियते वीर नरैः स्नानादिकं प्रभो।
तत्सर्व्वमक्षयं तेषां तद्दै सिद्धिकरन्तथा॥

देवीपुराणे— ब्रह्मोवाच—

हते घोरे महावीरे सुरासुरभयङ्करे।
देव्या उपासका देवाः प्रभृता राक्षसास्तथा॥
आगता घातितन्दृष्ट्वा महिषं तं सुदुर्ज्जयम्।
ब्रह्म-विष्णु-सुरेशाना इन्द्र-चन्द्र-यमानलाः॥
आदित्या वसवो रुद्रा यक्षा नागाः सगुह्यकाः।
समेत्य सर्व्वे देवास्ते देवीं भक्त्या प्रतुष्टुवुः॥
वरश्च सर्व्वलोकानां प्रददौ भयनाशिनी॥
बलिन्ददुश्च भूतानां महिषाजामिषेण च।

पवेयुः शङ्खभेर्य्यश्च शतशोऽथ सहस्रशः ॥
कृत्वा दुन्दुभिनादांश्च पट्टशब्दान् समर्द्दनान्।
पताका ध्वजच्छत्रादि-घण्टा-चामरशोभिताः ॥
तद्दिने कारयाञ्चक्रे देवीभक्तः सुरोत्तमः।
एतस्मिंश्च दिने वत्स भूतप्रेतसमाकुले ॥
कृता देवेश देवैश्च महापूजा च शाश्वती।
आश्विने मासि मेषान्ते महिषारिनिवर्हणीम्।
देवीं सम्पूजयित्वा तु अर्द्धरात्रेऽष्टमीषु च।
घातयित्वा पशुं भक्त्या ते भवन्ति महाबलाः ॥
बलिञ्च ये प्रयच्छन्ति सर्व्वभूतविनाशकम्।
तेषान्तु तुष्यते देवी यावत् कल्पन्तु शाङ्करम् ॥
क्रीडन्ते विविधैर्भोगै र्देवलोके सुदुर्लभे।
नाधयो व्याधयस्तेषां न च शत्रुभयं भवेत् ॥
न च देवा ग्रहा दैत्या नासुरा न च पन्नगाः।
बाधयन्ति सुराध्यक्ष देवीपादौ समाश्रितान् ॥
यावद्भूरथवाकाशं जलं वह्नि-शशि-ग्रहाः।
तावच्च चण्डिकापूजा भविष्यति सदा भुवि ॥
प्रावृट्काले विशेषेण आश्विने ह्यष्टमीषु च।
महाशब्दो नवम्यान्तु लोके ख्यातिं गमिष्यति ॥
एतत्ते देवराजेन्द्र स्वर्गवासफलप्रदम्।
परापरविभागे तु क्रियायोगेन कीर्त्तितम् ॥
भागवतपुराणे देव्यवतारे नवमीक्रियासूचनमष्ट-
चत्वारिंशोऽध्यायः।

तत्रैव ब्रह्मोवाच—

एवं महाबलं शक्र पुरा देवारिकण्टकम् ।
हत्वा देवौ वरं दद्युर्विष्णवादीनां प्रतोषिता ॥

दद्युर्ददावित्यर्थः ।

इन्द्र उवाच—

आश्विनस्य सिते पक्षे नवम्यां प्रतिवत्सरम् ।
श्रोतुमिच्छाम्यहं तात उपवासव्रतादिकम् ॥

ब्रह्मोवाच—

शृणु शक्र प्रवक्ष्यामि यथा त्वं परिपृच्छसि ।
महासिद्धिप्रदं धन्यं सर्व्वशत्रुनिवर्हणम् ॥
सर्व्वलोकोपकारार्थं विशेषादतिवृष्टिषु[1] ।
कर्त्तव्यं ब्राह्मणाद्यैस्तु क्षत्रियैर्लोकपालने ॥
गोधनार्थं तथा वैश्यैः शूद्रैः पुत्रसुखार्थिभिः ।
सौभाग्यार्थं तथा स्त्रीभिरन्यैश्च धनकाङ्क्षिभिः ॥
महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् ।
कर्त्तव्यं देवराजेन्द्र देवीभक्तिसमन्वितैः ॥
कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम् ।
अयाची[2]त्यथवैकाशी नक्ताशी त्वथ गोप्रदः ॥
प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः ।
जप-होम समायुक्तः कन्यकां भोजयेत् सदा ॥

---

१ कुत्री अतिदृष्टिषु । २ A D दुग्धपकाशी ।

अष्टम्यां नवगेहानि दारुजानि शुभानि च।
एकं वा वित्तभावेन कारयेत् सुरसत्तम॥
तस्मिन् देवी प्रकर्त्तव्या हैमी वा राजती तथा।
मृण्मयी लक्षणोपेता खड्गे शूले च पूजयेत्॥
सर्व्वोपहारसम्पन्न वस्त्र रत्नफलादिभिः।
कारयेद्रथदोलादीन् पूजाञ्च बलिदैविकीम्[1]॥
पुष्पैश्च द्रोण बिल्वाम्र जाती पुन्नाग-चम्पकैः।
विचित्रां रचयेत् पूजामष्टम्याञ्च उपासयेत्॥

उपासयेत् आराधयेत्।

दुर्गारतो[2] जपेन्मन्त्रमेकचित्तः समाहितः।
तदर्द्धयामिनीशेषे विजयार्थं नृपोत्तम॥
पञ्चाब्दं लक्षणोपेतं [3]महिषञ्च सुपूजितम्।
विधिवत् कालि कालीति जप्त्वा खड्गेन घातयेत्॥
तदुत्थं रुधिरं मांसं गृहीत्वा पूतनादिषु।
नैर्ऋतेभ्यः प्रदातव्यं महाकौशिकमन्त्रितम्॥
तस्याग्रतस्तथा स्नायाच्छत्रं कृत्वा च पिष्टजम्।
खड्गेन घातयित्वा तु दद्यात् स्कन्द-विशाखयोः॥
देवीन्तु स्नापयेत् प्राज्ञः क्षीर-सर्पिर्जलादिभिः।
कुङ्कुमागुरु-कर्पूर चन्दनैश्च प्रधूपयेत्॥
हेमादि पुष्परत्नानि वासांसि सुहितानि च।

---

१ A—दैवकाम्। २ D—दुर्गापरः।
३ A B गन्धपुष्पसुगन्धितम्।

नैवेद्यं सुप्रभूतञ्च देयं देव्याः सुभावितैः ॥
देवीभक्तांश्च पूज्येत कन्यकाः प्रमदादि च ।
द्विजादीनथ पाखण्डानन्नदानेन तोषयेत् ॥
नन्दाभक्ता नरा ये तु महाव्रतधराश्च ये ।
पूजयेत्तान्विशेषेण यस्मात्तद्रूपमम्बिका ॥
मातराणाञ्च देवीनां पूजा कार्य्या तदा निशि ।
ध्वजपत्र-पताकादि उड्डयेच्चण्डिका'गृहे ॥
रथयात्रा बलिक्षेपं पटुवाद्यरवाकुलम् ।
कारयेत्तुष्यते येन देवी पशुविघातनैः ॥
अश्वमेधमवाप्नोति भक्तितः सुरसत्तम ।
महानवम्यां पूजेयं सर्व्वकामप्रदायिका ॥
सर्व्वेषु वत्स वर्णेषु तव भक्त्या प्रकीर्त्तिता ।
कृत्वाप्नोति यशो राज्यं पुत्रायुर्धनसम्पदम् ॥

शुक्लामारभ्य नन्दिकामित्यनेन षष्ठीतः प्रभृति नवमीपर्य्यन्तं व्रतमित्युक्तं तेन पञ्चम्यामेकभक्तं ततः प्रातःसंकल्पः, षष्ठी सप्तम्यष्टमी नवमीषु यथाक्रममयाचितैकाशित्व नक्ताशित्व गोप्रदत्वानि। जितद्वन्द्वो द्वन्द्वदुःखेष्वनुद्विग्नः चतुर्ष्वपि दिवसेषु जपेन्मन्त्रं दुर्गा-देवताकमेव, नृपोत्तमैः प्रदातव्यमिति व्यवहितेनान्वयः। पञ्चाब्दं पञ्चवर्षीयम् लक्षणोपेतम्, महाकौशिकमन्त्रस्तु महाष्टम्यां कथितः।

आश्विने दुर्गामधिकृत्य शिष्टाः पठन्ति।

---

१ D चर्च्चिका—।

कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा ।
नवम्यां भोजयेद्देवीं गीतवादित्रनिस्वनैः ॥
शुक्लपक्षे चतुर्थ्यान्तु देवीकेशविमोचनम् ।
प्रातरेव तु पञ्चम्यां स्नपयेच्च शुभैर्जलैः ॥
सप्तम्यां पत्रिकापूजा अष्टम्याञ्चाप्युपोषणम् ।
पूजा जागरणञ्चैव नवम्यां विधिवद्बलिः ॥
सम्प्रेषणं दशम्यान्तु क्रीडाकौतुकमङ्गलैः ।
नीराजनं दशम्यान्तु बलवृद्धिकरं महत् ॥

क्रीड़ाप्रकारमाह:—

भगलिङ्गक्रियावाग्भिः क्रीड़येयुरलं जनाः ।
यस्य नाक्षिप्यते तत्र यश्च नाक्षिपते परान् ॥
क्रुद्धा भगवती शापं दद्यात्तस्य सुदारुणम् ।
मूलेन सफलां विल्वस्य शाखामाहृत्य पूजयेत् ॥

मूलेन मूलनक्षत्रेण ।

पूजयित्वा श्रवणेन प्रातरेव विसर्जयेत् ।
महाष्टमी-महानवम्योर्नवपूजाविधिस्तु शिल्पशास्त्रे—
नवपद्मात्मकस्थाने पूज्या दुर्गा सुमूर्त्तिभिः ।
आदौ मध्ये तथेन्द्रादौ नवतत्त्वाक्षरैः क्रमात् ॥

आदौ प्रथमम् ।

दुर्गे दुर्गे रक्षणि स्वाहेति नव तत्त्वाक्षराणि ।
अयञ्च प्रणवादिः पठनीयः ॥

अष्टादशभुजैकान्तपीनवक्षःस्तनोरुका ।
मूर्द्धजं खेटकं घण्टामादर्शं तर्ज्जनं धनुः ॥
ध्वजं डमरुकं पाशं बिभ्रती वामके ततः
शक्ति मुद्गर शूलञ्च वज्रं खड्गमथाङ्कुशम् ॥
शरं चक्रं शलाकाञ्च एतैरेवायुधैर्युता ।
खेटो वधफल इति प्रसिद्धः ॥
शेषाः षोड़शहस्तास्तु तर्ज्जनीं डमरुं विना ।
मध्यस्थिता उग्रचण्डा अष्टादशभुजा कार्य्या ॥

अन्यदिगवस्थितास्तु षोड़शहस्ताः ।

रुद्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ।
चण्डा चण्डवती चैव चण्डरूपातिचण्डिका ॥
नवमी चोग्रचण्डा च मध्यस्था च प्रकीर्त्तिता ।
गोरोचनारुणा कृष्णा-नीला-शुक्ला च धूम्रिका ।
पीता च पाण्डरा रक्ता आलीढ़स्था हरिस्थिता ॥

आलीढ़ो धनुःस्थानविशेषः, हरिः सिंहः ।

महिषोऽथ पुमान् शस्त्री तत्कचग्रहमुष्टिका ।

महिषो महिषासुरः, अथ देव्यग्रे महिषशरीरे स पुनर्जातः खड्गहस्त इत्यर्थः । तत्कचग्रहमुष्टिका तदीयोर्द्धकचे कृतदृढ़मुष्टिः ।

स्थाप्या वृत्तेन पङ्क्त्या वा इत्युक्तं स्कन्दयामले ।

ता देव्यो मण्डलाकारेण वा ऋजुपङ्क्त्या वा धार्य्याः, स्कन्दयामल आगमविशेषः ।

पूजने स्तुतिपाठः—

महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ।
[1]द्रव्यमारोग्यविजयं देहि देवि नमः सदा ॥
रूपं देहि यशो देहि [2]भाग्यं भगवति देहि मे ।
पुत्रान् देहि धनं देहि सर्व्वान् कामान् प्रयच्छ मे ॥

वराहपुराणे— अगस्त्य उवाच—

अतःपरं प्रवक्ष्यामि शौर्य्यव्रतमनुत्तमम् ।
येन भीरोरपि महाशौर्य्यं भवति तत्क्षणात् ॥
मासि चाश्वयुजे [3]शुद्धां नवमीं समुपोषितः ।
सप्तम्यां कृतसंकल्पः खिलाष्टम्यां निरोदनः ॥
नवम्यां प्राशयेत्पिष्टं[4] प्रथमं भक्तितो नृप ।
ब्राह्मणान् भोजयेद्भक्त्या देवीञ्चैव प्रपूजयेत् ॥
दुर्गां देवीं महाभागां महामायां महाप्रभाम् ।
एवं संवत्सरं यावदुपोष्य विधिवन्नृपः[5] ॥
व्रतान्ते भोजयेद्विप्रान् यथाशक्त्या कुमारिकाः ।
हेमवस्त्रादिभिस्तास्तु भूषयित्वा स्वशक्तितः ॥
पश्चात् क्षमापयेत्तान्तु देवी मे प्रीयतामिति ।
एवं कृते भ्रष्टराज्यो लभेद्राज्यं न संशयः ॥
अविद्यो लभते विद्यां भीरुः शौर्य्यञ्च विन्दति ।

---

१ B आयुः । २ A भगम् ।
३ मूले— शुद्धा नवमी समुपोषिता ।
४ A C पिष्टम् । ५ A —तु विधानतः ।

शुद्धां शुक्लां तेन शुक्लनवमीमात्रे व्रतमिदं। निरोदनो निराहारः, निरोदनं निराहारमिति भविष्ये ओदनपदस्य आहारपरत्वदर्शनात्। नवमीं समुपोषित इति नवमीव्रतत्वख्यापनार्थमन्यथा पिष्टप्राशनविधिविरोधात्।

एवमन्यत्राप्येकादश्युपवासपूर्व्वकं द्वादशीकालीन विष्णुपूजात्मकद्वादशीव्रते द्वादशीं समुपोषिता इति वक्ष्यमाणो विधानं वराहपुराणे।

इति शौर्य्यव्रतम्।

---

अथ शिष्टाचारपरिप्राप्तदशम्यपराजिता।

ॐ अपराजितायै नमः। ॐ क्रियाशक्त्यै नमः। ॐ उमायै नमः। इति प्रतिष्ठामन्त्रः।

चतुर्भुजां पीतवस्त्रां सर्व्वाभरणभूषिताम्।
खड्गचर्म्मवराभयहस्तां त्रिनेत्रामीषत्प्रहसितवदनाम्॥

ध्यात्वा ॐ ह्रीं अपराजितायै नमः ॐ अपराजिताहृदयाय नमः ॐ ह्रीं अस्त्राय फट् ततो दक्षिणे ॐ नमो जयायै नमः इति पूजयेत्। वामे ॐ विजयायै नम इति पूजयित्वा हरिद्रावस्त्रेण दूर्व्वासिद्धार्थकं बद्ध्वा देव्या हृदि धृत्वा अभिलषितकामनया स्वाङ्गेन धारयेत्।

ततः प्रयातकं कुर्य्यात्ततः ॐ कारमुच्चारयन् प्रदक्षिणं कृत्वा प्रसाद्यानेन मन्त्रेण विसर्ज्जयेत्।

इमां पूजां मया देवि यथाशक्त्या निवेदिताम् ।
रक्षार्थं त्वं समादाय व्रज स्वस्थानमुत्तमम् ॥

इत्यपराजितापूजा ।

---

अथ खञ्जनदर्शनम् ।

ज्योतिःशास्त्रे—

द्वादश्यामष्टम्यां कार्त्तिकशुक्लपक्षदश्यां वा आश्वयुजे वा कुर्या-न्नीराजसंज्ञिकां शान्तिम् ।

नीराजनेऽतिवृत्ते यया दिशा खञ्जनं नृपो यान्तम् ।
पश्येत्तया गतस्य क्षिप्रमरातिर्वशमुपैति ॥

दृश्यते स किल हस्तगतेऽर्के रोहिणीमुपगतेऽस्तमुपैति ।

खञ्जनको नामायं विहगस्तस्य दर्शनेन प्रथमे प्रोक्तानि यानि फलानि मुनिभिस्तानि प्रवक्ष्यामि ।

स्थूलोऽभ्युन्नतकण्ठस्य कृष्णगलो भद्रकारको भद्रः ।
आकण्ठमुखात् कृष्णः सम्पूर्णः पूरयत्याशाम् ॥
कृष्णो गलेऽस्य विन्दुः सितकरचरणान्तः स रिक्तकृत् ।
अतिरक्तः पीतो गोपीत इति क्लेशकरः खञ्जनो दृष्टः ॥

खञ्जनविभाग आगमान्तरम्—

समन्तभद्रस्तदनु प्रभद्रः
ततोऽनुभद्रोऽम्बरभद्र एव ।
एषां चतुर्णामपि खञ्जनाना-
माचक्ष्महे सम्प्रति लक्षणानि ॥

यः कन्धरोरःशिरसां समन्तात्
विभर्त्ति कार्ष्ण्यं स समन्तभद्रः ।
कृष्णेन युक्तः शिरसोरसा च
भवेत् प्रभद्रः सितकण्ठपृष्ठः ॥
कण्ठोरसी यस्य तु खञ्जनस्य
कृष्णे भवेतां स मतोऽनुभद्रः ।
कृष्णा भवेत् कण्ठगतैव रेखा
यस्य त्वसावम्बरभद्रनामा ॥
मध्यादमीषां शुभकार्य्यसिद्धौ
यो यो भवेत् पूर्व्वतरः स मुख्यः ।
आकाशभद्रो गलमात्रकृष्णः
सितानना कार्य्यविनाशनाय ॥
स्याद्यो हरिद्रारसमन्निकाशो
गोमूत्रनामा स तु खञ्जरीटः ।
निरीक्षितः प्राग्दिवसे प्रभूतम्
दुःखोद्भवं शंसति यावदब्दम् ॥

आश्रयमधिकृत्य वराहसंहितायाम् ।

अथ मधुरसुरभिफलकुसुमतरुषु सलिलालयेषु पुण्येषु करि-तुरगमूर्ध्नि प्रासादोद्यानहर्म्येषु गोपृष्ठ-सत्समागम यज्ञोत्सव पार्थिवद्विजसमीपे हस्तिबन्धन[1]शाला-छत्र-ध्वज-चामराद्येषु देव[2]-समीप-सिताम्बर-कमलोत्पलपूजितोपलिप्ते च— तथा—

---

१ D तुरङ्गम ।   २ D हैम ।

दधिपात्र धान्यकूटेषु श्रियं खञ्जनः कुरुते।
पङ्के शाद्वलाग्निर्गोरससम्पत्ति वृषगोमयोपगते॥
शाद्वलगे वस्त्राप्ति: शकटस्थे देशविभ्रमः।
गृहपटलेऽथ भ्रंशो वध्रे बन्धो शुचौ भवति रोगः॥
पृष्ठे लजाविकानां प्रियसङ्गममावहत्याशु।
महिषोष्ट्र-गर्दभास्थि-श्मशान-गृहकोण-शर्करादुष्टः॥
प्राकार भस्म केशेषु चाशुभो मरणरुग्भयदः।
पक्षौ धुन्वन्नशुभः पिबन् वापि वारिवाहस्थः॥
सूर्य्योदये प्रशस्तो नेष्टकरः खञ्जनोऽस्तमये॥

वारिवाहो जलप्रणाडिका।

तस्मिन्निधिर्भवति मैथुनमेति यस्मिन्
यस्मिंस्तु छर्द्दयति तत्र तलेऽस्ति काचः।
अङ्गारमप्युपदिशन्ति पुरीषणेऽस्य
तत् कौतुकोपनयनाय खनेद्धरित्रीम्॥

म्रत विकल विभिन्न रोहितः सुतनु समानफलप्रदः।
धनकृदभिनिलीयमानको वियति च बन्धुसमागमप्रदः॥
अभिनिलीयमानकः शाखाशाद्भूमौ पतन्॥

आगमान्तरे—

[1]अब्जेषु गोषु गज-वाजि-महोरगेषु
राज्यप्रदः कुशलदः शुचिशाद्वलेषु।

---

१ D अब्जासु।

भस्मास्थिकाष्ठ [1]नखलोमतुषेषु दृष्टो
[2]दुःखं ददाति खलु खञ्जनकोऽब्दमेकम् ॥
गजाविशालोपवनान्तरेषु
प्रासादहर्म्याश्रितताम्बरेषु ।
दध्यादिभाण्डेऽप्युपलिप्तभूमौ
सुवर्णराजान्तिकचामरेषु ॥

सछाय कुञ्जाम्बर पत्रपुष्पफलावनमेषु शुभद्रुमेषु ।
येनोपविष्टः प्रथमेऽह्नि दृष्टस्तस्य श्रियं खञ्जनको ददाति ॥
नद्यादितीराम्बुज-गोकरीष-गोपुच्छ-दूर्व्वा-नृपमन्दिरेषु ।
अट्टाल जम्बालफल प्रवाल चीरद्रुमोपस्कर-तोरणेषु ॥
एतेषु चाद्येऽहनि खञ्जरीटो दृष्टोऽतिहृष्टः सहसोपविष्टः।
तोयान्नपानप्रियगोऽश्ववस्त्रलाभाय रोगोपशमाय चेष्टः ॥

तुरङ्ग मातङ्ग महोरगेषु
सरोज गोपुच्छ वृषेषु येन ।
पूर्व्वंच दृष्टोऽहनि खञ्जरीटो
निःसंशयं तस्य भवेन्नृपलम् ॥

पूर्व्वचाहनि पूर्व्वाह्ने ।

धान्यानुलब्ध्यै महिषाश्वजादौ स्याद्गोमये गोरसलाभहेतुः ।
वस्त्रस्य लाभाय च शाद्वलादौ लाभाय गेहस्य च नावि दृष्टः ॥
प्रदर्शितेऽन्येन च खञ्जरीटे स्यादन्यनार्य्या सह सङ्गलाभः ।

---

१ B तुषलोमस्थेषु।

२ क्वचित्— रिष्टं ददाति बहुशः खलु खञ्जरीटः।

विवाहलाभोऽनखातभूमौ धान्यस्य राशावपि धान्यलाभः।
भवेत् प्रभाते प्रियसङ्गमाय स्यादन्नसङ्गाय तथान्तरीचे॥
भुङ्क्ते धनायावतरन्नभस्तः खादन् पिबन् भोजनपानलब्ध्यै।
एवं प्रकारेषु मनोरमेषु स्थानान्तरेषूक्तफलान्तराणि॥
इच्छानुरूपाणि ददात्यवश्यं पूर्व्वंच दृष्टोऽहनि खञ्जरीटः।

वल्मीदूषत् कण्टकि शुष्कवृत्त-
दग्धास्थिशूलामृतलाभमेषु?
शून्यालये लोमसु गेहकोणे
तुषे पलाशे सिकतासु यूपे।
एषु प्रदेशेष्वथ चापरेषु
नदीतटेषूपहतेषु दृष्टः।
कुमूर्त्तिचेष्टः स तदा करोति
न्यक्कारभीरून् कलहाननर्थान्॥

बन्धो वरत्रासु शुचौ च रोगो गृहच्छदे स्याद्द्रविणस्य नाशः।
निरीक्षिते वाऽदिशि देशभङ्गो निद्राभिभूतेऽतिभवेच्च रोगः॥

खरोष्ट्र-कौलेयक पृष्ठयात-
श्छिन्दन् सुपक्षौ विदधाति मृत्युम्।
पक्षौ विधून्वन् दिवसस्य चान्ते
बद्धो मृतो वा न शुभः कदाचित्॥

पृष्ठयातः पृष्ठप्राप्तः कौलेयकः श्वा।

यादृश्यवस्था शकुनेरमुष्य शुभाऽशुभा वा प्रथमेऽह्नि दृष्टा।
स्वस्यापि तादृश्युपलक्षणीया तद्विस्तरेणालमिहापरेण॥

पूर्व्वोक्तमेतच्छकुनं प्रशस्तं
यात्रादिकार्य्येष्वपि तुल्यमार्गः ।
प्रत्यक्षमाश्चर्य्यमिदन्त्विहास्य
सर्व्वो जनः पश्यतु खञ्जनस्य ॥
दृष्टोदितेऽगस्त्यमुनौ प्रदेशे
स्वं चेष्टितं खञ्जनको विदध्यात् ।
मन्त्रेण पूजा शिरसा प्रणामः
तत्सूचितस्येष्टफलस्य सिद्धौ ॥
खञ्जनस्य परिकीर्त्तनम् शुभम्
दर्शनं भवति मङ्गलप्रदम् ।
यात्यसौ यदि पुनः प्रदक्षिणम्
तत्करोति पथिकस्य वाञ्छितम् ॥

दर्शने पठनीयमन्त्रः—

त्वं योगयुक्तो मुनिपुत्रकस्त्व-
मदृश्यतामेषि शिखोद्गमेन ।
विलोक्यसे प्रावृषि निर्गतायाम्
त्वं खञ्जनाश्चर्य्यमयो नमस्ते ॥
कुचेष्टितो यः कुवपुः कुदेशे
निरीक्षितः खञ्जनकः कदाचित् ।
द्रष्टा विशेषात् परितोषयेत्तम्
घाताय तत्सूचितदुष्कृतस्य ॥

मांसं न भुञ्जीत शयीत भूमौ
स्त्रियं न सेवेत दिनानि सप्त ।
स्नायाज्जपेत् संजुहुयाच्च वह्नौ
पैष्टं पुमान् खञ्जनमर्च्चयेच्च ॥

वराहसंहितायाम्—

नृपतिरपि शुभं शुभप्रदेशे
खगमवलोक्य महीतले विदध्यात् ।
सुरभिकुसुमयुक्तमर्घं शुभ-
मभिनन्दितमेवमेति वृद्धिम् ॥
अशुभमपि विलोक्य खञ्जरीटम्
द्विजगुरुसाधुसुरार्च्चनेऽनुरक्तः ।
न नृपतिरशुभं प्राप्नुयात् सः
यदि दिनानि न सप्त मांसभोजी ॥

आवर्षात् प्रथमदर्शने फलं प्रतिदिनन्तु दिनशेषे दिकस्थानं मूर्त्तिलग्नञ्च शान्तदीप्तादिभिश्चोह्यम् ।

तच्च वसन्तराजे—

दग्धा दिगुक्ता दिननाथयुक्ता
विवस्वदाप्ता भवति प्रदीप्ता ।
सा धूमिता यां सविताभ्युपेता
शेषा दिगन्ताः किल पञ्च शान्ताः ॥
दग्धा दिगैशी ज्वलिता दिगैन्द्री
धूमान्विता चानलदिक् प्रभाते ।

प्रत्येकमेवं प्रहराष्टकेषु
भुंक्ते दिशोऽष्टौ भविता क्रमेण ॥
दग्धेषु दग्धं ज्वलितं ज्वलत्सु
फलं जनिष्यत्यथ धूमितेषु ।
दिशां विभागेषु विभज्य जातः
कार्य्योद्यतानां कुशले सदैव ॥

इति खञ्जनदर्शनम् ।

---

वराहपुराणे दुर्वासा उवाच—

तद्वदाश्वयुजे मासि द्वादशीं सितपक्षिणीम् ।
सङ्कल्प्याभ्यर्च्चयेद्देवं पद्मनाभं सनातनम् ॥
पद्मनाभाय पादौ तु कटिं वै पद्मयोनये ।
उदरं सर्व्वदेवाय पुष्कराक्षाय वै उरः ॥
अव्ययाय तथा बाहू प्राग्वदस्त्राणि पूजयेत् ।
प्रभवाय शिरः पूज्य प्राग्वदग्रे घटं न्यसेत् ॥
तस्मिन् हेममयं देवं पद्मनाभञ्च विन्यसेत् ।
तमेवमेव सम्पूज्य गन्धपुष्पादिभिः क्रमात् ॥
प्रभातायाञ्च शर्व्वर्य्यां ब्राह्मणाय निवेदयेत् ।
आसीत् कृतयुगे राजा भद्राश्वो नाम वीर्य्यवान् ॥
यस्य नाम्नाऽभवद्वर्षं भद्राश्वं नामनामतः ।
तस्यागस्त्यः कदाचित्तु गृहमागत्य भूपतेः ॥

उवाच पञ्चरात्रन्तु वसामि भवतो गृहे ।
तं राजा शिरसा नत्वा स्थीयतामित्यभाषत ॥
तस्य कान्तिमयी नाम्ना भार्य्या परमशोभना ।
तामगस्त्यस्तथा दृष्ट्वा रूपतेजोऽन्वितां शुभाम् ॥
सपत्न्यस्य भयात्तस्याः कुर्व्वन्त्यः कर्म्म शोभनाः ।
साधु साधु जगन्नाथ स्तौ शुद्रः साधु साध्विति ॥
एवमुक्त्वा ननर्त्तोच्चैर[1]गस्त्यो राजसन्निधौ ।

राजोवाच—

किं हर्षकारणं ब्रह्मन् येनैवं नृत्यते भवान् ।

अगस्त्य उवाच—

इयं राज्ञी त्वदीयाभूत् दासी वैश्यस्य वैदिशे ।
नगरे हरिदत्तस्य त्वमस्याः पतिरेव च ॥
तस्यैव कर्म्मकारोऽभूद्द्रो[2] विन्ध्येति नामतः ।
वैश्यो वाश्वयुजे मासि द्वादश्यां नियतः शुचिः ॥
स्वयं विष्णवालयं गत्वा गन्धपुष्पादिभिर्हरिम् ।
अभ्यर्च्य स्वगृहं प्रायाद्भवन्तौ रक्षपालकौ ॥
स्थाप्य द्वावपि दीपानां ज्वालनार्थं महामते ।
गते तस्मिन् भवन्तौ तान् दीपान् ज्वालयन्तौ[3] स्थितौ ॥
यावत् प्रभाता रजनी निःशाठ्येन नरोत्तम ।
ततः कालेन महता मृतौ[4] द्वावपि दम्पती ॥

---

१ A D अथ अगस्त्यः । २ D शूद्रः ।
३ मुले तद्दीपप्रज्वालने । ४ A D भूतौ ।

तेन पुण्येन ते जन्म प्रियव्रतगृहेऽभवत् ।
इयञ्च पत्नी ते जाता वैश्यदासभवत् प्रिया[1] ॥
पारक्यस्यापि दीपस्य ज्वालितस्य हरेर्गृहे ।
इयं व्युष्टिः परा जाता भक्तिप्रकृष्टस्य ते पुरा ॥
स्वेन यः पुनरर्थेन विष्णुमभ्यर्च्च्य दीपकम् ।
ज्वालयेत्तस्य यत् पुण्यं तत् संख्यातुं न शक्यते ॥

अत्र प्राग्वदित्याद्यतिदेशकपदैर्वराहपुराणीयवक्ष्यमाणमार्गद्वादशीधर्म्मा यथायथमतिदिश्यन्ते ।

पद्मनाभद्वादशीव्रतम् ।

---

विष्णुधर्म्मोत्तरे—

प्रीणयेदश्विरसमश्विन्दत्वा तथाश्विने ।
एतच्चाश्विनशुक्लद्वादश्यामेवं दानं तथैव प्रक्रमात् ।

ब्रह्मपुराणे—

सोपवासस्य कर्त्तव्य एकादश्यां प्रजागरः ।
द्वादश्यां वासुदेवस्य पूजनीयस्य सर्व्वदा ॥
यात्रोत्सवस्य कर्त्तव्यस्त्रयोदश्याञ्च विष्णवे ।
उपवासश्चतुर्द्दश्यां पौर्णमास्यां हरिं यजेत् ॥
आश्वयुज्यां पुरा विप्रैः काम्यो होमः प्रवर्त्तितः ।
महाभयेषु रक्षार्थं द्वारोपान्ते कृताग्निः ॥

---

1 D पुरा ।

यवाचतष्टतोपेतैस्तण्डुलैश्च सुतर्पितः ।
पूर्णेन्दुः पूजितश्चापि पक्वैर्धान्यैः फलैस्तथा ॥
देवदारुवने नग्नः स्तब्धलिङ्गो दिगम्बरः ।
सभार्य्यः पूजितो विप्रैः स्कन्द-नन्दिगणैर्युतः ॥
देवैरश्वपतिश्चापि रेवन्तः पूजितस्तदा ।
मुनिभिर्गौस्तु सुरभिर्गोमद्भिः सुरपूजिता ॥
छागरूपश्च मुनिभिः पूजितोऽच हुताशनः ।
औरभ्ररूपी देवस्तु पूजितस्तु जलाधिपः ॥
विनायकेन सृष्टास्तु वरुणाद्या महाबलाः ।
कान्तारे दीपदानञ्च विष्णुना संप्रकीर्त्तितम् ॥
कश्यपेन निकुम्भस्य युद्धादागमनं कृतम् ।
युगपत्तच कर्त्तव्या द्वादशैते महोत्सवाः ॥
आश्वयुज्यां पूर्णिमायां निकुम्भो वालुकार्णवात् ।
आयाति सेनया सार्द्धं कृत्वा युद्धं सुदारुणम् ॥
तस्मात्तच नरैर्मार्गाः खगेहस्य समीपगाः ।
शोधितव्याः प्रयत्नेन भूषितव्याश्च मण्डलैः ॥
पुष्पार्घफलधूपाचसर्षपप्रकरैस्तथा ।
वेश्मानि भूषितव्यानि नानारङ्गैर्विशेषतः ॥
सुस्नातैरनुलिप्तैश्च नरैर्भाव्यं सबालकैः ।
दिवा तच न भोक्तव्यं मनुष्यैश्च विवेकिभिः ॥
स्त्रीवृद्धमूर्ख-बालैश्च भोक्तव्यं पूजितैः सुरैः ।
पूज्याश्च सफलैः पचैस्तथा द्वारोर्द्धभित्तयः ॥

द्वारोपान्ते प्रदीप्तश्च सम्पूज्यो हव्यवाहनः।
यवाद्यतघृतोपेतैस्तण्डुलैश्च सुतर्पितः॥
पूजितव्यश्च पूर्णेन्दुः पयसा पायसेन च।
रुद्रः सभार्य्यः स्कन्दश्च तथा नन्दीश्वरो मुनिः॥
गोमद्भिः सुरभिः पूज्यो छागवद्भिर्हुताशनः।
श्रौरभ्रवद्भिर्वरुणो गजवद्भिर्विनायकः॥
[1]पूज्यमानश्च रेवन्तो यथाविभवविस्तरैः।
ततः पूज्यो निकुम्भस्तु समाषैस्तिलतण्डुलैः॥
सुगन्धिभिर्घृतोपेतैः कृशराद्यैश्च भूरिभिः।
ब्राह्मणान् भोजयित्वा तु भोक्तव्यं मांसवर्ज्जितम्॥
शङ्खवाद्यरवोन्मिश्रैर्गीतनृत्यैश्च सा निशा।
वह्निपार्श्वगतैर्नेया दृष्टाः क्रीड़ाः पृथग्विधाः॥
ततः प्रभातसमये स्वनुलिप्तैः स्वलङ्कृतैः।
मङ्गलालभनं कार्य्यं वह्निसम्पूजनं तथा॥
भोक्तव्यं बान्धवैः सार्द्धं क्रीड़ितव्यं यथासुखम्।
तस्यां रात्र्यां व्यतीतायां द्वितीयायामनन्तरम्॥
प्रभाते कर्द्दमाक्तैस्तु क्रीड़ितव्यं पिशाचवत्।
निर्लज्जैश्चाथ सर्व्वैश्च रुद्रवत् सर्व्वेशस्तु॥
यस्मात् स देशः सोत्कण्ठः पिशाचैः शम्भुवाहनैः[2]।
लब्धस्तु कश्यपात् पूर्व्वं सक्रोधस्य प्रजापतेः॥

---

१ A पङ्क्तिपञ्चकं पतितम्। २ D शान्तवाहनैः।

आनीय चाथ मित्राणि लेपनीयानि कर्द्दमैः ।
कामाग्निज्वलनैर्वाक्यैः स्त्रीपुंलिङ्गानुवादिभिः ॥
वाचा पैशाचमाचारं कल्पयद्भिरितस्ततः ।
अश्लीलान्यपि जल्पद्भिराक्रोशद्भिश्च संमुखम् ॥
तस्मिन्नहनि पूर्व्वाह्णे निकुम्भस्यानुयायिनः ।
कान्तवेशाः पिशाचाश्च प्रविशन्ति नरांश्च तान् ॥
अपराह्णे ततः स्नातांस्त्यक्त्वा गच्छन्ति बन्धुवत् ।
दर्पाभिमानदोषेण तत्र यस्त्वागतान् नरान् ॥
न पूजयति मोहेन क्रीड़ां न कुरुतेऽथवा ।
तं निर्दहन्ति ते क्रोधात् पिशाचा रौद्रदर्शनाः ॥
ततः स्नातैर्नरैः पूज्यो देवो दामोदरो हरिः ।
सम्पूज्य विप्रान् भोक्तव्यं स्वनुलिप्तैः स्वलङ्कृतैः ॥
बन्धु मित्र कलत्रैश्च सहितैश्च यथाक्रमम् ।
ततः प्रभृति षण्मासान् स्वेषु वेश्मसु मानवैः ॥
अग्निः सन्निहितः[1] कार्य्यो रात्रौ सिद्धार्थकास्तिलाः ।
मांसं समग्रं देयञ्च दीपो नित्यं गृहाद्बहिः ॥
आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि ।
कौमुदी सा समाख्याता कार्य्या लोकविभूतये ॥
कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम् ।
सुगन्धिर्निशि सद्वेशस्त्वक्षैर्जागरणं चरेत् ॥

---

१ क्वचित् सुसंस्कृतः ।

लक्ष्मीपूजामन्त्रः—

ॐ नमस्ते सर्व्वभूतानां वरदासि हरिप्रिये ।
या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्च्चनात् ॥

इन्द्रपूजामन्त्रस्तु—

विचित्रैरावतस्थाय भास्वत्कुलिशपाणये ।
पौलोम्यालिङ्गिताङ्गाय सहस्राक्षाय ते नमः ॥

अत्र कान्तारदीपदानस्य रात्रिकार्य्यश्रुतेः-[१]

युगपत्तत्र कर्त्तव्यौ द्वादशैते महोत्सवाः ।

इति वचनादन्येऽप्युत्सवा रात्रिकर्त्तव्याः । एवञ्च साहचर्य्यात्—

शङ्खवाद्यरवोन्मिश्रैर्गीतनृत्यैश्च सा निशा ।
वह्निपार्श्वगतैर्नेया—

इति स्वरसादाचाराच्च अन्यच्च निकुम्भादिपूजायां चैत्रकृष्ण-चतुर्द्दश्यां रात्रित्वलदर्शनात् गौडस्मृतिविहितजागरणरात्रेरेव सन्निहितायाः—

कौमुदी सा समाख्याता कार्य्या लोकविभूतये ।

इत्यनेन स्तुतिविषयलौचित्यादनुकूलतापादक स्नानमार्ग-शोधनाद्यतिरिक्तं दारोर्द्धमित्यादिसकलपूजादिकर्म्म रात्रा-वेवेति बहवः ।

अन्ये तु—पूर्व्वाह्णोपरोधेन प्राचीनपूजां तत्रैव मन्यन्ते लक्ष्मी-पूजादिकञ्च रात्रौ कारयन्ति । अनुकूलन्तु मनागाद्यपेक्षते (?) ।

---

१ D —कार्य्यस्थितेः ।

स्कन्दपुराणे—

अन्धके चागते तस्मिन् कर्त्ताहं कौमुदीमिति।

इत्युपक्रमे—

ततः प्रभृति राजा वै आज्ञापयति कौमुदीम्।
देवराचिह्न देवस्य रुद्रस्यासुरनाशिनीम्॥
सुसंसृष्टोपलक्षाभी रथ्याभिः क्रियतां पुरम्।
वासोभिरहतैः सर्व्वे भवन्तु पुरवासिनः॥
स्रग्विणः सशिरःस्नाता दत्तपङ्का यथाक्रमम्।
गायन्तु गायनाश्चैव नृत्यन्तु नटनर्त्तकाः॥
उड्डीयन्तां पताकाश्च गृहवीथ्यापणेषु च।
गृहाणि चोपलिप्तानि नित्यमेव भवन्तु वः॥
पुष्पप्रकरजुष्टानि धूपैर्नानाविधैरपि।
स्रग्दामवन्ति सर्व्वाणि नवमालायुतानि च॥
ब्राह्मणाश्चैव भोज्यन्तां क्रियन्तां वाचनानि च।
ब्रह्मघोषश्च सर्व्वत्र पुण्याहोदीरणानि च॥
दीपा रात्रौ च सर्व्वत्र राजमार्गगृहेषु च।
अनन्तराः क्रियन्तां वै प्रचुरस्नेहवर्त्तयः॥
तरुणाः सह योषिद्भिः समन्तात् पर्य्यटन्तु च।
रममाणा हसन्तश्च गायन्तो नृत्यसेविनः॥
भाण्डवाद्यानि वाद्यन्तां नृत्यन्तां सह योषितः।
महादेवस्य पूजान्ते गन्धपुष्यादिकीं शुभाम्॥
उपहाराश्च विविधाः स्नपनानि महान्ति च।

बलयः पुष्कलाश्चैव भक्ष्यभोज्यैरलङ्कृताः ॥
दीपांश्च विविधाकारान् पानानि चरमांस्तथा ।
फलानि च विचित्राणि मांसं पक्कमथामकम् ॥
सुवर्णमणिचित्राणि ईश्वराय प्रयच्छत ।
वध्यन्तां पशवश्चात्र भोज्यन्तां द्विजसत्तमाः ॥
यो न कुर्य्यादिदं सर्व्वं पुरवासी नरः क्वचित् ।
पातयेत्तस्य देहे तु राजा दण्डं महायशाः ॥

तथा सनत्कुमार उवाच—

एवं सङ्घोषयित्वा तु घाण्टिको[1]हस्तिपृष्ठगः ।
जगाम स्वगृहं भूयः कौमुदी चाप्यवर्त्तत ॥
यथोक्तन्तु तदा सर्व्वमकुर्व्वन् सुपुरे जनाः ।
राजापि संयतः स्नातः शुचिः प्रयतमानसः ॥
सर्व्वस्यायतनं गत्वा स्वयमेव सुभक्तितः ।
पञ्चगव्येन शुद्धेन तैलेन च सुगन्धिना ॥

इत्याद्यभिधाय पुनः सनत्कुमार उवाच —

अथ तस्यां सह स्त्रीभिः कौमुद्यां दैत्यदानवाः ।
रेमिरे रक्तमनसो देवाः स्वर्गगता भवे ॥
तत्र काचिच्छुभापाङ्गी पद्मं दिव्यं मुखोपरि ।
मुखारविन्दत्राणार्थं ददौ सोमभयादिव ॥
काचित् प्रायेण सन्त्यक्ता विमानात्तत्र निर्गता ।
रहाचन्द्रादिभिः स्पृष्टा पपात मदमानसा[2] ॥

---

१ D घृण्टिकारः ।  २ D मदनालसा ।

अथ कान्तारदीपदानविधिः।

अत्र ब्रह्मपुराणे —

पूर्व्वमाश्वयुजे मासि पौर्णमास्यां समाहितः।
प्रथमे च निशारम्भे मनोवाक्कायसंयता॥
नमः पितृभ्यः प्रेतेभ्यो नमो धर्म्माय विष्णवे।
नमो धर्म्माय रुद्राय कान्तारपतये नमः॥
दद्यादनेन मन्त्रेण दीपं श्रद्धासमन्वितः।
यः कार्त्तिके समग्रन्तु वर्द्धन्ते तस्य सम्पदः॥

दिवाकरेऽस्ताचलमौलिसंस्थिते
गृहाददूरे पुरुषप्रमाणम्।
यूपाकृतिं यज्ञियवृक्षदारु-
मारोप्य भूमावथ तस्य मूर्द्ध्नि॥
पञ्चाङ्गुला मध्यच्छिद्रेण युक्ता
द्विहस्तदीर्घा अथ पट्टिकास्तु।
कृत्वा चतस्रोऽष्टदलाकृतीश्च
याभिर्भवेदृष्टमार्गानुसारः॥
तत्कर्णिकायान्तु महाप्रकाशा
दीपास्तु देया दलगास्तथाष्टौ।
उदङ्मुखान् दीपवरांश्च तैल-
घृतार्द्धयुक्तांश्च यथोपलभ्यान्॥
अनङ्गलग्नं त्वथ वस्त्रखण्डम्
नवं सुरक्तं त्वथवा सुशुक्लम्।

वर्णं प्रयोज्यश्चषकश्च कृत्यम्
स्निग्धेन्दुखण्डं सुसमं प्रशस्तम् ॥

चषकं मद्यकम् ।

तच्छालिपिष्टोपरि सन्निधेयम्
यथा न नश्येच्च च कम्पते च ।
सर्व्वं प्रकुर्य्यात्त्रिगुणप्रमाणम्
मध्यस्थितस्याप्यथ दीपराशेः ॥
दलेषु शोभार्थमतीव कुर्य्या-
न्मनोरथप्राप्त्युपलब्धये च ।
घण्टाष्टकं लम्बितपुष्पदाम
सवस्त्रशोभान्वितमत्र पश्चात् ॥
संप्रोक्ष्य भूमिं लथ गोमयेन
सचन्दनाक्तेन जलेन लिप्ता ।
अनेकवर्णैरथ मण्डलन्तु
कलाष्टपत्रम् कमलप्रमाणम् ॥
फलानि मूलानि तथैवचक्ष
लाजा दधि-क्षीरमथान्नपानम् ।
नानाविधम् भक्ष्य विशेषणञ्च
स नृत्यगीतं मधुरञ्च वाद्यम् ॥
निवेद्य धर्म्माय हराय भूमौ
दामोदराख्याप्यथ धर्म्मराशे ।

प्रजापतिभ्यस्त्वथ सत्पितृभ्यः
प्रेतेभ्य एवानुमतः स्थितेभ्यः ॥
नैर्ऋत्यकोणादथ दक्षिणान्तम्
धर्म्मादिभ्यः प्रेतपर्य्यन्तकेभ्यः ।
ततो जलं शीतलमानयित्वा
सर्पिःसमायुक्तमतीव हृद्यम् ॥
आपूर्य्य चाष्टौ कलसांश्च तेन
नैर्ऋत्यकोणादथ सन्निधाय ।
हेमादिपात्रं जलपूर्णमेव
दद्यात् पिधानञ्च सदक्षिणञ्च ॥
गोभूर्हिरण्यम् रजतञ्च वस्त्रम्
वस्त्रं फलानि मूलानि सर्वांश्च धान्यम् ।
गृहं रथं शयनं वाहनञ्च
यच्चाथ किञ्चिद्धृदये मनोज्ञम् ॥
निवेदयेद्ब्राह्मणसत्तमेभ्यो
नैर्ऋत्यकोणादथ संस्थितेभ्यः ।
एकैकशः प्रीणनञ्चाच कुर्य्या-
द्धर्म्मादिभ्यः प्रेतपर्य्यन्तकेभ्यः ॥
एतत् समस्तं विधिवच्च कुर्य्यात्
स्वशक्तिमादौ स्वधनं विचार्य्य ।
दीपान् समस्तानथ वर्ज्जयित्वा
सर्व्वं नयेयुस्त्वथ विप्रमुख्याः ॥

प्रदक्षिणीकृत्य चिरं गताश्च
ततो भवेत् संयतनक्तभोजी ।
इतीदमीदृक् व्यवहारयुक्तं
निशामुखे प्रत्यहमेव कुर्य्यात् ॥
मासं समग्रं परया च भक्त्या
समाप्यते कार्त्तिकपौर्णमास्याम् ।
एवं कृते नाकलोकादिशिष्टं
सुखं भवेत् प्रेतलोकस्थितेभ्यः ॥
अथेदृशं चाश्वयुज्यां सकृद्वा
पुनस्तमायां दिवसेऽथ पौत्र ।

तथा रात्रिः ।

कुर्य्यात्ततः कार्त्तिकपौर्णमास्याम्
दिनत्रयं दीपमहोत्सवञ्च ।
एकोऽथवा दीपवरः प्रदेयो
रात्र्यागमे कार्त्तिकपौर्णमास्याम् ॥
दरिद्रवेश्मस्वथ काननेषु
श्मशानदेवायतने च चैत्ये ।
नदीतटे चित्वरगृहान्तरे वाऽ-
प्यथैकलिङ्गेऽप्यथवैकवृक्षे ॥
अष्टाधिकं तेन सहस्रमात्रम्
विधाय पात्रे सुशुभे शतं वा ।

---

१ A D तुलायाम् ।

पलैरथार्द्धैरथवा तदर्द्धैः
प्रमाण्य (?) स्तकस्तथ माषकैर्वा ॥
इस्तार्द्धमात्रैस्त्व चतुर्दशाख्यैः
प्रमाण्य दस्त्वं त्वथ सूचकं वा ।
प्रज्वालयेत्तच निरूप्य धीमान्
स्त्रीणामलङ्कारशतैः प्रपूज्य ॥
देया महावर्त्तिरतीव स्वच्छा
पुष्टा च सा स्याद्भुवनप्रकाशा ।
एतच्च कुर्य्यादथ यस्तु मन्द-
स्तस्यान्धकारस्य कुतः प्रशान्तिः ॥

अत्र कान्तारो दुर्गमं वर्त्म । दरिद्रवेश्मस्वथ वेत्यनेनापि वैकल्पिक आचार उक्तः । शक्त्यपेक्षया आश्विनीराचितः कार्त्तिकीपर्य्यन्तं मुख्य एकः प्रयोगः ।

आश्विनीराद्यमावस्याराचि कार्त्तिकीराचिषु यथाक्रमं राचिचितये शक्त्यपेक्षया, द्वितीयः कल्पः कार्त्तिकीराचिमात्रे वा दीपदानम्, अष्टाधिकमित्यादिना इस्तार्द्धमात्रैरित्यादिना च शक्त्यपेक्षया तैलवस्त्रवर्त्तिप्रभृतिकथनमिति ।

स्कन्दपुराणे—

श्रुत्वा कालेयवचनं कालवेदी तपोधनः ।
सनत्कुमारः प्रोवाच व्यासमम्बुदनिःस्वनः ॥
नीलोत्पलदलश्यामः श्यामाम्बुजसमन्वितः ।
शृणु कालेय कालाभ कालकण्ठविचेष्टितम् ॥

रतावसानं सम्प्राप्य निष्क्रान्ते दिक्पतौ पतौ ।
उत्थाय शयनाद्देवी शौचस्थकेऽतिशोचिता ॥
ततः सुगन्ध्याः पार्व्वत्या वारिधाराधरप्रभा ।
चिन्ता समभवत्तस्या न पुत्रो दुहितेति वा ॥
तस्याश्चिन्तयमानाया हृद्याम्बुसमुद्भवा ।
जज्ञे कमलपत्राक्षी कन्या सर्व्वलक्षणाङ्किता ॥
नीलवस्त्रे निवसिता रक्तवस्त्रावगुण्ठिता ।
सोत्थाय कर्द्दमात्तस्मात् विकृताननमूर्द्धजा ॥
बद्धाञ्जलिपुटा प्राह पार्व्वतीं भाविनीं सतीम् ।
अनुब्रूहि मया कार्य्यं किन्ते देहप्रसूतया ॥
गिरिकन्या तु तां दृष्ट्वा हृद्याम्बुजसम्भवाम् ।
उवाच सम्परिष्वज्य मूर्द्ध्नि चाघ्राय पार्व्वती ॥
मानस्यसि मम सुता हृद्याम्बुजसम्भवा ।
ब्रूहि किन्ते प्रयच्छामि मम प्रीतिः परा त्वयि ॥
हृद्योदकमिश्राङ्गी हृद्योदकसम्भवा ।
अनाभाष्य गिरेः पुत्रीं प्रगीता सा च नृत्यति ॥
तस्यास्तद्विकृतं रूपं दृष्ट्वा तत्र गिरेः सुता ।
हृदयेऽचिन्तयद्देवी किमिदं कोऽप्ययं विधिः ॥
चिरायुषी ततो ध्यात्वा चिरं चीरजटाधरा ।
उवाच तां प्रसन्ना सा नृत्यगीतप्रवर्त्तिकाम् ॥
हृद्याम्बुभवे ब्रूहि वरदाऽस्मि तवानघे ।
तन्निबोध वरं दास्ये यत्तवाहमनिन्दिते ॥

कृमिपङ्काङ्गलिप्ताङ्गा सम्भूतासि यदङ्गने ।
तस्मादुदकमेवेति भविष्यसि महोत्सवे ॥
देवसम्महर्षजो महासुत्सवो यादृशो भवेत् ।
तादृशो तद्विशिष्टो वा भविष्यति तवोत्सवः ॥
उन्मत्तवेशं कुर्व्वाणाः सङ्गता भुवि मानवाः ।
उत्सवे ते भविष्यन्ति मुदिताः सर्व्वतो भृशम् ॥
पार्व्वत्या वचनं श्रुत्वा ततः सोदकसेविका ।
उवाच साञ्जलिपुटा नलिनीव सकुड्मला ॥
मामम्ब सुसमाश्रित्य त्रिलोकोत्सववन्दिते ।
उत्सवो भविता कीदृक् कस्मिन् काले स्वयं वद ॥

भगवत्युवाच ।

दृष्ट्वा शरत्कालमध्यं पूर्णविम्बसमद्युतिम् ।
फुल्लाम्बुजकृतापीडं नीलोत्पलकृताञ्जनम् ॥
कठोरशस्यरुणया ईषत्सन्तापतप्तया ।
विभ्रत्याधरया रम्यं पक्वशाल्यवगुण्ठितम् ॥
राज्ञः परिचयप्रीत्या वृत्ते शक्रमहोत्सवे ।
भविष्यति तदा श्वो वै उत्सवोऽमरसन्निभे ॥
यस्मिन्निन्द्रमहो लोके दिने पातमुपैष्यति ।
तस्मिन् दिने तव जना आरप्स्यन्ते महोत्सवम् ॥
यः कामो भैरवस्यासीद्भगवत्या भवस्य च ।
स महाभैरवो भूत्वा कन्यां गृह्य करे स्थितः ॥

ततोऽम्बिका भगवती पत्नी भगवतः प्रिया।
पुमांसमब्रवीत् कस्त्वं किञ्च इच्छसि मे सुताम्॥
ततो दंष्ट्राकरालास्यो भैरवो भैरवाकृतिः।
पुमान् नीचैः स्थितः प्राह विद्युन्मत्त इवाम्बुदः॥
योऽभवद्भैरवः कामो भगवत्या भवस्य च।
तत्सम्भूतोऽहमेवैषा भार्य्या मम भविष्यति॥
देवानान्तु वरं दत्वा गोपतिर्जगतः प्रभुः।
पीतकाश्मिवादित्यो विवेश भगवान् तदा॥
देवीमुखलेखाङ्कां रतिकामालसेक्षणाम्।
अपश्यन् ध्यानकमलामुष्णार्त्तामिव पद्मिनीम्॥
तौ दम्पती विकृताङ्गौ कुवेषाच्छादनौ स्थितौ।
वीक्षाञ्चक्रे सोमभूषः काविमाविति शङ्कितः॥
अथ तौ दम्पती तस्य देवतासुरवन्दितौ।
महेशचरणौ कान्तौ प्रणम्य च ततः स्थितौ॥

तावुभावपि भवो भवपाल-
श्चन्द्रचिह्नितवपुस्त्रिपुरारिः।
प्राह पादपतितौ सुसमीपे
कौ युवां वदत किञ्च करोमि॥
अम्बिका भवमथाह गिरीशं
सूर्य्यकोटितडिदग्निसवर्णम्।
हासपूर्णवदना वदमानं
लीलया भगवती सुखमाला॥

योऽभवत्तव ममैव हि कामो
भैरवो भयकरस्त्रिदशानाम् ।
एष ते किल पुमान् तव जातः
स्त्रीयमिन्दुवदना मदमाग्रे: ॥

स्कन्दपुराणे भैरवोत्पत्तिर्नामाध्यायः ।

---

सनत्कुमार उवाच—

सोमलब्धा ततः प्रोक्त उमया सोमभावनः ।
गोपवेशधरो देवो दम्पतीत्यब्रवीदचः ॥
यदैव हि त्वया ध्याने जातेयं स्त्री वराङ्गना ।
तदैव मत्प्रभावेन भैरवो ह्येष मेऽभवत् ॥
सिंहेन हि यथा सिंही हस्तिना हस्तिनी यथा ।
तथेयं रंस्यते सुभ्रु भैरवेण सहाव्यया ॥
नाहं त्वया विना देवि त्वञ्चापि न मया विना ।
अतएव मया तेऽद्य दत्तो लम्बोदरारणि ॥

लम्बोदरारणि विनायकमातः ।

उत्सवस्ते च भविता चयीप्रोक्तस्तु मत्प्रिये ।
पूर्व्वागमोऽस्य भविता वृत्ते काममहोत्सवे ॥
अतस्तदात्मको लोकः सर्व्वः सुरवरार्च्चिते ।
भजन्ते तेन चान्योन्यं नरा नार्य्यश्च पार्व्वति ॥
लिङ्गेषु हृदयं स्त्रीणां भगेषु हृदयं नृणाम् ।
भगलिङ्गाङ्कितं सर्व्वं तदिदं जगदङ्गने ॥

भगलिङ्गाङ्कसुक्तोग्रं[1] कुर्व्वाणाः सामरा नराः ।
अन्योन्यं घातयिष्यन्ति आक्रोशन्तः परस्परम् ॥
आरम्भे चावसाने च भविता भैरवोत्सवः ।
शक्र वा तद्दिने तद्दद्दुदृषेविकयोत्सवः ॥

आरम्भे चावसाने चेत्युदृषेविकोत्सवापेक्षया ष्दृषेविकायाः शेषं कालस्य भवितोत्सवः ।

यत्पुनर्नगरं ग्रामं भैरवोऽयं प्रवेक्ष्यति ।
उन्मत्तमिव तत्सर्व्वं सस्त्रीवृद्धं भविष्यति ॥
उन्मत्तवदृतुन्मत्तं चातुर्वर्ण्यं गिरेः सुते ।
भविष्यति पुरा मत्तं भैरवागमहर्षितम् ॥
यथा नियुक्तो पित्रर्थे विप्रान्ते देवता द्विजान् ।
एवं वै भैरवमहे भैरवो विप्रतेऽमरान् ॥
ततो रासभमारूढ़ाः सस्तत् कर्दमलेपिताः ।
कटुकाख्नवल्लीभिः कृतवेष्टनभूषणाः ॥
तत्फलाबद्धवलयाः प्रकटोत्कटनिःस्वनाः ।
भस्मभूषितसर्व्वाङ्गा विन्मूत्रमलपङ्किलाः ॥
तलतालैर्वाद्यमानैः क्रूरा वक्रवचोऽन्वितैः ।

अवद्धमसम्बद्धम् ।

सूच्यमाने वरारोहे भैरवे भार्य्यया सह ।
प्रवेक्ष्यति पुरं स्वेष उत्सवं जनयन्नृणाम् ॥

---

१ A B उत्काषं ।

ये ये रासभादिरोहादिमन्तस्तेषां तत्तत्तालैर्हस्ततालैर्वाद्यमानैः क्रूरासम्बद्धवचोऽन्वितैः सूच्यमाने लक्ष्यमाणे समये नृणां सम्मदं जनयन् भैरवः पुरं प्रवेक्ष्यतीत्यन्वयः।

प्रविष्टे भैरवे भीरु पुरुहूतार्चिते पुरम्।
जनस्य रोचको घोरो भविष्यति तदोत्सवः॥

रोचको विहिततया रुचिविषयो घोरः प्रौढ़तया सद्यो दुःसहः।

येषां वर्षशतं भीरु जरया ये च जर्ज्जराः।
तेऽपि वत्सकवत्सर्व्वे करिष्यन्त्युत्सवं[1] नराः॥

वत्सकवत् बालकवत्।

नानाभूषणबद्धाङ्गाः कुङ्कुमागुरुभूषिताः।
पीतैरनेकवर्णैश्च वासोभिः परिवेष्टिताः॥
कर्णपूरैः समाक्रोश सदामालाः सचूड़िनः।

सदामालाः सस्रजः चूड़ावद्भूषणं तद्वन्तः॥

चूर्णैश्चम्पकपुष्पाद्यै रुचश्लिष्टशिरोरुहाः।
आस्फोटयन्तः क्रन्दन्तः श्रावयन्तोऽप्रियाणि च।
रथ्यासु राजमार्गेषु श्रावयन्तो यतस्ततः॥

रथ्याशब्दोऽत्र राजमार्गेतरमार्गपरः। कुलस्त्रीणामनङ्ग-प्रकृतीनि च।

अङ्गानि यानि गुह्यानि कालाचारकृतानि[2] च।
तेषां हि सर्व्वसन्देहं दर्शयन्तः पदे पदे॥
गायन्तश्च प्रनृत्यन्तः कुर्व्वन्तोऽविनयानि च।

---

1 D समुत्सवं। 2 B कुलाचारकृतानि च।

पूर्व्वं सलज्जीभूत्वा च निर्लज्जत्वमुपागताः ॥
लज्जनीयानपि गुरूंस्तत्कोपजाः परानपि ।
उद्वेगविकथा मर्त्त्याः करिष्यन्ति यथा मम ॥
न मातुर्लज्जते पुत्रा न पुत्रस्य तथारणी ।

अरणी माता ।

पितुर्न पुत्रः पुत्रस्य न पिता न पितामहाः ।
न मातुलस्य स्वस्रीयः स्वस्रीयस्य न मातुलः ॥
मुहूर्त्तेनैव स्वजना निर्लज्जत्वमुपागताः ।
सारमेयाननडुहस्त्वारूढ़ा गर्द्दभेषु च ॥
डोम्बवेशा गोपवेशा वटुवेशधराः[१] पुरे ।
राजवेशाऽन्यवेशाश्च तरुणा बहुरूपिणः ॥
नापितानाञ्च वेषेण नग्नानामपि चापरे ।
पलाण्डुसीधुवर्षैश्च बहुनिम्बैस्तथा भृशम् ॥
धूपं सञ्चारयिष्यन्ति प्राणवैराग्यकारकम् ।
जले च रमणञ्चान्ये नरा नृणामजानताम् ॥
नासिकायां प्रदास्यन्ति दुर्गन्धि चाशुभैः समम् ।
अन्ये तु पुरुषा देवि देववेषविभूषिताः ॥
काव्यानि श्रावयन्तोऽपि द्रक्ष्यन्ति च यथामराः ।
यस्य नाक्रुश्यते तत्र यस्य नाक्रोशते परम् ॥
विध्यन्ति तस्य पितरो ब्रह्महन्तुर्यथा तथा ।
राजानो हि यथाऽर्थानां कुञ्जराणां यथामराः ॥

---

१ A D—ष्टतः परे।

श्चिता हि जायते तद्वत् नराणामुद्धसेविका ।
न तस्य देवा अश्नन्ति हविः पितर एव च ॥
मध्यस्थभावं कुरुते उद्धसेविकया तु यः ।
उद्धसेविकयेति सप्तम्यर्थे तृतीया तेनोद्धसेविकायामित्यर्थः ।
न त्वं नन्दी नचैवाहं तस्य तुष्यन्ति पार्व्वति ।
विरामे च महाशोकः पुत्रलाभे यथा कृतः ॥
पुत्रलाभे पुत्रलाभाय भैरवागमो यथा कृत इत्यन्वयः ।
उद्धसेविकया त्वेवं भविता चैव वागमः ।
अतुला हर्षसम्पत्तिः पश्चादथ तथावयोः ॥
न भ्राजते यथा वेदं त्वच्छोकाङ्गवनं तव ।
उद्धसेविकया हीनं तथा च भविता पुरम् ॥
नरा नार्य्यश्च गिरिजे भस्मना कर्द्दमेन च ।
निष्प्रभानि करिष्यन्ति गृहाण्यायतनानि च ॥
चौरैरुद्वासितमिव पुरं देवि भविष्यति ।
मृत्पिण्डभस्मविन्मूत्रैर्नरैः प्रेतैविराजितम् ॥
भैरवोऽयं मृत इति घोषयन्तस्ततो नराः ।
तृणकृतं नरं तत्र संवेष्ट्याम्बरसंयुतम् ॥
इति वाचः प्रकुर्व्वाणा भैरवोऽयं जहाति नः ।
निर्हरिष्यन्ति तं मर्त्त्या मृतं गुरुमिव प्रियम् ॥
तडागमूले तं न्यस्य सरित्कूले तथापि वा ।
स्नानाविर्द्धूतकलुषाः प्रयास्यन्ति ततो गृहम् ।
संसाध्य भैरवं स्नाता उत्सवोत्कटखेदिताः ॥

मुनिव्रता इव नरा भविष्यन्ति क्रियायुताः।
यथैव ते पार्व्वति भैरवागमे
नवां न लब्धां मुकुरेव लेभिरे।
तथैव सम्भावितभैरवाः पुन-
र्बभूवुरेकान्त तपोधनावृताः॥[1]
इमन्तु यः सुन्दरि भैरवोत्सवं
पठेत्स विप्रो द्विजदेवसंसदि।
स पुत्र-पौत्रैः सममेव तत्क्षणे
महागणेशत्वमवाप्नुयाच्छिवम्॥

अथ शक्रोत्सवः कल्पतरुलिखनानुसाराद्दानुवादिकफलकामे- राश्विनाव्यवहितोत्तरप्रतिपदादौ करणीयः, सापि च तिथिः शुक्लपक्षव्यापकयावद्दिवसाव्यवहितादिका भवत्येव।

पत्रविशेषे इन्द्रध्वजोच्छ्राये यदाह—

देवीपुराणे—

प्रौष्ठपद्यामथाष्टम्यां शुक्लायां शोभनेन च।
आश्विने वाथ शुक्लायां श्रवणे वाथ उच्छ्रयेत्॥

अन्ये तु वाक्यस्वरसाद्भाद्रेन्द्रोत्सवानन्तरमेवास्युत्सवं मन्यन्ते।

मत्स्यपुराणे—

यथाह नारदो धर्मान् बृहत्कल्पाश्रयानिह।
पञ्चविंशसहस्राणि नारदीयं तदुच्यते॥
आश्विने पञ्चदश्यान्तु यो दद्याद्धेनुसंयुतम्।

---

1 B D बभूवुरेव ते।

परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ॥

विष्णुधर्म्मोत्तरे—

आश्वायुज्यां कांस्यपात्रं घृतपूर्णं द्विजातये ।

ससुवर्णं तथा दत्वा दीप्ताक्षस्त्वभिजायते ॥

अत्राश्वयुज्यामश्विनीयुक्तत्वं न विवक्षितं एतदनन्तरम्—

पौर्णमासीषु चैतासु मासर्क्षसहितासु च ।

एतेषामेव दानानां फलं दशगुणं भवेत् ।

महत्पूर्व्वासु चैतासु फलमक्षय्यमश्नुते ॥

इति विष्णुधर्म्मोत्तरवाक्यान्तरात् ।

महत्पूर्व्वा च—

दृश्येते सहितौ यस्यां दिवि चन्द्र-बृहस्पती ।

पौर्णमासी तु महती प्रोक्ता संवत्सरे तु सा ॥

तस्यां दानोपवासादि अक्षयं परिकीर्त्तितम् ।

इति विष्णुवचनेन लक्षिता ।

सहितौ एकस्मिन् मासनक्षत्रे स्थितौ ।

एतच्च सर्व्वपौर्णमासीसाधारणमेव बोद्धव्यम् ॥

तथा तत्रैव—

अश्वयुक्शुक्लपक्षे तु या च पञ्चदशी भवेत् ।

विष्णुद्वारे तु दातव्यास्तदा दीपा यदूत्तम ॥

अन्यत्रापि तदा दीपैर्महत् पुण्यफलं भवेत् ।

दीपैर्दत्तैरित्यर्थः । अन्यत्रापीत्यनेन आदित्यपुराणोक्तस्थानानि विवक्षितानि ।

तथाचादित्यपुराणे—

प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् ।
दीपवृक्षास्ततः कार्य्याः शक्त्या देवगृहेषु च ॥
चतुष्पथ-श्मशानेषु नदी-पर्व्वतवेश्मसु ।
वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च ॥

पर्व्वतवेश्मसु गुहासु एवञ्चाग्रे गृहेषु चेत्यनेन देवगृहपर्व्वत-गुहातिरिक्तं गृहं सामान्यविशेषन्यायेन दर्शितं, सामान्यविशेषन्यायस्तु देवगृह-पर्व्वतगुहयोर्गृहान्तरापेक्षया उत्कर्षद्योतनार्थः ।

इति महासान्धिविग्रहिकठक्कुर श्रीवीरेश्वरात्मज महा-
सान्धिविग्रहिकठक्कुर श्रीचण्डेश्वरविरचिते
कृत्यरत्नाकरे आश्विनतरङ्गः ॥

---

## अथ कार्त्तिककृत्यम् ।

तत्र देवीपुराणे—

कार्त्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसङ्गमे ।

महाभारते—

मासि मास्यश्वमेधेन यो यजेत शतं समाः ।
न खादति च यो मांसं माससेतद्युधिष्ठिर ॥
यस्तु वर्षशतं पूर्णं तपस्तप्येत् सुदारुणम् ।
यश्चैकं वर्ज्जयेन्मासं समं तत्स्यान्न वा समम् ॥
कौमुदन्तु विशेषेण शुक्लपक्षं नराधिप ।

वर्ज्जयेत् सर्व्वमांसानि धर्म्मो ह्यत्र विधीयते ॥
चतुरो वार्षिकान् मासान् यो मांसं परिवर्ज्जयेत् ।
चत्वारि भद्राण्याप्नोति कीर्त्तिमायुर्यशो बलम् ॥
अथवा मासमप्येकं सर्व्वमांसान्यभक्षयन् ।
अतीत्य सर्व्वदुःखानि सुखं जीवेन्निरामयः ॥
ये वर्ज्जयन्ति मांसानि मासशः पक्षशोऽपि वा ।
तेषां हि[1] सुनिवृत्तानां ब्रह्मलोको विधीयते ॥
मांसन्तु कौमुदं पक्षं वर्ज्जितं सर्व्वराजभिः ।
सर्व्वभूतात्मभूतैस्तैर्विज्ञातार्थपरापरैः ॥
नाभागेनाम्बरीषेण गयेन च महात्मना ।
आयुषा चानरण्येन दिलीपवन्धुसूनुभिः ॥
कार्त्तवीर्य्यानिरुद्धाभ्यां नहुषेण ययातिना ।
नृगेण विष्वक्सेनेन तथैव शशविन्दुना ॥
युवनाश्वेन च तथा शिविनौशीनरेण च ।
मुचुकुन्देन मान्धाता हरिश्चन्द्रेण वाजिना ॥
सत्यं वदत माऽसत्यं सत्यं धर्म्मः सनातनः ।
हरिश्चन्द्रश्चरति वै दिवि सत्येन चन्द्रवत् ॥
श्येनचन्द्रेण राजेन्द्र सोमकेन वृकेन च ।
देवतारन्तिदेवेन वसुना सृञ्जयेन च ॥
दुष्मन्तेन करूषेण रामालर्क-नलैस्तथा ।

---

१ D हिंसानिवृत्तानाम् ।

विरूपाक्षेण निमिना जनकेन च धीमता ॥
अलेन पृथुना चैव वीरसेनेन चैव हि ।
इक्ष्वाकुना शम्भुना च श्वेतेन सगरेण च ॥
अजेन धुन्धुमारेण[1] तथैव च सुबाहुना ।
हर्य्यश्वेन च राजेन्द्र चुपेण भरतेन च ॥
एतैश्चान्यैश्च राजेन्द्रैः पुरा मांसं न भक्षितम् ।
शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुवन् ॥

शारदपदं गौरवख्यापनार्थम् ।

ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रिया वृताः ।
उपास्यमाना गन्धर्व्वैः स्त्रीसहस्रसमन्विताः ॥
तदेवमुत्तमं धर्म्ममहिंसालक्षणं शुभम् ।
ये चरन्ति महात्मानो नाकपृष्ठे वसन्ति ते ।
मधु मांसञ्च ये नित्यं वर्ज्जयन्तीह धार्म्मिकाः ।
जन्मप्रभृति मद्यञ्च सर्व्वे ते मुनयः स्मृताः ॥

नन्दिपुराणे—

यो नरः कार्त्तिकं मासं मांसन्तु परिवर्ज्जयेत् ।
संवत्सरस्य लभते फलं मांसविवर्ज्जनात् ॥

पद्मपुराणे—

कौमुदन्तु विशेषेण शुक्लपक्षे नराधिप ।
वर्ज्जयेत् सर्व्वमांसानि धर्म्मो ह्यत्र विधीयते ॥

विष्णुः—

मासः कार्त्तिकोऽग्निदैवत्योऽग्निश्च सर्व्वदेवानां मुखं तस्मात्

१ A B धून्वना चैव ।

कार्त्तिके मासि बहिःस्नायी गायत्रीजपनिरतः सकृदेव हविष्याशी वत्सरकृतात् पापात् पूतो भवति ।

कार्त्तिकं सकलं मासं बहिःस्नायी जितेन्द्रियः ।
हविष्यभुग् जपन् शान्तः सर्व्वपापैः प्रमुच्यते ॥

हविष्ये महाजनपरिगृहीतवाक्यम्—

हविष्येषु यवा मुख्यास्तदनु व्रीहयो मताः ।
माष-कोद्रव-गौरादीन् सर्व्वाभावे विवर्ज्जयेत् ॥

समयप्रदीपे—

प्रथमं यवास्तदलाभे व्रीहयस्तदलाभे माष कोद्रव चणक सर्षप मसूर चीन कपित्थवर्ज्जमन्यदप्यन्नं सैन्धवं मानससम्भवं लवणं तत्तु साम्भरि इति प्रसिद्धमिति ।

तथाहि—

हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ।
कलाय कङ्गु नीवारा वास्तुकं हिलमोचिका ॥
षष्टिका कालशाकञ्च मूलकं केमुकेतरत् ।
कन्दं सैन्धव सामुद्रे लवणे[1] दधिसर्पिषी ॥
पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी ।
पिप्पली जीरकञ्चैव नागरङ्गकतिन्तिली(ड़ी) ॥
कदली लवली धात्री फलान्यगुड़मैचवम् ।
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते ॥

---

१ B गव्ये च ।

एकवक्तृकत्वेन वाक्ययोरभेदः। कार्त्तिकं सकलमित्यादौ सर्व्व-पापक्षयः फलं बहिर्ग्रामात् गृहाच्च । समयप्रदीपे अत्र श्लोके नित्यस्नायीति पाठो लिखितः, नित्यस्नानं प्रातःस्नानमिति व्याख्यातं नित्यस्नानं प्रातःस्नानमिति शङ्खोक्तेरिति हेतुरुक्तः।

स च श्राद्धकल्पतरुलिखितबहिःस्नायीतिपाठान्न निर्विशङ्कः। अत्राचारात् प्रातःस्नानमाचरन्ति ।

भविष्यपुराणे— सुमन्तुरुवाच—

कार्त्तिके मासि राजेन्द्र यः कुर्य्यान्नक्तभोजनम् ।
क्षीरोदनं प्रभुञ्जानः सत्यवादी जितेन्द्रियः ॥
दिवाकराय गां दद्यात् ज्वलनार्कसमप्रभाम् ।
पूर्व्वोक्तञ्च विधिं कुर्य्यात् सूर्य्यतुल्यो भवेन्नृप ॥
कालानलसमप्रख्यैर्महायानैर्नगोपमैः ।
महासिंहकृताटोपैः सूर्य्यवन्मोदते सुखी ॥

अत्रोपवासदिनमुभयसप्तमीमुक्त्वा मासं व्याप्य नक्तभोजनं, पूर्व्वोक्तञ्च विधिं पौषे वक्ष्यमाणमासस्यापि नक्तसप्तमीसामान्य-विधिम् ।

तथा—

कार्त्तिके मासि राजेन्द्र यः कुर्य्यान्नक्तभोजनम् ।
क्षीरोदनं प्रभुञ्जानः सत्यवादी जितेन्द्रियः ॥
यवान्नं पयसा भक्तं भुञ्जानः संयतेन्द्रियः ।
पूजयेच्छ्रद्धया देवीं वाराहीं चक्रधारिणीम् ॥
शतपत्रिकास्रग्भिश्च कुङ्कुमेन विलेपयेत् ।

कृष्णागुरुं सिह्लकञ्च धूपं देव्यै निवेदयेत् ॥
नैवेद्यखण्डवेष्टन्तु नवम्यां पक्षयोर्द्वयोः ।
एवं सम्पूज्य वाराहीं कुमारीर्भोजयेत्ततः ॥
ब्राह्मणांश्च यथाशक्त्या ततो भुञ्जीत वाग्यतः ।
प्राशयित्वा तिलान् विप्र दत्वा कृत्वा[१] च शक्तितः ।
एवं सम्पूजयित्वा तु वाराहीं स्वर्गमाप्नुयात् ॥
क्रीड़ते विष्णुना सार्द्धं क्रीड़मानः सुरासुरैः ।
पुनरेत्य भुवं राजा सार्व्वभौमो भवेन्नृपः ॥

उभयपक्षनवम्युपवासादिकमत्र पौषोभयसप्तमीवद्‌ज्ञेयम् ।

आग्नेयपुराणे—

चान्द्रायणञ्च यः कुर्य्यात् कार्त्तिके राजसत्तम ।
तदन्ते ब्राह्मणेभ्यश्च हेमचन्द्रं निवेदयेत् ॥
चन्द्रव्रतमिदं प्रोक्तञ्चन्द्रलोकफलप्रदम् ।
ददञ्च व्रतं कृष्णादिक्रमेण ॥

तथा च जावालस्मृतिः—

एकैकं ह्रासयेद्ग्रासं कृष्णे शुक्ले च वर्द्धयेत् ।
मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम् ॥

वामनपुराणे—

रजतं कनकं[१] दीपान्मणिमुक्ताफलादिकम् ।
दामोदरस्य तुष्ट्यर्थं प्रदद्यात् कार्त्तिके नरः ॥

आदिशब्देन प्रवाल-राजपट्टयोर्ग्रहणमिति दानसागरः ।

१ D कृत्वा च ।

भविष्यपुराणे—

य: कुर्य्यात् कार्त्तिके मासि शोभनां दीपमालिकाम् ।
चण्डिकायतने भक्त्या स हि सूर्य्योपमां व्रजेत् ॥

तथा—

ददाति कार्त्तिकं यस्तु सूर्य्यायतनदीपकम् ।
अव्याहतेन्द्रियत्वञ्च स प्राप्नोति न संशयः ॥

ब्रह्मपुराणे—

तुलां प्रत्यागते सूर्य्ये विषुवद्दिवसे सति ।
ब्राह्मणेभ्यः प्रदेयानि शस्यान्यभिनवानि च ॥

अस्य स्वर्गः फलम् ।

देवीपुराणे—

तुलास्थे दीपदानेन पूजा कार्य्या महाफला ।
दीपवृक्षः प्रकर्त्तव्यो दीपचक्रमथापि वा ॥
दीपयात्रा प्रकर्त्तव्या चतुर्द्दश्यां कुहूषु च ।
सिनीवाली यदा वत्स तदा कार्य्यं महाफलम् ॥
सर्व्वमेव प्रकर्त्तव्यं बलिपूजामहोत्सवम् ।

विष्णुधर्म्मोत्तरे—

आश्वयुज्यामतीतायां यावद्राजेन्द्र कार्त्तिकी ।
तावद्दीपप्रदस्योक्तं फलं राजेन्द्र शाश्वतम् ॥
तावत्कालं प्रयच्छन्ति ये तु दीपं महानिशि ।
तुङ्ग[१] देशे बहिस्तेषां महत्पुण्यफलं भवेत् ॥

---

१ A B शृङ्गे ।

अप्यन्धकारे गहने प्राकाश्यन्तेन जायते ।
प्राकाश्यात् कुरुशार्दूल तेन यान्ति[1] महत् सुखम् ॥

अत्र कृष्णप्रतिपदादिपौर्णमास्यन्तकार्त्तिके दीपदानमिति-दानसागरः ।

भविष्यपुराणे—

दिने दिने जपस्थाने भास्करस्य महात्मनः ।
ददाति कार्त्तिके यस्तु भवायतनदीपकम् ॥
जातिस्मरत्वं प्रज्ञाञ्च प्राकाश्यं सर्व्वजन्तुषु ।
अव्याहतेन्द्रियत्वञ्च स प्राप्नोति न संशयः ॥

विष्णुधर्म्मोत्तरे—

कार्त्तिके दीपदानेन सर्व्वतौजस्य[2]माप्नुयात् । अत्र सौर-कार्त्तिकशुक्लप्रतिपदाद्यमावस्यापर्य्यन्तं दीपदानमिति दानसागरः । अपरदिनेष्वपि संकल्पव्यतिरेकेण दीपदानमित्युक्तम् ।

ब्रह्मोवाच—

दीपं प्रयच्छति नरः सूर्य्यस्यायतने तु यः ।
तेजसा रविसङ्काशः सर्व्वयज्ञफलं लभेत् ॥
कार्त्तिके तु विशेषेण कौमुदे मासि दीपकम् ।
दत्वा यत् फलमाप्नोति तदन्येन न लभ्यते ॥
कार्त्तिके तु विशेषेण कौमुदे मासि दीपकम् ।
दत्वा सूर्य्यायतने न याति नरकं नरः ॥

---

१ D यान्ति चि तत् । २ D कोज्ज्वस्य ।

एष प्रभावो दीपस्य कार्त्तिके मासि सुव्रत ।
अर्क्कायतनदत्तस्य यथा रुद्रवचः पुरा ॥

कौमुदे कौमुद्या ज्योत्स्नया युक्ते सर्व्वाहोरात्रे शुक्लपक्षे इत्यर्थः, मासविशेषणत्वे वैयर्थ्यप्रसङ्गात् ।

सर्व्वकालञ्च चक्षुष्मान् मेधावी दीपदो नरः ।
जायते नरकस्थापि तमःसंज्ञं न पश्यति ॥
षष्ठीं वा सप्तमीं वापि प्रतिपद्यन्तु यो नरः ।
दीपं ददाति दत्वा च फलन्तस्य निबोध मे ॥
काव्वुरं मणिमुक्ताढ्यं मनोज्ञमतिशोभनम् ।
दीपमालाकुलं दिव्यं विमानमधिरोहति ॥

काव्वुरं काञ्चनमित्यर्थः ।

तस्मादायतने भानोर्दीपं दद्यात् सदाच्युत ।
तं स्वदत्तं न हिंसेत न च तैलविवर्ज्जितम् ॥
कुर्व्वीत दीपहर्त्ता च [1]मूकस्त्वन्धश्च जायते ।
तस्माद्दद्यान्न च हरेच्छ्रेयोऽर्थं दीपकान् नरः ॥

एतत्सकलपक्ष-षष्ठी सप्तमीषु दीपदानप्रसङ्गात् (?) ।

[2]स्कन्दपुराणे—

रसधेनुं तथा दत्वा कार्त्तिके मासि पार्थिव ।
सर्व्वान् कामानवाप्नोति नित्यं सुगतिभाग्भवेत् ॥

महाभारते—

कार्त्तिकन्तु नरो मासं यः कुर्य्यादेकभोजनम् ।

---

१ D मूषिकोऽन्धश्च ।  २ D पद्म— ।

शूरस्य बहुभार्य्यस्य कीर्त्तिमांश्चैव जायते ॥

भविष्यपुराणे—

एकभक्तेन या नारी कार्त्तिकं क्षपयेन्नृप ।
क्षमाऽहिंसादिनियमैः संयता ब्रह्मचारिणी ॥
गुडाज्यमिश्रं शाल्यन्नं भास्कराय निवेदयेत् ।
पुष्पाणि करवीराणि गुग्गुलुं साज्यमादरात् ॥
सप्तम्यां वाथ षष्ठ्यां वा उपवासरतिर्भवेत् ।
पक्षयोरुभयोः स्नात्वा श्रद्धया परयाऽन्विता ॥
इन्द्रनीलप्रतीकाशैर्विमानैः सार्व्वकामिकैः ।
नारी युगशतं साग्रं सूर्य्यलोके महीयते ॥
तस्मादागत्य लोकेऽस्मिन् यथेष्टं विन्दते पतिम् ।
इत्येवं सर्व्वयज्ञेषु विधिस्तुल्यः प्रकीर्त्तितः ॥
एकभक्तोपवासस्य सकलं सदृशं भवेत् ।
सूर्य्यपूजाग्निहवनं सन्तोषः स्तेयवर्ज्जनम् ॥
सर्व्वव्रतेषु यद्धर्म्मः सामान्यो दशधा स्मृतः ।
विशेषं हि प्रवक्ष्यामि मासि मासि व्रतं प्रति ॥

स्कन्दपुराणे—

कार्त्तिकन्त्वपि यो मासमेकभक्तेन तिष्ठति ।
सोऽश्वमेधफलं प्राप्य वह्निलोके महीयते ॥

अथाग्निदैवतो मासः कार्त्तिकः, "कार्त्तिकोऽग्निदैवत्यः" इति विष्णु (पुराण) वचनात् वह्निलोके महीयते इत्यनुवादवशाच्च वदन्ति ।

भविष्यपुराणे—

माघे मासि समुद्दकस्त्रिसन्ध्यं पूजयेद्धरिम् ।
लभेत् षाण्मासिकं पुण्यं मासेकेन न संशयः ॥

इत्यभिधाय—

यथा माघे तथाषाढ़े मासमेकञ्च कार्त्तिके ।

विष्णुधर्म्मोत्तरे—

द्विजवेश्मनि यो दद्यात् कार्त्तिके मासि दीपकम् ।
अग्निष्टोमफलं तस्य प्रवदन्ति मनीषिणः ॥

अत्र पौर्णमास्यन्तकार्त्तिकोपक्रमदिने संकल्प्य द्विजगृहे [1]मासमेकं दीपं दद्यात् अस्य फलभूयस्त्वान्मासव्यापिदानलमिति दानसागरः ।

भविष्यपुराणे—

यः कुर्य्यात् कार्त्तिके मासि शोभनां दीपमालिकाम् ।
सप्तम्यामथवा षष्ठ्याममावस्यामथापि वा ॥
भास्करायुतसङ्काशस्तेजसा भासयन् दिशः ।
दिव्याभरणसम्पन्नः कुलमुद्योत्य सर्व्वशः ॥
दीपवृक्षं समुद्दोध्य भास्करस्यालये शुभे ।
सर्व्वलोकमये वीर वीरलोके महीयते ॥

अत्र कार्त्तिकमासीय सप्तमी-षष्ठ्यमावस्यान्यतमतिथौ भास्करालये दीपमालिकादानं दीपवृक्षसमुदोधसहितं सूर्य्यलोकावाप्तिफलकमिति वाक्यार्थः । वीरः सूर्य्यः ॥

---

[1] A B मासमेकं इति पाठः पतितः ।

भविष्यपुराणे—

घृतदीपप्रदानेन शिवाय शतयोजनम् ।
विमानं लभते दिव्यं सूर्य्यकोटिसमप्रभम् ॥
यः कुर्य्यात् कार्त्तिके मासि शोभनां दीपमालिकाम् ।
घृतेन च चतुर्द्दश्याममावस्याम् विशेषतः ॥
यावद्दीपस्य संख्या वै घृतेनापूर्य्य बोधिता ।
तावद्युगसहस्राणि रुद्रलोके महीयते ॥
दीपवृक्षं समुद्बोध्य शर्व्वस्यायतने शुभम् ।
पुण्यं महदवाप्नोति शिवलोकञ्च गच्छति ॥
शिरसाऽऽधयेद्दीपौ सर्व्वां रात्रिं शिवायतः ।
ललाटे वाथ हस्ताभ्यां समुद्युक्तस्तथोरसि ॥
कल्पायुतशतन्दिव्यं शिवलोके महीयते ।

स्कन्दपुराणे— शिववाक्यम्

प्रदीपमालां यः कुर्य्यात् कार्त्तिके मासि वै मम ।
अवसाने च दीपानाम्ब्राह्मणान् भोजयेच्छुचिः ॥
गाणपत्यं च लभते दीप्यते च रविर्य्यथा ।

तत्रैव

यः कुर्य्यात् कार्त्तिके मासि शोभनां दीपमालिकाम् ।
चण्डिकायतने भक्त्या स सूर्य्यालयमाव्रजेत् ॥
घृतेन कुरुशार्द्दूल अमावस्यां सुभक्तितः ।
विशेषतो नवम्यान्तु भक्तिश्रद्धासमन्वितः ॥
यावन्तो दीपसंघातास्तैलेनापूर्य्य बोधिताः ।

तावत्कल्पसहस्राणि दुर्गालोके महीयते ॥

यमः—

कार्त्तिकस्य तमिस्रे तु मघासु नवमे तिथौ ।
अहोरात्रोषितः स्नात्वा धर्म्मराजाय भोजयेत् ॥
विधिवत् ब्राह्मणान् भक्त्या दुर्गालोके महीयते ।
तिलान् कृष्णाजिने दत्वा सुवर्णं मधुसर्पिषी ॥
दत्वा तु ब्राह्मणायाशु सर्व्वं तरति दुष्कृतम् ।
धेनुं दत्वोभयमुखीं भूदानफलमाप्नुयात् ॥

मघासु नवमे तिथौ मघायुक्तायां नवम्यामित्यर्थः। धर्म्मराजो यमः तत्प्रीतये, यस्तत्र वाक्ये मघासु समये इति दानसागरे पाठः कल्पतरु-पारिजात-प्रकाश-कामधेनुविरोधात् सम्यगन्वयविरहाच्चावलः ।

भविष्ये—

कार्त्तिके भौमवारेण चित्रा कृष्णचतुर्द्दशी ।
अस्यामाराधितः स्थाणुर्नयेच्छिवपुरं ध्रुवम् ॥
चित्रा-कृष्णचतुर्द्दश्यां तुलायां संस्थिते रवौ ।
नासौ प्रेतत्वमाप्नोति हेतुरुद्रालये स्थितः ॥

हेतुरुद्रो हेतुकेश्वरः ।

आग्नेयपुराणे—

निशि कृत्वा जले वासं चतुर्द्दश्यान्तु कार्त्तिके ।
कृष्णपक्षे स मौनोऽपि प्रभाते गोप्रदो भवेत् ॥
वारुणं लोकमाप्नोति वारुणं व्रतमुच्यते ।

पद्मपुराणे—

कार्त्तिके मास्यमावस्या तस्यां दीपप्रदीपनम् ।
शालायां ब्रह्मणः कुर्य्यात् स गच्छेत् परमं पदम् ॥
प्रतिपदि ब्राह्मणांश्च गुड़मिश्रैः प्रदीपकैः ।
वासोभिरहतैः पूज्य गच्छेद्वै ब्रह्मणः पदम् ॥
गन्धैः पुष्पैर्नवैर्वस्त्रैरात्मानं भूषयेत्तु यः ।
तस्यां प्रतिपदायान्तु स गच्छेद्ब्रह्मणः पदम् ॥
महापुण्या तिथिरियं बलिराज्यप्रवर्त्तनी ।
ब्रह्मणः सा प्रिया नित्यं बालेयी परिकीर्त्तिता ॥
ब्राह्मणान् पूजयेद्योऽस्यामात्मानञ्च विशेषतः ।
स याति परमं स्थानं विष्णोरमिततेजसः ॥
चैत्रे मासि महाबाहो पुण्या प्रतिपदा वरा ।
तस्यां यः श्वपचं स्पृष्ट्वा स्नानं कुर्य्यान्नरोत्तमः ॥
न तस्य दुरितं किञ्चिदाधयो व्याधयो न च ।
भवन्ति कुरुशार्दूल तस्मात् स्नानं समाचरेत्[1] ॥
दिव्यं नीराजनं ह्येतत् सर्व्वरोगविनाशनम् ।
गो-महिष्यादिकं किञ्चित्तत् सर्व्वं भूषयेन्नृप ॥
चेलवस्त्रादिभिः सर्व्वांस्तोरणाधस्ततो नयेत् ।
ब्राह्मणानां ततो भोज्यं दद्यात्[2] कुरुकुलोद्भव ॥
तिस्र एताः पराः प्रोक्तास्तिथयः कुरुनन्दन ।
कार्त्तिकेऽश्वयुजे मासि चैत्रे वापि तथा नृप ॥

---

१ मूले— स्नानं च्छि तैस्ततः । २ A कुर्य्यात् ।

स्नानं दानं शतगुणं कार्त्तिके या तिथिर्भवेत् ।
बलिराज्ये तु शुभदा या मूलाशुभनाशिनी ॥

ब्रह्मपुराणे—

अमावस्यान्तु देवास्तु कार्त्तिके मासि केशवात् ।
अभयं प्राप्य सुप्तास्तु सुखं क्षीरोदसानुषु ॥
लक्ष्मी दैत्यभयान्मुक्ता सुखं सुप्ताऽम्बुजोदरे ।
चतुर्युगसहस्रन्तु ब्रह्मा सुप्तस्तु पङ्कजे ॥
अतोऽर्थं विधिवत् कार्य्या मनुष्यैः सुखसुप्तिका ।
दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ॥
[1]प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् ।
दीपवृक्षास्तथा देयाः शक्त्या देवगृहेषु च ॥
चतुष्पथश्मशानेषु नदीपर्व्वतवेश्मसु ।
वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च ॥
वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः ।
दीपमालापरिक्षिप्ते प्रदेशे तदनन्तरम् ॥
ब्राह्मणान् भोजयित्वादौ विभज्य प्रबुभुक्षितान् ।
अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना ॥
स्निग्धैर्मुग्धैर्विदग्धैश्च बान्धवैर्निर्वृतैः सह ।
शङ्करस्तु पुरा द्यूतं ससर्ज्ज सुमनोहरम् ॥
कार्त्तिके शुक्लपक्षे तु प्रथमेऽहनि सत्यवत् ।
जितश्च शङ्करस्तत्र जयं लेभे च पार्व्वती ॥

---

१ D omit प्रदोषसमय इत्यादि पंक्तिचतुष्कम् ।

अतोऽर्थं शङ्करो दुःखी गौरी नित्यं सुखोषिता ।
तस्माद्द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः ॥
तस्मिन् द्यूते जयो यस्य तस्य संवत्सरः शुभः ।
पराजयो विरुद्धस्तु लब्धनाशकरो भवेत् ॥
श्रोतव्यं गीतवाद्यादि स्वनुलिप्तैः स्वलङ्कृतैः ।
विशेषतस्तु भोक्तव्यं प्रशस्तैर्बान्धवैः सह ॥
तस्यां निशायां कर्त्तव्यं शय्यास्थानं सुशोभनम् ।
गन्धैः पुष्पैस्तथा वस्त्रै रत्नैर्माल्यैरलङ्कृतम् ॥
दीपमालापरिच्छिन्नं तथा धूपेन धूपितम् ।
दयिताभिश्च सहितैर्नेया सा च भवेन्निशा ॥
नवैर्वस्त्रैश्च सम्पूज्या द्विजसम्बन्धिबान्धवाः ।

गौड़ाः—

सुखरात्र्यां प्रदोषेषु कुवेरं पूजयन्ति ये ।

तत्र मन्त्रः—

धनदाय नमस्तुभ्यं निधिपद्माधिपाय च ।
भवन्तु त्वत्प्रसादान्मे धनधान्यादिसम्पदः ॥

वामनपुराणे— वलिं प्रति त्रिविक्रमवाक्यम्—

[1]तथान्यमुत्सवं पुण्यं वृत्ते शक्रमहोत्सवे ।
वीर प्रतिपदा नाम तव भावी महोत्सवः ॥
तत्र त्वां नरशार्दूल हृष्टाः पुष्टाः स्वलङ्कृताः ।
पुष्पदीपप्रदानेन अर्चयिष्यन्ति यत्नतः ॥

---

१ D अथान्यम् ।

तवोत्सवो मुख्यतमो भविष्यति दिवानिशम् ।
यथैव राज्ये भवतस्य माम्नम्
तथैव सा भाव्यतिकौमुदीति ॥

अतिकौमुदीति वचनादाश्विनपूर्णिमातोऽतिशयो लभ्यते पद्म-पुराणैकमूलतया शुक्ला प्रतिपद् ।

स्मृतिः—

कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ।
यमो यमुनया पूर्व्वं भोजितः स्वगृहे तदा ॥
अतो यमद्वितीया सा ख्याता लोके युधिष्ठिर! ।
तस्यां निजगृहे पार्थ न भोक्तव्यं बुधैरतः ॥
यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ।
स्वर्णालङ्कारवस्त्रादि पूजासम्भारभोजनैः ॥
सर्व्वा भगिन्यः सम्पूज्या स्वभावे प्रतिपन्निकाः ।
प्रतिपन्निकाभगिन्यभावे प्रतिपन्नात्मनः ॥

ब्रह्मपुराणे—

षड्गर्भान् दानवान् पूर्व्वं वञ्चयित्वा जनार्द्दनः ।
स्वां योगनिद्रामसृजद्देवीं रक्षार्थमात्मनः ॥
एकानङ्गा भगवती सिद्धये कालदेवतम् ।
शुक्लपक्षे तु सम्पूज्या कार्त्तिके कन्यनाद्यया ॥
चतुर्थ्यां वाऽथवाष्टम्यां नवम्याञ्च रूमिङ्ङिदा ।
चतुर्द्दश्यामथ स्त्रीभिः सुस्नाताभिर्यथाक्रमम् ॥
गृहादाद्ये तु यस्य स्यादेकान्ते सफलो द्रुमः ।

तत्रार्घपुष्पधूपान्नसम्पदा पूजयेच्च ताम् ॥
एकपुत्रवती नारी मनोवाक्कायसंयता ।
सर्व्वोपकरणैर्युक्तं गृहीत्वा ग्रासमुत्तमम् ॥
ततो ददाति श्येनाय सुप्रीता प्रीतिकामिनी ।
इमं ग्रासं नयस्वार्य्य भगवत्यै निवेद्यताम् ॥
इत्युक्त्वा च गृहं याति ततः पूर्णमनोरथा ।
कृते युगे प्रसिद्धोऽयं दासवद्भृतको यथा ॥
यथोपरिचरो राजा रेतः पर्णपुटे स्वकम् ।
निधाय प्रददौ नेतुं श्येनाय स्वां प्रियां प्रति ॥
युगेष्वन्येषु मन्त्रन्तु पठंस्त्वनल इत्यपि ।
जहाति भूमौ तं ग्रासं प्राङ्मुखी याति वेश्म च ॥
आमन्त्रणन्तु यस्यापि पक्षिणो निर्म्मितं पुरा ।
स एव पक्षी गृह्णाति तं ग्रासमिति निश्चितम् ॥
आदौ गृहे ततो भुङ्क्ते सा नारी सुसमाहिता ।
पश्चाद्गृहपतिर्भुङ्क्ते सभृत्य-ज्ञाति-बान्धवः ॥
गृहे देवीन्तु तेनैव विधिना पूजयेत् पतिः ।
श्येनग्रासो न देयस्तु न च रुद्धं समाश्रयेत् ॥
किन्तु गुप्ते गृहे भार्य्यां पूजयेत्तु पतिव्रताम् ।
युगेष्वन्येष्वसद्भावो दम्पत्योर्न भवेद्यदा ॥
तदा स्वकुलधर्म्मन्तु तावन्मात्रं करोति सः ।

इत्येकानङ्गपूजा ।

भविष्यपुराणे— सुमन्तुरुवाच—

षष्ठ्यां फलाशनो राजन् विशेषात् कार्त्तिके नृप ।
राज्यच्युतो विशेषेण स्वराज्यं लभतेऽचिरात् ॥
षष्ठी तिथिर्महाराज सर्व्वदा सर्व्वकामदा ।
उपोष्या सा प्रयत्नेन सर्व्वकालं जयार्थिना ॥
कार्त्तिकेयस्य दयिता एषा षष्ठी महातिथिः ।
देवसेनाधिपत्यं हि प्राप्तमस्यां महात्मना ॥
अस्यां श्रीसमायुक्तो यस्मात् स्कन्दोऽभवत् पुरा ।
तस्यां[1] षष्ठ्यां न भुञ्जीत प्राप्नुयाद्भार्गवीं सदा ॥

भार्गवीं श्रियम् ।

दत्वार्घ्यं कार्त्तिकेयाय स्थित्वा वै दक्षिणामुखः ।
दध्ना घृतोदकैः पुष्पैर्मन्त्रेणानेन सुव्रत ॥
सप्तर्षिदारज स्कन्द महासेन महाबल ।
रुद्रोमाग्निज षड्वक्त्र गङ्गागर्भ नमोऽस्तु ते ॥
प्रीयतां देवसेनानीः सम्पादयतु हृद्गतम् ।
दत्वा विप्राय चैवान्नं[2] यच्चान्यदपि वर्त्तते ॥
पश्चाद्भुङ्क्ते त्वसौ रात्रौ कृत्वा भूमिन्तु भाजनम् ।
एवं षष्ठीव्रतस्यास्य उक्तं स्कन्देन यत् फलम् ॥
तन्निबोध महाराज प्रोच्यमानं यथाखिलम् ।
षष्ठ्यां फलाशनो यस्तु नक्ताहारो भविष्यति ॥

---

१ D तस्मात्। २ B चामान्नम्।

शुक्लायामथ कृष्णायां ब्रह्मचारी समाहितः।
तस्य सिद्धिर्धृतिः पुष्टी राज्यमायुर्निरामयम् ॥
पारत्रिकञ्चैहिकञ्च दद्यात् स्कन्दो न संशयः।
यः शक्तो नोपवासस्य स नक्तेन व्रती भवेत् ॥
स्वर्गे च नियतं वासो भवेन्नैवात्र संशयः।
इह चागत्य कल्पान्ते यथोक्तफलभाग्भवेत् ॥
देवानामपि वन्द्योऽसौ राजराजो भविष्यति।

इति स्कन्दषष्ठी।

अत्र च—स नक्तेन व्रती भवेदित्यस्याग्रे स्वर्गे च नियतं वास इत्यस्य पश्चाद्भविष्यपुराणीय भाद्रोक्तषष्ठीकल्पमध्यस्थः 'षष्ठ्यां तैलं न भुञ्जीत' इत्यादि सार्द्धश्लोको व्यवधिस्थितोऽपि कल्पतरावत्रापि योजयित्वा लिखितः।

[1]तन्मते—

षष्ठीनक्तव्रतत्वेन तद्वदत्रापि तैलाभोजनमङ्गम्।

तत्रैव भविष्यपुराणे—

क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः।
देवपूजाग्निहवनं सन्तोषः स्तेयवर्ज्जनम्।
सर्व्वव्रतेष्वयं धर्म्मः सामान्येन सदा स्थितः॥

तथा—

गृहीत्वा सप्तमीकल्पं ज्ञानतो यस्तु मानवः[2]।
त्यजेत् कामाद्भयादापि स ज्ञेयः पतितो बुधैः॥

---

१ A तत्र। २ A मानवो यस्तु तामसः।

सप्तम्यां सोपवासस्तु रात्रौ भुङ्क्ते तु यो नरः।
कृत्वोपवासं षष्ठ्यान्तु पञ्चम्यामेककालभुक् ॥
दत्वा तु संस्कृतं शाकं भक्त्या भोज्यसमन्वितम्।
देवाय ब्राह्मणेभ्यश्च रात्रौ भुञ्जीत वाग्यतः ॥
यावज्जीवं नरः कश्चिद्व्रतमेतच्चरिष्यति।
तस्य श्रीर्विजयश्चैव त्रिवर्गश्च विवर्द्धते ॥
मृतश्च स्वर्गमाप्नोति विमानवरमास्थितः।
सूर्य्यलोके स रमते मन्वन्तरगणान् बहून्[1] ॥
इह चागत्य कल्पान्ते रिपून्[2]शास्ति समन्ततः।
पुत्र-पौत्रैः परिवृतो दाता स्यान्नृपतिश्चिरम् ॥
स भुनक्ति परान् भोगान् विग्रहे चाजितः परैः।
शायन् यो राजशार्दूल शाकाहारेण सप्तमीम् ॥
उपोष्य लब्धं तत्तीर्थं पैत्रं वै गयसंज्ञितम्।
कुरुणा इह पूर्व्वेण शाकाहारेण वै तथा ॥
धर्म्मक्षेत्रं कुरुक्षेत्रं कृतं तेन विवस्वता[3]।
सप्तमी नवमी षष्ठी तृतीया पञ्चमी तथा ॥
कामदास्तिथयो ह्येता इहैव [4]नरयोषिताम्।
सप्तमी माघमासस्य नवम्याश्वयुजे तथा ॥
षष्ठी भाद्रपदे धन्या वैशाखे च तृतीयिका।
पुण्या भाद्रपदे मासि पञ्चमी नागपञ्चमी ॥

---

१ D मन्वन्तरशतान्यथ। २ A रिपुञ्च शान्तिसन्ततः।
३ A विलम्बता। ४ मूले— इतरत्र न योषितां।

इत्येतास्त्वेषु मासेषु विशेषात्तिथयः शुभा ।
शाकं सुसंस्कृतं कृत्वा पेय-भक्ष्यसमन्वितम् ॥
दत्वा विप्रे यथाशक्त्या पश्चाद्भुङ्क्ते निशि व्रती ।
कार्त्तिके शुक्लपक्षस्य याह्येयं कुरुनन्दन ॥
चतुर्भिस्त्वपि मासैस्तु पारणं प्रथमं स्मृतम् ।
अगस्तिकुसुमैस्तत्र पूजा कार्य्या विभावसोः ॥
विलेपनं कुङ्कुमञ्च धूपश्चैवापराजितः ।
स्नानन्तु पञ्चगव्येन तदेव प्राशयेत्तथा ॥
नैवेद्यं पायसञ्चाच देवदेवस्य कीर्त्तितम् ।
तदेव देयं विप्राणां शाकं भक्ष्यमथात्मना ॥
शुभशाकसमायुक्तं भक्ष्यपेयसमन्वितम् ।

शुभशाकमनिषिद्धशाकम् ।

द्वितीये पारणे राजन् शुभगन्धानि यानि वै ।
पुष्पाणि तानि देवस्य तथा श्वेतञ्च चन्दनम् ॥
धूपानां गुग्गुलुश्चाच प्रियो देवस्य सर्व्वदा ।
शाल्योदनं नैवेद्यञ्च दधिमिश्रं महामते ॥
तदेव ब्राह्मणानान्तु भक्ष्यलेह्यसमन्वितम् ।
कालशाकेन च विभोर्युक्तं दद्याद्विचक्षणः ॥
गौरसर्षपकल्केन स्नानञ्चाच विदुर्बुधाः ।
तच्चैवं प्राशनं धन्यं सर्व्वपापहरं शुभम् ॥
तृतीयपारणस्यान्ते महाब्राह्मणभोजनम्[१] ।

---

१ B ब्राह्मणानाञ्च भोजनं ।

श्रवणञ्च पुराणस्य वाचनञ्चास्य शस्यते ॥
देवस्य पुरतः स्नातो ब्राह्मणानान्तथाग्रतः ।
ब्राह्मणाद्वाचकाच्छ्राव्यं नान्यवर्णसमुद्भवात् ॥
अथ तान् ब्राह्मणान् सर्व्वान् शक्त्या भक्त्या च पूजयेत् ।
वाचकस्यामले चाङ्गे वाससी सन्निवेदयेत् ॥
वाचके पूजिते देवः सदा तुष्यति भास्करः ।
करवीरं यथेष्टन्तु तथा रक्तञ्च चन्दनम् ॥
यथेष्टं गुग्गुलुञ्चास्य यथेष्टं पायसं सदा ।
यथेष्टं मोदकास्तस्य यथा वै ताम्रभाजनम् ॥
यथेष्टञ्च घृतं तस्य यथेष्टो वाचकः सदा ।
पारणञ्च[1] यथेष्टं वै सवितुः कुरुनन्दन ॥
इत्येषा सप्तमी पुण्या सुप्रिया गोपतेः सदा ।
यामुपोष्येह पुरुषो दौर्गत्येन न युज्यते ॥

कार्त्तिके शुक्लसप्तम्यामुपक्रम्य प्रतिमासं कुर्व्वता चतुर्थे चतुर्थे मासि या या शुक्लसप्तमी तस्यां तस्यां पारणं कार्य्यं, एवमेकस्मिन् वर्षे वारत्रयं पारणं भवति एवमेव वर्षान्तरे स्येतादृशं व्रतं यावज्जीवं कर्त्तव्यम् ।

इति शाकसप्तमी ।

तत्रैव—

अयने विषुवे चैव षडशीतिमुखे तथा ।
मासैश्चतुर्भिर्यत् पुण्यं विधिना पूज्य चण्डिकाम् ॥

---

१ A पुराणञ्च ।

तत् फलं लभते वीर नवम्यां कार्त्तिकस्य तु ।

युगादिश्चेयं नवमी ।

युगादिषु युगान्तेषु श्राद्धमक्षयमुच्यते ।

इत्यधिकृत्य वराहपुराणे—

कार्त्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ।

वराहपुराणे अगस्त्य उवाच—

सार्व्वभौमव्रतं चान्यत् कथयामि समासतः ।

येन सम्यक् कृतेनाशु सार्व्वभौमो नृपो भवेत् ॥

कार्त्तिकस्य तु मासस्य दशमी शुक्लपक्षिका ।

तस्यां नक्ताशनो नित्यं[१] दिक्षु शुद्धबलिं हरेत् ॥

विचित्रैः कुसुमैर्भक्त्या पूजयित्वाऽथ ब्राह्मणान् ।

सर्व्वा भवत्यः सिध्यन्तु मम जन्मनि जन्मनि ॥

एवमुक्त्वा बलिं तासु दत्वा शुद्धेन चेतसा ।

ततो रात्रौ च भुञ्जीत तदन्नञ्च[२] सुसंस्कृतम् ॥

पूर्व्वं पश्चात् यथेष्टन्तु एवं संवत्सरं नृप ।

यः करोति नृपो नित्यं तस्य दिग्विजयो भवेत् ॥

भवत्यो दिशः तासु दिक्षु अत्र व्रते प्राच्यादयो देवताः तासाञ्च नामभिर्नमोऽन्तैः पूजा बलिदानञ्च ।

इति सार्व्वभौमदशमीव्रतम् ।

ब्रह्मपुराणे—

एकादश्यान्तु शुक्लायां कार्त्तिके मासि केशवम् ।

---

१ मूले भूत्वा सर्व्वः । २ B दध्यन्नन्तु ।

प्रसुप्तं बोधयेद्रात्रौ श्रद्धा-भक्तिसमन्वितः ॥
नृत्यगीतैस्तथा वाद्यै ऋग्यजुःसाममङ्गलैः।
वीणापणवशब्दैश्च पुराणश्रवणेन च ॥
वासुदेवकथाभिश्च स्तोत्रैरन्यैश्च वैष्णवैः।
स्वभावैरिन्द्रजालैश्च भूमिशोभाभिरेव च ॥
पुष्पै-र्धूपैश्च-नैवेद्यै-र्दीपवृन्दैः सुशोभनैः।
होमैर्भक्ष्यैरपूपैश्च फलैः शाकैश्च पायसैः ॥
इक्षोर्विकारैर्मधुना द्राक्षाक्षोडैश्च[1] दाडिमैः ॥
कुठेरकस्य मञ्जर्य्या मालत्या लवणेन च।
छत्राभ्यां श्वेतरक्ताभ्यां चन्दनाभ्याञ्च सर्व्वदा ॥
कुङ्कुमालक्तकाभ्याञ्च रक्तसूत्रैः सकङ्कणैः।
तथाविधै रक्तपुष्पैर्द्रव्यैर्वीरक्रयाहृतैः[2] ॥

कुठेरकं कृष्णतुलसीमाहुः, वीरक्रयो विक्रेतुपन्यस्तमूल्य-त्याजनेन क्रयः।

तस्यां रात्र्यां व्यतीतायां द्वादश्यामरुणोदये।
आदौ घृतेन तैलेन मधुना स्नापयेत्ततः ॥
दध्ना क्षीरेण च ततः पञ्चगव्येन शास्त्रवत्।

शास्त्रवदिति समन्त्रकपञ्चगव्येन स्नानोक्तपरिमाणवता घृतादिना चेत्यर्थः।

उद्वर्त्तनं माषचूर्णं मसूरामलकानि च।
लोध्रं कालेयकञ्चैव तगरं मुस्तकानि च ॥

---

१ D क्षोटैश्च। २ D —क्रीतैः।

सर्षपाश्च प्रियङ्गुश्च मातुलङ्गरसस्तथा ।
सर्व्वौषध्यः सर्व्वगन्धाः सर्व्वबीजानि काञ्चनम् ॥
मङ्गल्यानि यथाकामं रत्नानि च कुशोदकम् ।
हस्तिदन्तोद्धृता मृच्च वृषशृङ्गोद्धृता च मृत् ॥
नदीतीराद्गवास्थानाद्वल्मीकात्सङ्गमाद्धृतात् ।
राजास्थानाच्च सरसस्तथा पर्व्वतमस्तकात् ॥
एताभिः शोध्य देवेशं दद्याद्गोरोचनां शुभाम् ।
सर्व्वौषध्याद्यः परिभाषोक्ताः ॥
ततस्तु कलसा देया यथाप्राप्ताः स्वलङ्कृताः ।
जातीपल्लवसम्बद्धाः सफलाश्च सकाञ्चनाः ॥
पुण्याहजयशब्देन वीणा-वेणुरवेण च ।
शब्देन मधुरेणैव सूत-मागध-वन्दिनाम् ॥
एवं संस्थाप्य गोविन्दं स्वनुलिप्तं स्वलङ्कृतम् ।
सुवाससं पूजयेच्च सुमनोभिः सकुङ्कुमैः ॥
दीपैर्धूपैर्मनोज्ञैश्च पायसेन च भूरिणा ।
माचयाऽन्नप्रदानैश्च होमैः पुण्यैः सदक्षिणैः ॥
वासोभिर्भूषणै रत्नै र्गोभिरश्वैर्मनोरमैः ।
ब्राह्मणाः पूजनीयाश्च विष्णोराद्याश्च मूर्त्तयः ॥
सम्विभज्याश्च दायादा ब्रात्याः सालतजातयः ।
यज्ञशिष्टामृतं पश्चाद्भोक्तव्यं ब्राह्मणैः सह ॥
सम्विभज्यास्ततः पश्चात्तथोदश्यान्तु नर्त्तकाः ।
चतुर्द्दश्यां न भोक्तव्यं पातव्यमथवा पयः ॥

पौर्णमास्यान्तु सम्पूज्यो भक्त्या दामोदरः सदा ।

माघया शक्त्यनुसारेण ।

तस्मिन्नहनि यत्नेन कर्त्तव्यं नक्तभोजनम् ।
दौःशील्यभ्रान्तिचकितैः तत्र सप्तर्षिभिः पुरा ॥
सन्त्यक्ताः कृत्तिकाः षट् च ऋते साध्वीमरुन्धतीम् ।
ततः स्कन्दश्च भगवान् कार्त्तिकेयत्वमागतः ॥
स्कन्दश्च रुद्रवचनादग्निमध्यात् समुत्थितः ।
रुद्रात् पाशशतं लेभे वरुणस्तत्र दारुणम् ॥
अग्निश्च भृगुशापाच्च मुक्तस्तत्र महाभयात् ।
वर्द्धितो मनुना मत्स्यो नीत्वा तत्र पयोनिधिम् ॥
स्नातव्यं वृषभैस्तत्र प्राप्त उत्सङ्ग एव हि ।
पुष्टिः साङ्ग्रामिकी तत्र कृता देवैर्जिगीषुभिः ॥
तस्मादृक्षात्र कर्त्तव्याः पौराणा उत्सवाः सकृत् ।
तत्र चन्द्रोदये पूज्यास्तापस्यः कृत्तिकाश्च षट् ॥
कार्त्तिकेयस्तथा स्कन्दो वरुणश्च हुताशनः ।
धान्यैः सशूकैर्द्वारोर्द्ध्वं भूषितव्यं निशागमे ॥
माल्यै-र्धूपैस्तथा-गन्धैरन्यैरुच्चावचैस्तथा ।
परमान्नैः फलैः शाकैर्वह्निब्राह्मणतर्पणैः ॥
इक्षूणाञ्च विकारेण दीपवृक्षैः सुशोभनैः ॥
कृषरेणाथ पयसा तथा चान्यैश्च गोरसैः ।
लोपिकाभिर्विचित्राभिः स्वजात्युक्तैश्च पानकैः ॥

लोपिका पक्वान्नविशेषः ।

एवं देवांस्तु सम्पूज्य दीपो देयो गृहादहिः ।
[1]द्वारोपान्ते ततो गर्त्तश्चतुरस्रो मनोहरः ॥
चतुर्विंशाङ्गुलः कार्य्यः सिक्तश्चन्दनवारिणा ।
गवां क्षीरेण सम्पूर्णः समन्तात् परिरक्षितः ॥
तत्र हेममयो मत्स्यो मुक्तानेत्रो मनोहरः ।
सङ्कल्प्यो विधानेन नमोऽस्तु हरये पठेत् ॥
ब्राह्मणाय मनोज्ञाय दद्यात् तत् क्षीरसागरम् ।
सर्व्वशस्यधरं रम्यं सर्व्वगन्धसमन्वितम् ॥
[2]सुधासमं ब्राह्मणाय महाकान्तारतारगम् ।
यावन्ति तस्य रोमाणि शरीरे सन्ति संख्यया ॥
तावद्युगसहस्राणि स्वर्गे वसति तत्प्रदः ।
पूजयित्वा ततो विष्णुं रक्तमाल्यानुलेपनैः ॥
भोक्तव्यं गोरसप्रायं सुप्तव्यं स्थण्डिले ततः ।
एकादश्यादिषु तथा तासु पञ्चसु रात्रिषु ॥
दिने दिने च स्नातव्यं शीतलासु नदीष्वपि ।
पूजनीयो हरिर्देवो ब्राह्मणाः सक्तताशनाः ॥
अभयं सर्व्वभूतेभ्यो दत्तं पूर्व्वं सुरासुरैः ।
विष्णोः प्रबोधसमये दिव्यं युगशतं क्रमात् ॥
यथावत् पालितं तच्च मुनिभिर्वाक्यमुत्तमम् ।
देवैर्विष्णुप्रबोधादि समयं तूत्तरायणम्
पालितं तच्च वचनं पश्चात्त्यक्तं विधेर्वशात् ।

---

१ A D दीपोपान्ते । २ A D सुधासमम् ।

नित्यं संग्रामशीलत्वाद्धर्म्माद्धिंसात्मकैस्तथा ॥
देवदानवयक्षैश्च पिशाचैरथ राक्षसैः ।
वर्ज्जिता प्राणिहिंसा च मांसादेर्द्दिनपञ्चकम् ॥
यस्मान्न भोजनं धाचा तेषां मांसादृते कृतम् ।
ततः प्रभृति यो येन धर्म्मश्च स्वयमाश्रितः ॥
स तेन पाल्यते नित्यमद्यापि प्रयतात्मना[1] ।
मुनिवद्देववच्चाथ दैत्यदानववत्तथा ॥
देया च सर्व्वभूतेभ्यो नरैरभयदक्षिणा ।

अभयदक्षिणा अहिंसा सा चाममांसाभोजनरूपाऽपि, अतएव मांसत्यागाचारोऽत्र शिष्टानां मांसभक्षणस्यापि हिंसाप्रभेदत्वात् ॥

तथाच मनुः—

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्त्ता चोपहर्त्ता च खादकाश्चाष्टघातकाः ॥ इति ।

प्रबोधः शयनानुसारादेव नेतव्यः । दिनपञ्चकेऽत्र कृत्यकथनमात्रं वकपञ्चकमिति प्रसिद्धं चेदं दिनपञ्चकं गौड़निबन्धे अतीव निन्दितं मांसम् ।

विष्णुधर्म्मोत्तरे शुक्लदादशीं प्रक्रम्य—

सरोमवस्त्रदानेन कार्त्तिके दिवमाप्नुयात् ।

सरोमवस्त्रं पट्टादि ।

वराहपुराणे—

यन्मया पूर्व्वपृष्टोऽसि धर्म्मेण च यशोधन ।

---

१ A B प्रियमात्मना ।

कर्म्मणा येन पश्यन्ति तदद्य पदं विभो ॥
तन्ममाचत्त्व देवेश कृत्स्नं धर्मं सनातनम् ।
येन मे संशयो देव हृदयादपगच्छति ॥

वराह उवाच—

कौमुदस्य तु मासस्य या सिता द्वादशी भवेत् ।
अर्च्चयेद्यस्तु मां तत्र तस्य पुण्यफलं शृणु ॥
यावल्लोका हि वर्त्तन्ते यावत्त्वञ्चैव माधवि ।
मद्भक्तो जायते तावदन्यभक्तो न जायते ॥
कृत्वा तु मम कर्म्माणि द्वादश्यां मत्परो नरः ।
ममैव बोधनार्थाय इमं मन्त्रमुदीरयेत् ॥
ब्रह्मेन्द्ररुद्रैरभिनूयमानो[1]
भवानृषिर्वन्दितवन्दनीयः ।
प्राप्ता तवेयं किल कौमुदाख्या
जागृष्व जागृष्व च लोकनाथ ॥
मेघा गता निर्म्मलपूर्णचन्द्रः
शारद्यपुष्पाणि च लोकनाथ ।
अहं ददानीति च पुण्यहेतो-
र्जागृष्व जागृष्व च लोकनाथ ॥
स यज्ञो यत्र भासि त्वं सर्व्वयज्ञानुभवोऽसि यज्ञाः ।
यजन्ति त्वात्तासुविशुद्धसत्वाः प्रबुध्य जागृष्व च लोकनाथ ॥

---

१ B अभिष्टूयमानः ।

यद्यान्तिमो मन्त्रः समयप्रदीपाद्यलिखितोऽपि वराहपुराणे कृत्यसमुच्चयादिषु च दृष्टत्वाल्लिखितः।

एवं कर्म्माणि कुर्व्वन्ति द्वादश्यां ये यशस्विनि।
मम भक्ता नरश्रेष्ठास्ते यान्ति परमां गतिम्॥
एवं वै शारदं कर्म्म निखिलं कथितं मया।
मोदते देवि संसारे मम भक्तः सुखावहः॥

अगस्त्य उवाच—

शृणुष्व भक्तितो राजन् कार्त्तिकैकादशीं तथा।
उपोष्य विधिना येन सर्व्वेषां प्राप्नुयात् फलम्॥
प्राग्विधानेन सङ्कल्प्य तद्वत् स्नानं समाचरेत्।
विलोमेनार्च्चयेद्देवं नारायणमकल्मषम्॥

प्राग्विधानेन मार्गलिखितद्वादशुक्तसामान्येतिकर्त्तव्यतया विलोमेनान्यद्वादशीविहितपादादिपूजावैपरीत्येन।

नमः सहस्रशिरसे शिरः सम्पूज्य वै हरेः।
पुरुषायेति च भुजौ कण्ठं वै विश्वरूपिणे॥
ज्ञानास्त्रेति चास्त्राणि श्रीवत्साय तथा उरः।
जगद्ग्रसिष्णवे पूज्य उदरं दिव्यमूर्त्तये॥
कटिं सहस्रपादाय पादौ देवस्य पूजयेत्।
अनुलोमेन देवेशं पूजयित्वा विचक्षणः॥
नमो दामोदरायेति सर्व्वाङ्गं पूजयेद्धरिम्।

अनुलोमेन तत्तन्मन्त्रसहितपादादिपूजादिक्रमेण।

एवं सम्पूज्य विधिना तस्याग्रे चतुरो घटान्।

स्थापयेत् रत्नगर्भांस्तु सितचन्दनचर्च्चितान् ॥
स्रग्दामबद्धग्रीवांस्तु सितवस्त्रावगुण्ठितान् ।
स्थगितान् ताम्रपात्रैस्तु तिलपूर्णैः सकाञ्चनैः ॥
चत्वारः सागरास्त्वेते कल्पिता द्विजसत्तम ।
तन्मध्ये प्राग्विधानेन सौवर्णं स्थापयेद्धरिम् ॥

प्राग्विधानेन मत्स्यद्वादशीविधानेन ।

योगेश्वरं योगनिधिमनन्तं[1] पीतवाससम् ।
तमप्येवन्तु सम्पूज्य जागरन्तत्र कारयेत् ॥
कुर्य्याच्च वैष्णवं यागं यजेद्योगेश्वरं हरिम् ।
षोड़शारे रथाङ्गे तु रजोभिर्बहुभिः कृते ॥

बहुभिर्विष्णुपूजास्थानचक्रप्रकृतिभूतपञ्चवर्णकैः ।

एवं कृत्वा प्रभाते तु ब्राह्मणान् पञ्च चानयेत् ॥
चत्वारः कलशा देया चतुर्वर्णाः पञ्चमस्य तु ।
योगीश्वरन्तु सौवर्णं प्रदद्यात् प्रयतः शुचिः ॥
वेदाध्येचे समं दत्तं तद्विदे द्विगुणं तथा ।
आचार्य्ये पञ्चरात्राणां सहस्रगुणितं भवेत् ॥
यस्त्विदं मरहस्यन्तु समन्तं चोपपादयेत् ।
विधानं तस्य भक्त्या[2] वै दत्तं कोटिगुणोत्तरम् ॥
गुरौ तिष्ठति यस्त्वन्यमासन्नं पूजयेत् सुधीः ।
स दुर्गतिमवाप्नोति दत्तं तस्य च निष्फलम् ॥
असन्ने च गुरौ पूर्व्वं पश्चादन्यस्य दीयते ।

---

१ B योगनिद्राशायिनम् ।    २ B योग्ये ।

अविद्यो वा सविद्यो वा गुरुर्द्देयो जनार्द्दनः' ॥
मार्गस्थो वाप्यमार्गस्थो गुरुरेव परा गतिः।
प्रतिपद्य गुरुं यस्तु मोहाद्विप्रतिपद्यते ॥
युगकोटिं स नरके पच्यते नात्र संशयः।
एवं दत्वा विधानेन तत्वतो विष्णुमर्च्च्य च ॥
विप्राणां भोजनं दद्याद्यथाशक्त्या सदक्षिणम्।
धरणीव्रतमेतद्धि पुरा कृत्वा प्रजापतिः ॥
प्रजां लभेत्तथा मुक्तिं ब्रह्माख्यविचले शुभे[1]।
युवनाश्वश्च राजर्षिरेतेन विधिना पुरा ॥
मान्धातारं सुतं लेभे परं ब्रह्म च शाश्वतम्।
तथा हैहयदायादः कृतवीर्य्यो नराधिपः ॥
कार्त्तवीर्य्यं सुतं लेभे परं ब्रह्म च शाश्वतम्।
शकुन्तलाप्येवमेव व्रतं चीर्त्वा महामुने ॥
लेभे शाकुन्तलं पुत्रं दौष्मन्तं[2] चक्रवर्त्तिनम्।
अनेन विधिना प्राप्तं चक्रवर्त्तित्वमुत्तमम् ॥
धरण्या अपि पाताले पद्मया च कृतं पुरा।
व्रतमेतत्ततो नाम्ना धरणीव्रतमुच्यते ॥
समाप्तेऽस्मिन् धरा देवी हरिणा क्रोड़रूपिणा।
उद्धृताद्यापि तुष्टेन धारिता नौरिवाम्भसि ॥
य इदं शृणुयाद्भक्त्या यश्च कुर्य्यान्नरोत्तमः।
सर्व्वपापविनिर्मुक्तः विष्णुसालोक्यतां व्रजेत् ॥

---

१ क्वचित् ब्रह्माख्यं विमलं शुभम्। २ A दुष्मन्तात्।

एकैकाप्रति[1] चापत्सु राज्यमेका प्रयच्छति ।
किं पुनर्द्वादशैतास्तु येनेन्द्रत्वं ददुः पुरा ॥
इति योगीश्वरद्वादशी धरणीव्रतम् ।

ब्रह्मपुराणे—

पुण्या महाकार्त्तिकी स्याज्जीवेन्द्वोः कृत्तिकास्थयोः ।
पुण्या श्राद्धकरणेन पुण्यहेतुस्तथैव प्रक्रमात् ।

तथा—

आग्नेयन्तु यदा ऋक्षं कार्त्तिक्यां भवति क्वचित् ।
महती सा तिथिर्ज्ञेया स्नानदानेषु चोत्तमा ॥
यदा याम्यन्तु भवति ऋक्षं तस्यामथो[2] क्वचित् ।
तिथिः सापि महापुण्या मुनिभिः परिकीर्त्तिता ॥
प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप ।
सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा ॥

आग्नेयं कृत्तिकानक्षत्रं याम्यं भरणी प्राजापत्यं रोहिणी ।

तथा—

विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः ।
स योगः पद्मको नाम पुष्करेष्वतिदुर्लभः ॥

विष्णुः—

दृश्येते सहितौ यस्यां दिवि चन्द्रबृहस्पती ।
पौर्णमासी तु महती प्रोक्ता संवत्सरे तु सा ॥

---

१ D एकैकयापि चापत्सु ।    २ A तस्यान्तिथौ ।

तस्यां दानोपवासाद्यमक्षयं परिकीर्त्तितम् ।
तथैव द्वादशी शुक्ला याऽन्या श्रवणसंयुता ॥

सहितौ एकराशिस्थितौ नत्वेकनक्षत्रस्थितौ संवत्सर इति वचनात्, न हि प्रतिसंवत्सरे नियमेन पौर्णमास्यामेकनक्षत्रस्थौ च चन्द्र-वृहस्पती भवतः ।

एकराशिस्थितौ भवत इवेति पारिजातः ।

यथा—

कार्त्तिकी कृत्तिकायुक्ता चेत् स्यात्तस्यां सितमुक्षाणमेकवर्णं वा शशाङ्कोदये सर्व्वरत्नगन्धोपेतं दीपमध्ये ब्राह्मणाय दद्यात् कान्तारभयं नश्यति ।

भविष्यपुराणे—

कार्त्तिके पौर्णमास्यान्तु सोपवासोऽर्च्चयेदुमाम् ।
सोऽग्निष्टोमफलं विन्देत् सूर्य्यलोकञ्च गच्छति ॥

देवीपुराणे—

[1]कार्त्तिके कारयेत् पूजां यागं देवीप्रियं सदा ।
ब्रह्मविष्णुशिवादीनां तत्र पूजा महाफला ॥
गवोत्सर्गश्च कर्त्तव्यो नीलं वा वृषमुत्सृजेत् ।
सर्व्वयज्ञफलं वीर प्राप्नुयादविचारयन् ॥

मत्स्यपुराणे—

कार्त्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत् ।
स शैवं पदमाप्नोति वृषव्रतमिदं स्मृतम् ॥

---

१ D कार्त्तिक्याम् ।

यमः—

कार्त्तिक्यां पुष्करे स्नातः सर्व्वपापैः प्रमुच्यते ।

श्रीमहाभारते—

तस्मात्तु कपिला देया कौमुद्यां ज्येष्ठपुष्करे ।
न तस्य विषमं किञ्चिन्न दुःखं न च कण्टकाः ॥
यस्तु वर्षशतं पूर्णमग्निहोत्रं समाचरेत् ।
कार्त्तिकीं वा वसेदेकां पुष्करे सममेव तत् ॥

ब्रह्मपुराणे—

अथ चैत्र्यां वृषोत्सर्गः कार्त्तिक्यां वा प्रयत्नतः ।
कर्त्तव्यस्त्वथ रेवत्यां त्रिभिर्वर्षैर्द्विजातिभिः ॥
वृषभः कृष्णसारस्तु प्रत्यग्रस्त्रिहायनः ।
मनोज्ञो दर्शनीयश्च सर्व्वलक्षणसंयुतः ॥
अष्टाभिर्धेनुभिर्युक्तश्चतुर्भिरथवा क्रमात् ।
त्रिहायनीभिर्धन्याभिः[१] सुरूपाभिः सुशोभितः ॥
सर्व्वोपकरणोपेतः सर्व्वशस्यचरो महान् ।
उत्स्रष्टव्यो विधानेन श्रुतिस्मृतिनिदर्शनात् ॥
प्रागुदक्प्रवने देशे मनोज्ञे निर्ज्जने वने ।
[२]न च वाह्यो न च चौरं पातव्यं केनचित् क्वचित् ॥
स्वधा पितृभ्यो मातृभ्यो बन्धुभ्यश्चापि तुष्टये[३] ।
मातृपक्षाश्च ये केचिद्ये चान्ये पितृपक्षकाः ॥

---

१ D वत्साभिः ।

२ क्वचित्— न वाह्यं न च तत् चौरम् ।

३ B तृप्तये ।

गुरु-श्वशुर-बन्धूनां ये कुलेषु समुद्भवाः।
ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्ज्जिताः॥
वृषोत्सर्गेण ते सर्व्वे लभन्तां पितृतर्पणाम्।
दद्यादनेन मन्त्रेण तिलाक्षतयुतं जलम्॥
पितृभ्यश्च समासेन ब्राह्मणेभ्यश्च दक्षिणाम्।
ततः प्रमुदितास्तेन वृषभेन समन्विताः॥
वनेषु गावः क्रीड़न्ते वृषोत्सर्गप्रसिद्धिषु।
अथ वृत्ते वृषोत्सर्गे दाता वक्रोक्तिभिः पदैः।
ब्राह्मणानाह यत् किञ्चिन्मयोत्सृष्टन्तु निर्ज्जने॥
तं कश्चिदन्यो न नयेच्च विभाव्यं यथाक्रमम्।
वृषोत्सर्गादृते नान्यत् पुण्यमस्ति महीतले॥

तथा पञ्चदशीप्रसङ्गात्।

युगाद्येषु युगान्तेषु षड़शीतिमुखेषु च।
दक्षिणोत्तरगे सूर्य्ये तथा विषुवतोर्द्वयोः॥
संक्रान्तिषु च सर्व्वासु ग्रहणे चन्द्र-सूर्य्ययोः।
पञ्चदश्यां चतुर्द्दश्यां पञ्चम्यामष्टमीषु च।
उपचारो गवां कार्य्यो मासि मासि यथाक्रमम्॥
लवणस्य च चत्वारि पलान्यष्टौ घृतस्य च।
परकीयस्य दुग्धस्य तथा देयानि षोड़श॥
द्वाविंशत्शीतलस्यापि जलस्य च पलानि च।
आदौ विचार्य्य वयसः[1] परिमाणं बलं शुचिम्॥

शुचिमग्निं जठर्य्यम्।

---

[1] D पयसः।

आकस्मिकन्तु दातव्यं पुण्यार्थन्तु गवाह्निकम्।
प्रभाते लवणं यत्र दीयते च ततो जलम्॥
ततस्तृणानि भोज्यञ्च पोषणं मांसवर्ज्जितम्॥
निशि दीपाः सतन्तौका देयाः पौराणिकी कथा।
एवं कृते रत्नपूर्णां मह्रीं दत्वा फलं भवेत्॥
सौरभेय्यः सर्व्वहिताः पवित्राः पुण्यराशयः।
प्रतिगृह्णन्तु[१] मे ग्रासं गावस्त्रैलोक्यमातरः॥
दद्यादनेन मन्त्रेण गवां ग्रास सदैव हि।
गवां कण्डूयनं ग्रासग्रासमाह्निकमेव वा॥
दत्वा भवेन्महापुण्यं गोप्रदानमम त्रणात्।
गोप्रदानाच्च यत्पुण्यं गवां भरत्राद्भवेत्॥
मनुष्यैस्तृणतोयाद्यैर्गावः पाल्याः प्रयत्नतः।
देयाः पोष्याश्च रक्ष्याश्च पूज्या वाह्यास्तु सर्व्वदा॥

कालिकापुराणे—

कार्त्तिक्यामथ वैशाख्यामयनादिषु पर्व्वसु।
दत्वा दीपान् समुद्दीप्य देवस्याग्रे वलिं नतः॥
भूतानां देवदेवस्य बहिर्द्दिक्षु ददेत्सुधीः।
स प्रतो देवमामन्त्र्य सुपेक्षुमौ हरं स्मरन्॥
उपलिप्य गृहं गत्वा निराहारो निशि स्वपेत्।
अपरेऽहनि पूर्व्वाह्णे गत्वा तदेव मन्दिरम्।
कारयेत्तु महास्नानं हराय विधिना गृणं॥

१ क्वचित्—प्रतिगृह्णन्त्विमम्।

पञ्चविंशपलं लिङ्गे अभ्यङ्गं कारयेदथ।
शिवस्य सर्पिषा स्नानं प्रोक्तं पलशतेन तु॥
तावता मधुना चैव दध्ना चैव ततः पुनः।
तावतैव हि क्षीरेण पञ्चगव्येन वा ततः॥
भूयः सार्द्धसहस्रेण पलानामैक्षवेण तु।
रसेन कारयेत् स्नानं भक्त्या चोष्णाम्बुना ततः॥
शीताम्बुना तथोदर्ध्य वस्त्रपूतेन मन्त्रवित्।
स्नापयेद्भक्तितो भूयो गन्धमन्त्रस्थितेन तु॥

गन्धवता गन्धवता चेत्यर्थः।

विधिना स्नाप्य चानेन लिङ्गं रोचनया लिपेत्।
कुष्ठ-कुङ्कुम-कर्पूर-चन्दनागुरुयुक्तया।
लेपयित्वा ततो लिङ्गमापीठान्तं घनं शुभम्॥
नीलोत्पलसहस्रेण मालां बद्धा च पूजयेत्।
अलाभात्तत्सहस्राणामर्द्धार्द्धेनापि पूजयेत्॥
उत्पलानामलाभे तु पद्मैः श्वेतरोर्यजेत्।
पद्मैर्वा चम्पकैर्वापि जात्या पाटलयापि वा॥
पुन्नागैः कर्णिकारैर्वा श्वेतमन्दारजैरपि।
दमनैर्मरुवकैर्वापि शमी-शुक्लार्क-नागरैः॥
यथालाभञ्च पत्रैर्वा निर्गन्ध (?) च मलोज्झितैः।
प्रपूज्य कारयेद्भक्त्या सुगन्धं पुष्पमण्डलम्।
गुग्गुलुस्त्राज्यसंयुक्तमगुरुं वाऽसितं दहेत्॥

असितं कृष्णम्।

सम्पूज्य गौरीभर्त्तारं गीतवादित्रमङ्गलैः।
शालिपिष्टोद्भवैः सिद्धैर्घृतपूर्णैः समुज्ज्वलैः॥
ततो नीराजनं दीपैः षड्विंशद्भिस्तु कारयेत्।
सर्षपै-र्दधिसंयुक्तैर्दूर्वा-गोरोचनाक्षतैः॥
गन्धपुष्पोदकं दद्यात् भूयोऽर्घं चिन्त्य शङ्करम्।
शातकुम्भमयं पद्ममष्टपत्त्रं सकर्णिकम्।
ध्यात्वा निवेदयेन्मूर्द्ध्नि लिङ्गस्य कुसुमैः सह॥
सूक्ष्मवस्त्रयुगं शुभ्रं दीपं वा पट्टसम्भवम्।
चामरं दर्पणञ्चैव दीपवृक्षं प्रदापयेत्॥
[1]धूपं साधारणञ्चैव सघटं पूर्णमेव च।

पूर्णत्वञ्च घटस्यैव।

वितानक-ध्वजौ दद्यात् किङ्किणीरवकान्वितौ।
अथाष्टाभिः क्षितिं पीड्य अङ्गैर्भक्त्या तु दण्डवत्॥
ततः किञ्चित् पठेत् स्तोत्रं शङ्करं भवशङ्करम्।
प्रदक्षिणं ततो गच्छेच्छनै-र्निर्माल्यवर्ज्जकः॥
प्रणम्योच्चैस्ततः पश्चान्नैवेद्यञ्च निवेदयेत्।
दीनानन्धकृपणांश्चैव आगतांश्च बुभुक्षितान्॥
तर्पयेदन्नपानेन सर्व्वांस्तान् नक्तगोचरान्।
पलानां द्वे सहस्रे तु महास्नाने प्रकीर्त्तिते॥

जलान्यस्नानीय-द्रव्यसङ्ख्यापरिकल्पने द्वे सहस्रे।

कुर्य्यादेतत् महास्नानं विधिनानेन धर्म्मवित्।

---

[1] D धूपं।

कारयेद्यः शिवे भक्त्या तस्य पुण्यफलं शृणु ॥
समुद्धृत्य शतं साग्रं कुलानां पापवर्ज्जितः ।
व्रजेत् क्रीड़ायने तस्मिन् विमानस्थोऽमरैर्युतः ॥
भुक्त्वा यथेप्सितान् भोगान् शिवसायुज्यतां व्रजेत् ।
मायावितानमुत्सृज्य चान्ते योगमवाप्नुयात् ॥
केवलेनाप्यथाज्येन दध्ना गव्येन वै तथा ।
पयसा पञ्चगव्येन मधुनेक्षुरसेन च ॥
यः कारयेन्महास्नानं विधिनानेन मन्त्रितः ।
सोऽपि तेनैव मार्गेण गमिष्यति परं पदम् ॥
विधिनानेन निष्टोयः स्नानं तोयेन कारयेत् ।
नराणां विंशतिर्यावत् सोऽपि यास्यति तत्पदम् ॥
अन्तरा म्रियते यस्तु अपूर्णे नियमे तथा ।
सोऽपि गच्छेत् पदं तत्तु शिवभक्त्या ह्यतन्द्रितः ॥
एवमेव हि धर्म्मस्य राशिर्मन्त्रविवर्ज्जितः[१] ।
मन्त्रयुक्तोऽर्चयेद्यस्तु नातः पुण्योऽस्ति धर्म्मवान् ॥

विष्णुधर्म्मोत्तरे—

कार्त्तिक्याञ्चन्द्रवर्णाभमन्यवर्णमथापि वा ।
रक्ते-र्गन्धै-स्तथा धान्यै-र्बीजै र्वस्त्रै-स्तथैव च ॥
कृत्वा युक्तमथोक्षाणं दत्वा दीपान् समन्ततः ।
चन्द्रोदये नरो दत्वा सर्व्वपापैः प्रमुच्यते ॥

चन्द्रवर्णाभमन्यवर्णं वा इति तुल्यवद्विकल्पानुपपत्त्या

---

१ A B मन्त्रस्य वर्ज्जितः ।

एकच रूपे प्राधान्यं विवक्षितं तच प्रथमोपस्थितेः श्वेतरूप एव ॥

कान्तारे यममार्गे च तेनासौ व्रजते सुखम् ।
सर्व्वाणि चास्य भोग्यानि तच चासौ प्रयच्छति ।
दीपा नदीषु दातव्याः कार्त्तिक्यान्तु विशेषतः ॥

अत्र विशेषत इति दर्शनादिष्णुधर्म्मोत्तरोक्तमेव फलम् ।

तेजस्वी च यशस्वी च रूपवानभिजायते ।

इति सागरः ।

भविष्यपुराणे सुमन्तुरुवाच—

पौर्णमास्युपवासन्तु कृत्वा भक्त्या नराधिप ।
अनेन विधिना यस्तु विरिञ्चिं पूजयेन्नरः ॥
प्रतिपद्यां महाबाहो स गच्छेद्ब्रह्मणः पदम् ।
ऋषिर्विशेषतो देवविरिञ्चि-र्वासुदेवतम् ।
कार्त्तिके मासि देवस्य रथयात्रा प्रकीर्त्तिता ।
यां श्रुत्वा मानवो भक्त्या याति ब्रह्मसलोकताम् ॥
कार्त्तिके मासि राजेन्द्र पौर्णमास्यामतर्म्मुखम् ।
मार्गेण चर्म्मणा सार्द्धं सावित्र्याथ परन्तप ॥
भ्रामयेन्नगरं सर्व्वं नानाधान्यैः समन्वितम् ।
स्नापयेद्भ्रामयित्वा तु सकलं नगरं नृप ।
ब्राह्मणान् वाचयित्वाग्रे शाण्डिलेयं प्रपूज्य च ।
आरोपयेद्रथे देवं पुण्यवादित्रनिस्वनैः ।
रथाग्रे शाण्डिलीपुत्रं पूजयित्वा विधानतः ।
ब्राह्मणान् भुञ्जयित्वा तु कृत्वा पुण्याहमङ्गलम् ।

देवमारोपयित्वा तु रथे कुर्य्यात् प्रजागरम् ।
नानाविधैः प्रेक्षणकै-र्ब्रह्मघोषैश्च पुष्कलैः ।
कृत्वा प्रजागरं ह्येवं प्रभाते ब्राह्मणान् नृप ।
भोजयित्वा यथाशक्त्या भक्ष्यभोज्यैरनेकशः ।
पूजयित्वा जलं वीर अनेन विधिना नृप ।
आज्येन च महाबाहो पयसा पायसेन च ।
ब्राह्मणान् वाचयित्वादावन्ते तु विधिवन्नृप ।
कृत्वा पुण्याहशब्दञ्च रथं वा भ्रामयेत् पुनः ।
चतुर्वेदविदै-र्विप्रै भ्रामयेद् ब्रह्मणो रथम् ।
बह्वृचाथर्व्वणै-र्वीर छन्दोगाध्वर्य्युभिस्तथा ।
भ्रामयेद्देवदेवस्य सुरज्येष्ठस्य तं रथम् ॥
प्रदक्षिणं पुरं सर्व्वं मार्गेण सुसमेन च ।
नारोढव्यं रथं वीर शूद्रेण शुभमिच्छता ॥
नारुहेच्च तथा प्राज्ञो मुक्त्वैकं भोजकं नृप ।
ब्रह्मणो दक्षिणे पार्श्वे सावित्रीं स्थापयेन्नृप ॥
भोजको वामपार्श्वे तु पुरतः कञ्जजं न्यसेत् ।
एवं कृत्वा निनादन्तु शङ्खशब्देश्च पुष्कलैः ॥
भ्रामयित्वा रथं वीर पुरं सर्व्वं प्रदक्षिणम् ।
स्वस्थाने स्थापयेद्भूयः कृत्वा नीराजनं बुधः ॥
य एवं कुरुते यात्रां भक्त्या यश्चापि पश्यति ।
रथञ्चाकर्षते यस्तु स गच्छेद्ब्रह्मणः पदम् ॥

मत्स्यपुराणे—

यत्राधिकृत्य शकुनीन्[1] धर्म्माधर्म्मविचारणा।
पुराणं नवसाहस्रं मार्कण्डेयमिहोच्यते॥
परिलिख्य च यो दद्यात् सौवर्णकविमंयुतम्।
कार्त्तिक्यां पुण्डरीकस्य यज्ञस्य फलभाग्भवेत्॥

विष्णुधर्म्मोत्तरे—

महिषीदानमाहात्म्यं कथयामि युधिष्ठिर।
पुण्यं पवित्रमायुष्यं सर्व्वकामसुखप्रदम्॥
चन्द्रसूर्य्योपरागे पुण्ये कार्त्तिक्यामयने तथा।
शुक्लपक्षे चतुर्द्दश्यां सूर्य्यसंक्रान्तिवासरे॥
यदा वा जायते चित्तं वित्तस्य कुरुनन्दन।
तदैव देया महिषी संसारभयभीरुणा॥
सुपयोधरा सुजघना सुशृङ्गी सुखुरा तथा।
प्रथमप्रसूता तरुणी सुशीला दोषवर्ज्जिता॥
सुवर्णशृङ्गतिलका घण्टाभरणभूषिता।
रक्तवस्त्रावृता रम्या ताम्रदोहान्विता शुभा॥
पिण्याकपिण्डकोपेता महिरण्या च शक्तितः।
पिण्याकस्तिलकल्कः। महिरण्येत्याभरणद्वारेण।
सप्तधान्ययुता देया ब्राह्मणे वेदपारगे।
पुराणपाठके तद्वद्धर्म्मशास्त्रविदे तथा॥
देया न वेदरहिते न वकव्रतिने क्वचित्।

---

१ A शकुलीन्। मूले शष्कुलीन्।

द्रव्यैरेभिः समायुक्तं एष्वेऽह्नि विधिपूर्व्वकम्।
दद्यान्मन्त्रेण राजेन्द्र पुराणपठितेन च॥
इन्द्रादिलोकपालानां या राजमहिषी शुभा।
महिषीदानमाहात्म्यादस्तु मे सर्व्वकामदा॥
धर्म्मराजस्य माहात्म्यमिह सर्व्वं प्रतिष्ठितम्।
महिषासुरस्य जननी या साऽस्तु वरदा मम॥

दानमन्त्रः—

दद्यात् प्रदक्षिणीकृत्य ब्राह्मणं तां पयस्विनीम्।
प्रतिग्रहः स्मृतस्तस्याः पृष्ठदेशे स्वयम्भुवा॥
एवं दत्त्वा विधानेन ब्राह्मणस्य गृहं नयेत्।
क्षमापयेत्ततो विप्रं सुसन्तुष्टो भवेदिह॥
अनेन विधिना दत्त्वा महिषीं द्विजपुङ्गवे।
सर्व्वान् कामानवाप्नोति इहलोके परत्र च॥
या स्त्री ददाति महिषीं राज्ञः सा महिषी भवेत्।
महाराजो भवेत् पुरुषो व्यासस्य वचनं यथा॥
यज्ञयाजी भवेद्विप्रः क्षत्रियो विजयी भवेत्।
वैश्यस्तु धान्यधनवान् शूद्रः सर्व्वार्थसंयुतः॥
तस्मात् सर्व्वेण दातव्या महिषी विभवे सति।
पुत्रपौत्रप्रपौत्राणामात्मनः शुभमिच्छता॥
दशधेनुसमानां यन्महिषीं नारदोऽब्रवीत्।
त्रिंशद्धेनुसमां व्यासः सर्व्वदानोत्तमां कविः॥
सगरेण ककुत्स्थेन जनकेन च गाधिना।

दत्ताः सद्दिप्रविप्रेभ्यो महिष्यः सर्व्वकामदाः ॥
महिषीदानमाहात्म्यं यः शृणोति स मानवः ।
सर्व्वपापविनिर्मुक्तः शिवलोके महीयते ॥

दुग्धाधिकां सुमहिषीं नवमेघवर्णां
सम्पृष्टपट्टकवतीं जघनाभिरामाम् ।
दत्वा सुवर्णतिलकां द्विजपुङ्गवाय
लोकद्वयं विजयतेऽप्रतिमप्रभावः॥

इति महिषीदानविधिः ॥

इति महासान्धिविग्रहिकठक्कुर श्रीवीरेश्वरात्मज महा-
सान्धिविग्रहिकठक्कुर श्रीचण्डेश्वरविरचिते कृत्य-
रत्नाकरे कार्त्तिकतरङ्गः ॥

---

## अथ मार्गमासकृत्यम् ।

तत्र देवीपुराणे—

मार्गे रसोत्तमं दद्यात् घृतं पौषे महाफलम् ।

रसोत्तमं लवणम् ।

तिलान्माघे मुनिश्रेष्ठ सप्तधान्यानि फाल्गुने ।
विचित्राणि च वस्त्राणि चैत्रे दद्याद्द्विजोत्तम ॥
वैशाखे यवगोधूमान् ज्येष्ठे तोयभृतं घटम् ।
आषाढ़े चन्दनं देयं सकर्पूरं महाफलम् ॥

नवनीतं नभोमासि कृतं प्रौष्ठपदे मतम्।
गुड़शर्करवर्णाढ्यान् लड्डुकानाश्विने मुने॥
दीपदानं महापुण्यं कार्त्तिके यः प्रयच्छति।
सर्व्वान् कामानवाप्नोति क्रमेणेदमुदाहृतम्॥
मतान्ते गां शुभां दद्यात् सवत्सां कांस्यदोहनाम्।
सयुगां सस्रजं वत्स दापयेद्विधिना मुने॥
देवीं विरिञ्चिनं सूर्य्यं विष्णुं वापि यथाविधि।
स्वभावशुद्धौ विधिवत् पूजयित्वा द्विजोत्तमौ॥
दातव्या वीतरागे तु कामक्रोधविवर्ज्जिते।
अयाचके सदाचारे विनीते नियमान्विते॥
गोदानाल्लभते कामान् गोलोकेषु मनोरमान्।

इदञ्च दानं संवत्सरनिष्पाद्यं अधिकारिभेदकल्पनागौरवात्।

वराहपुराणे वराह उवाच—

ये यजन्ति वरारोहे मासि मार्गशिरे द्विजाः।
तान् सर्व्वाननुगृह्णामि हव्य-कव्यपथि स्थितान्॥

यजन्ति मामिति शेषः।

वामनपुराणे—

खरोष्ट्राश्वतरान् नागान् शकटान् युग्यजाविकम्।
दातव्यं केशवप्रीत्यै मासि मार्गशिरे नरैः॥

अश्वतरो वेशर इति प्रसिद्धः। युगी युक्तरथ इति दानसागरः। अजश्छागः, अविर्मेषः। गोपाल-भूपाल-कल्पतरु-पारिजातेषु तु शकटान्यजाविकमिति पाठः स तु सुगमः॥

भविष्यपुराणे—

मार्गशीर्षे शुभे मासि व्योमपिष्टेन निर्म्मितम् ।
गन्धमाल्यैरलङ्कृत्य भास्कराय निवेदयेत् ॥
गैरिकेयमयै-र्यानै-रप्सरोगणसंवृतैः ।
षष्टिकोटिसहस्रं सूर्य्यलोके महीयते ॥

गैरिकेयमयैः सौवर्णैः ।

क्रमादागत्य लोकेऽस्मिन् राजानं पतिमाप्नुयात् ।

अत्र च मासव्याप्येकभक्तादिकम् भविष्यपुराणीय पूर्व्वोक्त कार्त्तिककामव्रतवज्ज्ञेयम् ।

स्कन्दपुराणे—

एकभक्तेन यो दद्यान्मासं मार्गं क्षपेत च ।
स तेन कर्म्मणा युक्तः सुभगो भवति सर्व्वतः ॥

महाभारते—

मार्गशीर्षन्तु यो मासमेकभक्तेन संक्षिपेत् ।
भोजयेच्च द्विजान् शक्त्या मुच्यते व्याधिकिल्बिषैः ॥

महाफलमुपक्रम्य देवीपुराणे—

मार्गे तु ग्रहणं प्रोक्तं देविकायां महामुने ।

देविका नदीविशेषः ।

विष्णुधर्म्मोत्तरे—

लवणं मार्गशीर्षे तु दत्वा सौभाग्यमश्नुते ।

अथ मार्गशीर्षाभिमतद्दिने दानमिति दानसागरः ।

भविष्यपुराणे—

मार्गशीर्षे शुभे मासि यः कुर्य्यान्नक्तभोजनम् ।
यवान्नं पयसा युक्तं भुञ्जानः संयतेन्द्रियः ॥
प्रयच्छेद्गां तथा कृष्णां नानालङ्कारभूषिताम् ।
सूर्य्याय कुरुशार्द्दूल विधिश्चापि समाचरेत् ॥

विधिरत्रैवाग्रे वक्ष्यमाणः ।

सितपद्मनिभैर्यानैः श्वेताश्वतरसंयुतैः ।
गत्वादित्यपुरं रम्यं प्रभया परयान्वितः ॥
अहिंसा सत्यवचनमस्तेयं क्षान्तिरार्ज्जवम् ।
त्रिसवनाग्निहवनं भूशय्या नक्तभोजनम् ॥
पक्षयोरुपवासेन सप्तम्यां कुरुनन्दन ।
एतान् गुणान् समाश्रित्य कुर्व्वाणो व्रतमुत्तमम् ॥
सप्तम्युभयमाख्यातं सर्व्व[2]रोगभयापहम् ।
सर्व्व[1]पापप्रशमनं सर्व्वकामफलप्रदम् ॥
इत्येवमादिनियमैश्चरेत् सूर्य्यव्रतं सदा ।
य इच्छेद्विपुलं स्थानं भानोरमिततेजसः ॥

इत्युभयसप्तमीव्रतम् ।

---

तत्रैव—

राजन् मार्गशिरे मासि यः कुर्य्यान्नक्तभोजनम् ।
भुञ्जानः शष्कुलीर्नित्यं जितात्मा च जितेन्द्रियः ॥

---

१ A सर्व्वपाप—   २ A सर्व्वरोग—

पूजयेद्विधिवद्भक्त्या चामुण्डां चण्डसूदनीम्[1]।
नीलोत्पलैस्तथा पद्मै र्बिल्वपत्रकदम्बकैः॥
चन्दनागुरुकर्पूरै र्गुग्गुलेन तथा नृप।
भक्ष्यैर्भोज्यैरनेकैश्च सुरामांसैरनेकशः॥
रुधिरेण तथा वीर शिरोभि र्विविधैर्नृप।
अजाविमहिषाणाञ्च स्वदेहस्य च भेदनात्॥
नवम्यां विधिवद्भक्त्या पक्षयोरुभयोरपि।
कुमारीर्भोजयेच्चापि ब्राह्मणान् योषितस्तथा॥
पञ्चगव्यकृतस्नानो मभ्यक्तु प्राश्य विधानतः।
ततो भुञ्जीत राजेन्द्र भूमिं कृत्वा तु भाजनम्॥
य एवं पूजयेद्भक्त्या चामुण्डां सततं नरः।
स याति परमं स्थानं यत्र सा परमा कला॥
सौवर्णं यानमारुह्य ध्वजमालाकुलं शुभम्।
मोदते देवतैः सार्द्धं यावदिन्द्राश्चतुर्द्दश॥
पुनरेत्य महाराज राजा भवति भूतले।
प्रभयाम्बुजसङ्काशस्तेजसा वह्निसन्निभः[2]॥
कान्त्या चन्द्रसमो वीर बुद्ध्या धीषण-शुक्रयोः।

अत्र नवमीदयोपवासादिभि र्भविष्यपुराणोक्त पौषमासोभय-नवमीकथितो मन्तव्यः।

इत्युभयनवमीव्रतम्।

---

१ D मुण्डनाशिनीम्।   २ B रविसन्निभः।

तथैव आदित्य उवाच—

कृष्णषष्ठ्यां प्रयत्नेन कृत्वा नक्तं विधानतः।
मासि मार्गशिरस्यादावंशुमानिति पूजयेत्॥
विधिवत् प्राश्य गोमूत्रमनाहारो निशि स्वपेत्।
अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः॥
[1]पौषेऽप्येवं सहस्रांशुं भानुमन्तमुशन्ति वै।

उशन्ति गच्छन्ति।

वाजपेयफलं तत्र घृतं प्राश्य लभेन्नरः।
माघे दिवाकरं नाम कृष्णषष्ठ्यां नियोजयेत्॥
निशि पीत्वा तु गोमूत्रं गोमेधफलमश्नुते।
[2]मार्त्तण्डं फाल्गुने मासि पूजयेद्भुवयेत्तिलान्॥
राजसूयस्य यज्ञस्य फलं पुण्यमवाप्नुयात्।
चैत्रे च हंसनामानं कृष्णषष्ठ्यां प्रपूजयेत्॥
शुक्लपुष्पं नरः प्राश्य अश्वमेधफलं लभेत्।
वैशाखे सूर्य्यनामानं कृष्णषष्ठ्यां प्रपूजयेत्॥
पीत्वा कुशोदकं पुण्यं जितक्रोधो जितेन्द्रियः।
महामेधस्य यज्ञस्य वैनतेय फलं लभेत्॥
ज्येष्ठे दिवस्पतिं पूज्य गवां शृङ्गोदकं पिबेत्।
गवां कोटिप्रदानस्य निखिलं फलमश्नुते॥
आषाढे त्वर्कनामानमिष्ट्वा प्राश्य च गोमयम्।
प्रयात्यर्कसलोकत्वं वर्षाणां द्विशतं विभो॥

---

१ AD पुषे। २ क्वचित् तिलैस्तु।

श्रावणेऽर्य्यमनामानं पूजयित्वा पयः पिबेत् ।
वर्षाणामयुतं साग्रं मोदते भास्करालये ॥
मासि भाद्रपदे षष्ठ्यां भास्करं नाम पूजयेत् ।
प्राशनं पञ्चगव्यस्य सर्व्वमेव फलं लभेत् ॥
गोमूत्रफलमश्नीयादश्वमेधफलं लभेत् ।
[1]मासि चाश्वयुजे षष्ठ्यां भगाख्यं नाम पूजयेत् ॥
दूर्व्वाङ्कुरं सकृत् प्राश्य राजसूयफलं लभेत् ।
मासे तु कार्त्तिके षष्ठ्यां शक्राख्यं नाम पूजयेत् ॥
गोमूत्रफलमश्नीयादश्वमेधफलं लभेत् ।
वर्षान्ते भोजयेद्विप्रान् सूर्य्यभक्तिपरायणान् ॥
पायसं मधुसंयुक्तमाज्येन सुपरिप्लुतम् ।
शक्त्या हिरण्यवासांसि शक्त्या तेभ्यो निवेदयेत् ॥
निवेदयेत्तु सूर्य्याय गाञ्च कृष्णां पयस्विनीम् ।
वर्षमेकं चरेदेवं नैरन्तर्य्येण यो नरः ॥
सर्व्वपापविनिर्मुक्तः सर्व्वकामसमन्वितः ।
मोदते सूर्य्यलोके तु स नरः शाश्वतीः समाः ॥

[2]इति स्कन्दषष्ठीव्रतम् ।

मत्स्यपुराणे—

कृष्णाष्टमीमथो वक्ष्ये सर्व्वपापप्रणाशिनीम् ।
शान्तिर्मुक्तिश्च भवति जयः पुंसां विशेषतः ॥

---

१ मूले चाश्विने देवदेवन्तु सम्राजमिति पूजयेत् ।
२ D. स्कन्दषष्ठीव्रतम् ।

शङ्करं मार्गशिरसि शम्भुं पौषेऽभिपूजयेत् ।
माघे महेश्वरं देवं महादेवञ्च फाल्गुने ॥
स्थाणुं चैत्रे शिवं तद्वद्वैशाखेऽभ्यर्चयेन्नरः ।
ज्यैष्ठे पशुपतिं[1] चार्चेदाषाढे उग्रमर्च्चयेत् ॥
पूजयेच्छ्रावणे शर्व्वं नभस्ये त्र्यम्बकं तथा ।
हरमाश्वयुजे मासि तथेशानञ्च कार्त्तिके ॥
कृष्णाष्टमीषु सर्व्वासु भक्त्या सम्पूजयेद्द्विजान् ।
गो-भू-हिरण्य-वासोभिः शिवभक्तानुपोषितः ॥
गोमूत्रघृतगोक्षीरं तिलान्सर्वं[2] कुशोदकम् ।
गोशृङ्गोद-शिरीषार्क-विल्वपत्र-दधीनि च ॥
पञ्चगव्यञ्च सम्प्राश्य शङ्करं पूजयेन्निशि ।
अश्वत्थञ्च वटञ्चैवोडुम्बरं प्लक्षमेव च ॥
पलाशं जम्बुवृक्षञ्च विदुः षष्ठं महर्षयः ।
मार्गशीर्षादिमासाभ्यां द्वाभ्यां द्वाभ्यां यथाक्रमम् ॥
एकैकं दन्तधावनं[3] वृक्षेष्वेतेषु भक्षयेत् ।
दद्यात् समाप्ते दध्यन्नं वितानध्वजचामरम् ॥
देवाय दद्याद्घण्टाञ्च कृष्णां गां कृष्णवाससी ।
कृष्णगेन्दूकवाससी इति कृत्यसमुच्चये पाठः ॥
द्विजानामामकुम्भांश्च[4] पञ्चरत्नसमन्वितान् ।
गावः कृष्णाः सुवर्णञ्च वासांसि विविधानि च ॥

---

१ AB ब्रूयात् ।
२ B तिलान् यव—
३ B—पवनं ।
४ B उदकुम्भांश्च ।

देयानीति शेषः ।

क्वचित्तु गाः कृष्णाः सुवर्णस्येति पाठः स च सुगम एव ।

आज्ञाम्तु पुनर्दद्याद्गामेकामपि भक्तितः ।
न वित्तशाठ्यं कुर्व्वीत कुर्व्वन् दोषमवाप्नुयात् ॥
कृष्णाष्टम्यामुपोष्यैवं सप्तकल्पशतत्रयम् ।
पुमान् सम्पूजितो देवैः शिवलोके महीयते ॥

इति कृष्णाष्टमीव्रतम् ।

भविष्यपुराणे— विष्णुरुवाच—

कृष्णाष्टम्यां प्रयत्नेन कृत्वा नक्तं विधानतः ।

नक्तं नक्तव्रतसंकल्पम् ।

मासि मार्गशिरे विप्र शङ्करं शिवमर्च्चयेत् ।
पीत्वा शक्त्या च गोमूत्रमनाहारो निशि स्वपेत् ॥

अनाहारो गोमूत्रातिरिक्ताहारशून्यः, एवमुत्तरत्रापि ।

अतिरात्रस्य यज्ञस्य फलमष्टगुणं लभेत् ।
एवं पौषे तु सम्पूज्य शम्भुनामानमीश्वरम् ।
कृष्णाष्टम्यां घृतं प्राश्य वाजपेयफलं लभेत् ॥
माघे महेश्वरं विप्र कृष्णाष्टम्यां प्रपूजयेत् ।
निशि पीत्वा च गोक्षीरं गोमेधफलमाप्नुयात् ॥
फाल्गुने च महादेवं सम्पूज्य प्राशयेत्तिलान् ।
राजसूयस्य यज्ञस्य फलमष्टगुणं लभेत् ॥
चैत्रे च स्थाणुनामानं कृष्णाष्टम्यां प्रपूजयेत् ।
गवाम्बु भक्षितान् प्राश्य सोऽश्वमेधफलं लभेत् ॥

वैशाखे शिवनामानं पूजयित्वा प्रयत्नतः।
रात्रौ कुशोदकं प्राश्य सर्व्वमेधफलं लभेत्॥
ज्यैष्ठे पशुपतिं पूज्य गवां शृङ्गोदकं पिबेत्।
गवां कोटिप्रदानस्य यत्फलं तदवाप्नुयात्॥
आषाढ़े चोग्रनामानमिष्ट्वा प्राश्य च गोमयम्।
वर्षाणान्तु शतं साग्रं शिवलोके महीयते॥
शम्भुन्तु श्रावणे मासि पूज्यार्कं प्राशयेन्निशि।
गोसवस्य तु यज्ञस्य फलमाप्नोति मानवः॥
त्र्यम्बकन्तु भाद्रपदे कृष्णाष्टम्यां प्रपूजयेत्।
सम्प्राश्य विल्वपत्रन्तु वाजपेयफलं लभेत्॥
मासे चाश्वयुजे प्रोक्तं प्राशनं तण्डुलोदकम्।
नाम्ना ईशं यजेद्देवं पुण्डरीकफलं लभेत्॥
मासे तु कार्त्तिकेऽष्टम्यामीशानाख्यं प्रपूजयेत्।
पञ्चगव्यं सकृत्पीत्वा पञ्चयज्ञफलं लभेत्॥
वर्षान्ते भोजयेद्विप्रान् शिवभक्तिसमन्वितान्।
पायसं मधुसंयुक्तं घृतेन सुपरिप्लुतम्॥
निवेदयेत रुद्राय गां कृष्णाञ्च पयस्विनीम्।
वर्षमेकं तथा कुर्य्यान्निरन्तर्य्येण यो नरः॥
कृष्णाष्टमीव्रतं भक्त्या तस्य पुण्यफलं शृणु।
सर्व्वपापविनिर्मुक्तः सर्व्वैश्वर्य्यसमन्वितः॥
वसेच्छिवपुरे नित्यं न चेहायाति नाकभाक्।

यद्यपि कृष्णाष्टमी न श्रुता निशाकालश्च न श्रुतः तथापि

मासे तौ बोद्धव्यौ पूर्व्वापरपरामर्षात् प्रतिमासप्राशन श्रुतफल-
स्याच गुणफलरीत्या संवत्सरफलस्याधिकारिविशेषणमिति सर्व्वं
समञ्जसम् ।

ब्रह्मपुराणे—

मार्गशीर्षस्य मासस्य प्रारम्भे प्रतिपद्यपि ।
नवसंवत्सरारम्भो देवैः कृतयुगे कृतः ॥
काश्यपेन तु कश्मीरा निर्म्मिता च सुशोभना ।
तस्मात्तत्र नरैः कार्य्यः सदा पुण्यमहोत्सवः ॥
पुष्पै र्माल्यै र्गीतवाद्यै र्मङ्गल्यै र्दृष्टशोभिभिः ।

माल्यं पुष्पमाला ।

याने रत्नैस्तथा वस्त्रैरुपयुक्तै र्नरैः सदा ।

कालिकापुराणे— अनिलाद् उवाच—

मासि मार्गशिरे प्राप्ते चन्द्रशुद्धौ शुचिः सिताम् ।
द्वितीयान्तु समासाद्य नक्तं भुञ्जीत पायसम् ॥
आचम्य च शुचिर्भूत्वा दण्डवच्छङ्करं नमेत् ।
मुदान्वितो नमस्कृत्य विज्ञाप्य संस्पृशेत्तरुम् ॥
उदुम्बरं ततो गृह्य भक्षयेद्दन्तधावनम् ।
उत्तराशागतं साद्रं सत्वचं निर्व्रणं शुभम् ॥
तृतीयायां परे चाह्नि गौरीं शम्भुं प्रपूजयेत् ।
पूजयित्वा निराहारः शङ्करं कीर्त्तयन् स्वपेत् ॥
शालिपिष्टमये कृत्वा रूपे स्त्रीपुंसयोः शुभे ।

रूपे रूपके प्रतिमे इति यावत् ।

पात्रे स्थाप्य च ते पूज्ये जागरं निशि कल्पयेत्।
विधिवत् पूजयित्वा तु हरं स्नाप्य घृतादिभिः॥
प्रभाते ते गृहीत्वा तु पुष्पं तस्मै निवेदयेत्।

तस्मै हराय।

आचार्य्यं पूजयेद्भक्त्या लिङ्गिनश्च तथा द्विजान्।
दाम्पत्यानि च तत्रैव शक्त्या तांश्चापि दद्यात्॥
प्रतिमासञ्च कुर्व्वीत विधिनानेन सर्व्वतः।
कार्त्तिकान्ते ततो मासि मार्गशीर्षे समुद्यते॥
नामान्यतः प्रवक्ष्यामि प्रतिमासं क्रमाच्छृणु।

अतो मार्गशिरसः परं, मार्गशीर्षे तु शम्भुं गौरीं वेति नामनी प्रथमत एव कथिते।

पूजाजपनिमित्तञ्च सिद्ध्यर्थं चिन्तितस्य च॥
एवं पौषे तु सम्प्राप्ते गिरीशं पार्व्वतीं तथा।
अर्च्चां जप्य चतुर्थ्याञ्च पञ्चगव्यं ततः पिबेत्॥
भवञ्चैव भवानीञ्च माघे नित्यं प्रपूजयेत्।
फाल्गुने च महादेवमुमया सहितं विभुम्॥
ललितां शङ्करं देवं चैत्रे मासि प्रपूजयेत्।
स्थाणुञ्चैव हि वैशाखे लोकमात्रा समं यजेत्॥
रुद्राण्या सह रुद्रञ्च ज्यैष्ठे मासि प्रपूजयेत्।
आषाढ़े पशुनाथञ्च शच्या सहस्रलोचनम्॥
नीलकण्ठं श्रावणे च सुनन्दाञ्च समर्च्चयेत्।
भीमं भाद्रपदे मासि कालरात्र्या समं विभुम्॥

शिवमाश्वयुजे देवं दुर्गया सार्द्धमर्चयेत् ।
ईशानं कार्त्तिके मासि शिवादेवीयुतं विभुम् ॥
जपध्यानार्चनादौ च नामान्येतानि सुव्रत ।
कृतानि नामरूपाणि विना चैतैरसिद्धिभाक् ॥
प्रतिमासन्तु पुष्पाणि अर्च्चायां विनियोजयेत् ।
तानि क्रमात् प्रवच्यामि सद्यस्तुष्टिकराणि च ॥
आद्ये नीलोत्पलं योज्यं तदभावे पराणि वै ।
पद्माणि च सुगन्धीनि योजयेत् भक्तितोऽर्चने ॥
करवीरं विल्वपत्रं किंशुकं कुरुमल्लिकाम् ।

कुरुशब्दः कुरुकण्टकपरः ।

पाटलाञ्च कदम्बञ्च तगरं द्रोण मालतीम् ।
वस्त्रान्ते वितानञ्च ध्वजं घण्टाञ्च दीपिकाम् ॥
धूमोत्क्षेपं युगं श्लक्ष्णं शङ्कराय निवेदयेत् ।

युगं वस्त्रयुगम् ।

स्नापयित्वार्चयित्वा तु सौवर्णं प्रचुरं न्यसेत् ।
रूपयुग्मं ततो दद्यात् शालिपिष्टमयञ्च यत् ॥

रूपयुग्मं पूर्व्वोक्तस्त्रीपुंसप्रतिमायुग्मम् ।

नैवेद्यञ्च बलिञ्चैव संयोज्य विधिवच्छिवे ।
कुर्य्यान्नीराजनं शम्भोस्ततो गच्छेद्गृहं स्वकम् ॥
चतुरस्रं महादेवमुमाञ्चैव त्रिकोणिकाम् ।
ध्यात्वाचार्य्याय तद्युग्मं मौक्तिकादियुतं ददेत् ॥
व्रतिनो भोजयेत् पश्चात् द्वादशैव द्विजोत्तमान् ।

मिथुनानि तथा ब्रह्मन् भोज्य भक्त्या तु दर्पयेत् ॥
कर्षैकैकप्रमाणेन शातकुम्भमयं शुभम् ।
शातकुम्भमयं तद्युग्ममित्यन्वयः ॥
[1]मौक्तिकानां चतुःषष्टिं प्रवालकचतुष्टयम् ।
तावन्ति पुष्परागाणि ताम्ररूपाणि चैव हि ॥
एतान् समग्रान् सम्भारान् वस्त्रयुग्मोपरि न्यसेत् ।
चत्वारिंशतमष्टौ वा कुम्भांश्चोपानहौ तथा ॥
मद्दिरष्याचताम् दद्यात् पुष्पोदकसमन्विताम्
दीनार्त्तदुःखितानाञ्च तद्दिने चानिवारितम् ।
कल्पयेदन्नदानञ्च आनन्त्यं[2] शक्तितो बुधः ॥
न्यूनाधिकं न कर्त्तव्यं स्ववित्तपरिमाणतः ।
पूरयेत् कल्पनायैव (?) वित्तशाठ्यं न कारयेत् ॥

इत्यवियोगव्रतम् ।

भविष्यपुराणे— सुमन्तुरुवाच—
प्राप्ते मार्गशिरे मासि शुक्लषष्ठ्यान्तु यो भवेत् ।
स ज्ञेयः कामदो वारः सदेष्टो भास्करस्य तु ॥
तत्र यः पूजयेद्भानुं भक्त्या श्रद्धासमन्वितः ।
स मुक्तः सर्व्वपापेभ्यः प्राप्नुते चण्डदीधितिम् ॥
रक्तचन्दनमिश्राणि करवीराणि सुव्रत ।
धूपं घृताक्ततिं वीर भास्कराय प्रयोजयेत् ॥

---

१ D—मौक्तिकानि।     २ D चनेकम्।

घृताहुतिं धूपं घृतप्रक्षेपोद्भवं धूपमित्यर्थः।

नैवेद्यञ्चापि कासारं सुगन्धिं तीक्ष्णमेव च।

कासारं कंसार इति प्रसिद्धं पक्वान्नविशेषम्।

कृत्वोपवासमथवा नक्तं त्रिपुरसूदन॥

इत्थं प्रपूजितो ह्यत्र भास्करो लोकभास्करः।

ददाति विपुलान् भोगानतोऽयं कामदः स्मृतः॥

स पुत्रं पुत्रकामेभ्यो धनकामाय वै धनम्।

विद्यार्थिने शुभां विद्यामारोग्यं रोगिणे प्रभुः॥

अस्याश्च विविधान् भोगान् तत्र सम्पूजितो विधिः।

तत्रैव ब्रह्मोवाच।

या तु मार्गशिरे मासि शुक्लपक्षे तु सप्तमी।

नन्दा सा कथिता वीर सर्व्वानन्दकरी शुभा॥

पञ्चम्यामेकभक्तञ्च षष्ठ्यां नक्तं प्रकीर्त्तितम्।

सप्तम्यामुपवासन्तु कीर्त्तयन्ति मनीषिणः॥

पावनान्यत्र वै त्रीणि ऊशन्ति वै मनीषिणः।

मालतीकुसुमानीह सुगन्धं चन्दनं तथा॥

कर्पूरागुरुसम्मिश्रधूपञ्चात्र विनिर्द्दिशेत्।

दध्योदनं सखण्डन्तु नैवेद्यं भास्करप्रियम्॥

तदेव दद्याद्विप्रेभ्यस्त्वाश्नीयाच्च स्वयं तथा।

एवञ्चतुर्ष्वपि मार्गशिरः-पौष-माघ-फाल्गुनेषु, पुष्पं मालत्याः कर्पूरादिर्धूपः सखण्डदध्योदनं नैवेद्यं पारणमपि तेनैव।

पूजार्थं भास्करस्येह प्रथमे पारणे विधिः।

चैत्रादिचतुष्टये विधिमाह—

पलाशपुष्पाणि विभो यक्षचन्दनमेव च ।

एतत् परिभाषयति—

कर्पूरश्चन्दनं कुष्ठमुशीरं सिन्धु(ह्ल)कन्तथा ।

सग्रन्थि वृषणं भीमं कुङ्कुमं रञ्जनं तथा ।

हरीतकी तथा भीम एष यक्षाङ्क उच्यते ॥

एतद्यक्षं चन्दनमुच्यते इत्यर्थः । तदिदमनुलेपनम् ।

धूपश्चाह—

धूपं प्रबोधमादिष्टं नैवेद्यं खण्डखाद्यकाः ।

प्रबोधधूपं परिभाषयति—

कृष्णागुरुं सिन्धू(ह्ल)कञ्च वालकं वृषपान्तथा ।

चन्दनं तगरं मुस्तं प्रबोधं शर्करान्वितम् ॥

प्रबोधं धूपमाहुरिति शेषः । खण्डखाद्यकाः खण्डनिर्मित-खाद्यानि ।

भोजयेद्ब्राह्मणांश्चापि खण्डखाद्यैर्गणाधिप ।

निम्बपत्रन्तु सम्प्राश्य ततो भुञ्जीत वाग्यतः ॥

पारणस्य द्वितीयस्य विधिरेष प्रकीर्त्तितः ।

श्रावणादिचतुष्टये—

नीलोत्पलानि शुभ्राणि धूपं गुग्गुलुमाहरेत् ।

शुभ्राण्युत्पलान्येव ।

नैवेद्यं पायसमुपकान् प्रीतये भास्करस्य च ।

विलेपनञ्चन्दनञ्च प्राशनं विल्वमुच्यते ।

तृतीयस्यापि ते वीर कथितो विधिरुत्तमः ॥

तृतीयस्य पारणस्य ।

प्रष्टण् देवस्य नामानि पावनानि नृणां सदा ।

विष्णुर्भगस्तथा धाता प्रीयतामुच्चरेद्वचः ॥

तेन विष्णुः प्रीयतामिति प्रथमे चतुर्मासे, द्वितीये भगः प्रीयतामिति, धाता मे प्रीयतामिति तृतीये क्रमेण वाचो भवन्ति ।

अनेन विधिना यस्तु कुर्य्यान्नन्दां नरः सदा ।

स कामानिह सम्प्राप्य विधातारमवाप्नुयात् ॥

सदा स कामान् सम्प्राप्येत्यन्वयः । आदरद्योतनाय वा सदेति काम्यत्वस्यैर्य्यात् ।

पुत्रकामो लभेत् पुत्रान् धनकामो लभेद्धनम् ।

विद्यार्थी प्राप्नुयाद्विद्यां यशस्कामो यशस्तथा ॥

सर्व्वान् कामांस्तथा प्राप्य तदन्ते शाश्वतीः समाः ।

ततः सूर्य्यसदो गत्वा नन्दते नन्दिवर्द्धनः ॥

सूर्य्यसदः सूर्य्यसभाम् ।

इत्येषानन्दजननी नन्दा ख्याता मया द्विज ।

यामुपोष्य नरः श्रुत्वा नन्दते कमवाप्य वै ॥

कं स्वर्गम् ।

विष्णुरुवाच—

कुले जन्म तथारोग्यं धनर्द्धिश्चेह दुर्लभा ।

चितयं प्राप्यते येन तन्मे गद जगत्पते ॥

ब्रह्मोवाच—

यो मार्गशीर्षे सितसप्तमेऽह्नि
हस्तर्क्षयोगे जगतः प्रसूतिम् ।
सम्पूज्य भानुं विधिनोपवासी
स्रग्गन्धधूपान्नवरोपहारैः ॥
प्रश्नीत यः प्राशन-पूजनादि
दानादियुक्तं व्रतमब्दमेकम् ।
दद्याच्च दानं द्विजपुङ्गवेभ्य-
स्तं कथ्यमानं विनिबोध वीर ॥
वस्त्रं यवान् व्रीहियवं हिरण्यं
यवान्नमम्भः करकान्नपात्रम्[१] ।
क्षत्रं पयोऽन्नं गुड़फाणिताढ्यम्
दद्यात्तथा वस्त्रमनुक्रमेण ॥
यद्येकयव्ये विधिनोदितेन
तस्यां तिथौ लोकगुरुं प्रपूज्य ।

यव्यो मासः, वस्त्रं हतं गुड़ा व्यञ्जनानि फाणितं कथितेक्षुरस-सिद्धं द्रवद्रव्यम् ॥

प्रश्नीत यस्यात्मविशुद्धिहेतोः
संप्राशनानीह निबोध तानि ॥
गोमूत्रमम्भो हतमामशाकं

१ B धान्यानि चाम्भः...... पानम्।

दूर्व्वां दधिक्षीद्धियवांस्तिलांश्च ।
सूर्य्यांशुतप्तं जलमम्बुजानि
चीरञ्च मासक्रमशोपयुज्य[1] ॥
कुले प्रधाने धनधान्यपूर्णे
पद्मावृते ध्वस्तसमस्तदुःखे ।
प्राप्नोति जन्माविकलेन्द्रियश्च
भवत्यरोगी मतिमान् सुखी च ॥

पद्मावृते लक्ष्म्यावृते ।

इति चितयप्रदा नाम सप्तमी ॥

ब्रह्मपुराणे—

यद्विष्णोर्द्दक्षिणं नेत्रं तद्देवाकृतिमत् पुनः ।
अदितेः कश्यपाज्जज्ञे मित्रो नाम दिवाकरः ॥
मार्गशीर्षस्य मासस्य शुक्लपक्षे शुभे तिथौ ।
सप्तम्यां तेन सा ख्याता लोकेऽस्मिन् मित्रसप्तमी ॥
षष्ठ्यान्तु स्नपनं कार्य्यं तस्मै मित्राय भानवे ।
यथा विष्णोः प्रबोधे तु क्रियते सर्व्वसम्पदा ॥

यथा विष्णोरित्यनेन कार्त्तिकशुक्लैकादश्युक्त विष्णुस्नानीय-द्रव्यातिदेशः ।

तत्रोपवासः कर्त्तव्यो भक्ष्याण्यथ फलानि च ।
रात्रिजागरणं कार्य्यं नृत्यगीतपुरःसरम् ॥

---

१ मूले क्रमशोऽपि योज्यम् ।

सप्तम्यां स्नपनं कृत्वा ततः स्नात्वा यजेद्धविम् ।
नानाकुसुमसम्भारै र्भक्ष्यैः पिष्टमयैः शुभैः ॥
मधुना च प्रभूतेन होमजप्य समाधिभिः ।
ब्राह्मणांस्तर्पयेत् पश्चाद्दीनानाथांश्च मानवान् ॥
अष्टम्यां संविभज्याथ तथाच नट नर्त्तकान् ।
दिनद्वये च भोक्तव्यं पैष्टमन्नं मधुप्लुतम् ॥

मित्रसप्तमीव्रतमित्युपसंहारेण कृत्यसमुच्चये भूपालोऽस्या व्रतत्वं मन्यते ।

वराहपुराणे— अगस्त्य उवाच—

एकादश्यान्तु यत्नेन नक्तं कुर्याद्यथाविधि ।
मार्गशीर्षे च शुक्लादौ आरभ्याब्दं विचक्षणः ।
तद्व्रतं धनदस्येष्टं कृतं वित्तं प्रयच्छति ॥

शुक्लैकादश्यामारभ्याब्दं कुर्यादित्यन्वयः ।

नरसिंहपुराणे—

उपवासो मुनिश्रेष्ठ एकादश्यां विधीयते ।
नरसिंहं समभ्यर्च्य सर्व्वपापैः प्रमुच्यते ॥

एतद्व्रतं शुक्लैकादश्यामेकदिनसमाप्यमेव वदन्ति । तथापि प्रसङ्गादिह लिखितम् ।

विष्णुः—

मार्गशीर्षे शुक्लैकादश्यामुपोषितो द्वादश्यां भगवन्तं वासुदेवमर्चयेत् । पुष्पधूपानुलेपननैवेद्यैर्बह्निब्राह्मणतर्पणैः तमेतत् संवत्सरं कृत्वा पापेभ्यः पूतो भवति यावज्जीवं कृत्वा श्वेतद्वीपमवाप्नोति

उभयद्वादशीष्वेवं संवत्सरेण स्वर्गमवाप्नोति यावज्जीवं कृत्वा विष्णुलोकमेवं पक्षद्वादशीष्वपि।

ब्रह्मभूतममावस्यां पौर्णमास्यान्तथैव च।
योगभूत परिचरन् केशवं महदाप्नुयात्॥

ब्रह्मपुराणे सत्यतपा उवाच—

कोऽसौ धरण्यां सञ्चीर्ण उपवासो महामुने!।
कानि व्रतानि च तथा एतन्मे वक्तुमर्हसि॥

दुर्वासा उवाच—

मार्गस्य शुक्लपक्षे तु दशम्यान्नियतात्मवान्।
स्नात्वा देवार्चनं कृत्वा अग्निकार्य्यं यथाविधि॥
शुचिवासाः प्रसन्नात्मा हव्यं चान्नं सुसंस्कृतम्।
भुक्त्वा पञ्चपदं गत्वा पुनः शौचञ्च पादयोः॥
कृत्वाऽष्टाङ्गुलमानन्तु क्षीरवृक्षसमुद्भवम्।
भक्षयेद्दन्तकाष्ठन्तु ततश्चाचम्य यत्नतः॥
स्पृष्ट्वाङ्गानि तथाद्भिश्च चिरं ध्यात्वा जनार्द्दनम्।
शङ्खचक्रगदापाणिं पीतवासः[१]-किरीटिनम्॥
प्रसन्नवदनं देवं सर्व्वलक्षणलक्षितम्।
ध्यात्वा जलं गृहीत्वा तु भानुरूपं जनार्द्दनम्॥
[२]दत्वार्घम् पारयः पश्चात् करतोयेन मानवः।
एवमुच्चारयेद्वाचं तस्मिन् काले महामुने॥

---

१ B वस्त्रम्। २ A हस्तार्घं।

एकादश्यां निराहारो भूत्वाऽहनि परे त्वहम् ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ॥
एवमुक्त्वा ततो रात्रौ देवदेवस्य सन्निधौ ।
जपन्नारायणायेति क्षपेत्तत्र विधानतः ॥
ततः प्रभाते विमले नदीं गत्वा समुद्रगाम् ।
इतरां वा तड़ागं वा गृहे वा नियतात्मवान् ॥
आनीय मृत्तिकां शुद्धां मन्त्रेणानेन मानवः ।
धारणं पोषणं त्वत्तो भूतानां देवि सर्व्वदा ॥
तेन सत्येन मां देवि पापान्मोचय मृत्तिके ।
ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ॥
भवन्ति भूतानि यतो मृत्तिकामालभेत्ततः ।
त्वयि सर्व्वे वशा नित्यं स्थिता वरुण सर्व्वदा ।
तेनेमां मृत्तिकां प्राप्य मां पूतं कुरु मा चिरम् ॥
एवं मृदं रविं तोयं प्रसाद्यात्मानमालभेत् ॥
त्रिः कृत्वा शेषमृदया कुण्डमालिख्य वै जले ।
ततः स्नात्वा नरः सम्यक् मन्त्रवच्चोपचारतः[१] ॥
स्नात्वा चावश्यकं कृत्वा पुनर्देवगृहं व्रजेत् ।
तत्राराध्य महायोगं देवं नारायणं विभुम् ॥
केशवाय नमः पादौ कटिं दामोदराय च ।
जानुभ्यां नरसिंहाय ऊरू श्रीवत्सधारिणे ॥

---

१ AD चक्रवर्त्त्युपचारतः ।

कण्ठं कौस्तुभनाथाय वक्षः श्रीपतये तथा।
त्रैलोक्यविजयायेति बाहू सर्व्वात्मने शिरः॥
रथाङ्गधारिणे चक्रं शङ्करायेति वारिजम्।

वारिजं शङ्खम्।

गम्भीरायेति च गदां पङ्कजं शान्तमूर्त्तये।
एवमभ्यर्च्य देवेशं देवं नारायणं प्रभुम्॥
पुनस्तस्याग्रतः कुम्भांश्चतुरः स्थापयेद्बुधः।
जलपूर्णान् समाल्यांश्च सितचन्दनलेपितान्॥
चतुर्भिस्तिलपात्रैस्तु स्थगितान् रत्नगर्भिणः।
चत्वारस्ते समुद्रास्तु कलशाः परिकीर्त्तिताः॥
तेषां मध्ये शुभं पीठं स्थापयेद्वस्त्रसंवृतम्।
तस्मिंश्च रौप्यं सौवर्णं ताम्रं वा दारवन्तथा॥
अलाभतस्तोयपूर्णं कृत्वा पात्रं ततो न्यसेत्।

अलाभतः सौवर्णादीनामभावे दारवमपि कुर्य्यादित्यर्थः।

सौवर्णं मत्स्यरूपेण कृत्वा देवं जनार्द्दनम्।
वेदवेदाङ्गसंयुक्तं श्रुतिस्मृतिविभूषणम्॥
तत्रानेकविधैर्भक्ष्यैः फलैः पुष्पैश्च शोभितम्।
गन्धैर्धूपैश्च मन्त्रैश्च अर्च्चयित्वा यथाविधि॥
रसातलगता वेदा यथा देव त्वयाहृताः।
मत्स्यरूपेण तस्मान्मां भवानुद्धर केशव॥
एवमुच्चार्य्य तस्याग्रे जागरं तत्र कारयेत्।
यथाविभवसारेण प्रभाते विमले तथा।

यथाविभवसारेण यथावित्तानुसारेण ।

चतुर्णां ब्राह्मणानाञ्च चतुरो दापयेद्घटान् ।
पूर्व्वञ्च बह्वृचे दद्यात् छन्दोगे दक्षिणन्तथा ॥
यजुःशाखान्विते दद्यात् पश्चिमं घटमुत्तमम् ।
उत्तरं कामतो दद्यादेष एव विधिः स्मृतः ॥
ऋग्वेदः प्रीयतां पूर्व्वं सामवेदस्तु दक्षिणे ।
पश्चिमे तु यजुर्व्वेदोऽथर्व्ववेदस्तथोत्तरे ॥
ताम्रपात्रैस्तु सतिलैः स्थगितान् कारयेद्घटान् ।
ततस्तं जलपात्रस्थं ब्राह्मणाय कुटुम्बिने ॥
दद्याद्देवं महाभाग ततः पश्चात्तु भोजयेत् ।
ब्राह्मणान् पायसेनाग्र्यान् ततः पश्चात् स्वयं नरः ॥
भुञ्जीत सहितो भृत्यैर्वाग्यतः संयतेन्द्रियः ।
यः सकृद्द्वादशीमेतां करोति विधिवन्मुने ॥
स ब्रह्मलोकमाप्नोति तत्कालञ्चैव तिष्ठति ।
ततो ब्रह्मोपसंहारे तल्लयस्तिष्ठते चिरम् ॥
पुनःसृष्टौ भवेद्देवो वैराजो नाम नामतः ।
ब्रह्महत्यादिपापानि इह लोके कृतान्यपि ॥
अकामतः कामतो वा तानि नश्यन्ति तत्क्षणात् ।
इह लोके दरिद्रो वा भ्रष्टराज्योऽथवा नृपः ॥
उपोष्य तु विधानेन मेश्वरो राज्यभाक् भवेत् ।

मेश्वरो लक्ष्मीश्वरः ।

वन्ध्या नारी भवेद्या तु अनेन विधिना शुभा ॥

उपोष्य तु भवेत्तस्याः पुत्रः परमधार्म्मिकः ।
अगम्यागमनं येन जानताऽजानता कृतम् ॥
स इमं विधिमास्थाय तस्मात् पापाद्विमुच्यते ।
ब्रह्मक्रियाया लोपेन बहुवर्षकृतेन च ॥
उपोष्येमां सकृद्ब्रह्मा वेदसंस्कारमाप्नुयात् ।
किञ्चात्र बहुनोक्तेन न तदस्ति महामुने ॥
प्राप्यं वा प्राप्यते नैव पापं वा यन्न नश्यति ।
अदीक्षिताय नो देयं विधानं नास्तिकाय च ॥
वेददेवद्विषे वापि न श्राव्यन्तु कदाचन ।
गुरुभक्ताय दातव्यं सर्व्वपापप्रणाशनम् ॥
इह जन्मनि वैराग्यं धनधान्यं वरस्त्रियः ।
भवन्ति विविधा यस्तु उपोष्यति विधानतः ॥

इति मत्स्यद्वादशीव्रतम् ।

---

मत्स्यपुराणे— नारद उवाच—

भगवन् भूतभव्येश तथान्यदपि यद्व्रतम् ।
भुक्तिमुक्तिफलोपायं तत् पुनर्वक्तुमर्हसि ॥
एवमुक्तोऽब्रवीच्छम्भुर्नारदं तपसां निधिम्[१] ।
मत्समस्तपसा ब्रह्मन् पुराणश्रुतिवत्सलः ॥
धर्म्मोऽयं वृषरूपेण नाम्ना नन्दीश्वरो विभुः ।
धर्म्मान् माहेश्वरान् वक्ष्यत्यतःप्रभृति नारद ॥

१ मूले श्वयं वाङ्मयपारगः ।

इत्युक्त्वा देवदेवेशस्तत्रैवान्तरधीयत ।
नारदोऽपि हि शुश्रूषुरपृच्छन्नन्दिकेश्वरम् ॥
आदिष्टस्त्वं शिवेनेह वद माहेश्वरं व्रतम् ।

नन्दिकेश्वर उवाच—

शृणुष्वावहितो ब्रह्मन् वक्ष्ये माहेश्वरं व्रतम् ।
त्रिषु लोकेषु विख्याता नाम्ना शिवचतुर्द्दशी ॥
मार्गशीर्षे त्रयोदश्यां सितायामेकभोजनः ।
[1]प्रार्थयद्देवदेवेश त्वामहं शरणङ्गतः ॥
चतुर्द्दश्यां निराहारः समभ्यर्च्य च शङ्करम् ।
सुवर्णं वृषभं दत्वा भोक्ष्येऽहमपरेऽहनि ॥
एवं नियमकृत् सुप्त्वा प्रातरुत्थाय मानवः ।
कृतस्नानजपः पश्चादुमया सह शङ्करम् ॥
पूजयेत् कमलैः शुक्लै र्गन्धधूपानुलेपनैः ।
पादौ नमः शिवायेति शिरः सर्व्वात्मने नमः ॥
[2]ललाटन्तु त्रिनेत्राय नेत्राणि हरये नमः ।
मुखमिन्दुमुखायेति श्रीकण्ठायेति कन्धराम् ॥
सद्योजाताय कर्णौ तु वामदेवाय वै भुजौ ।
[3]स्तनौ तत्पुरुषायेति तथेशानाय चोदरम् ॥

---

१ B पूजयेत् ।  २ B त्रिनेत्रायेति नेत्राणि ललाटं हरये नमः ।
३ B पुस्तके स्तनावित्यादिपङ्क्तिस्थाने । उरू चानन्तवैराग्यसिंहायेति प्रपूजयेत् ।
इत्यधिकः ।

अघोरहृदयायेति हृदयञ्चाभिपूजयेत् ।
अनन्तैश्वर्य्यनाथाय जानुनी पूजयेद्बुधः ॥
पार्श्वौ चानन्तधर्म्माय ज्ञानभूताय वै कटिम् ।
प्रधानाय नमो जङ्घे गुल्फौ व्योमात्मने नमः ॥
व्योमकेशात्मरूपाय केशान् पृष्ठञ्च पूजयेत् ।
ततस्तु वृषभं हैमसुदकुम्भसमन्वितम् ॥
शुक्लमाल्याम्बरधरं पञ्चरत्नसमन्वितम् ।
भक्ष्यैर्नानाविधैर्युक्तं ब्राह्मणाय निवेदयेत् ॥
प्रीयतां देवदेवोऽच सद्योजातः पिनाकधृक् ।
ततस्तु विप्रानन्नेन तर्पयेच्छक्तितः शुभान् ॥
पृषदाज्यन्तु सम्प्राश्य स्वपेद्भूमावुदङ्मुखः ।
पञ्चदश्यान्ततः पूज्य विप्रान् भुञ्जीत वाग्यतः ॥
तद्वत् कृष्णचतुर्द्दश्यामेतत् सर्व्वं समाचरेत् ।
चतुर्द्दशीषु सर्व्वासु कुर्य्यात् पूर्व्ववदर्च्चनम् ॥
ये तु मासे विशेषाः स्युः[१] तान्निबोध क्रमादिह ।
मार्गशीर्षादिमासे तु क्रमादेतदुदीरयेत् ॥
शङ्कराय नमस्तुभ्यं नमस्ते करवीरक ।
त्र्यम्बकाय नमस्तेऽस्तु महेश्वर ततःपरम् ॥
नमः पशुपते नाथ नमस्ते शम्भवे पुनः ।
नमस्ते परमानन्द नमः सोमार्द्धधारिणे ॥

---

१ क्वचित् मासविशेषास्तु ।

नमो भीमाय इत्येवं त्वामहं शरणङ्गतः ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥
पञ्चगव्यं तथा बिल्वं यव्यं गोशृङ्गवारि च[1] ।
तिलाश्च कृष्णा विधिवत् प्राशनं क्रमशः स्मृतम् ॥
प्रतिमासञ्चतुर्द्दश्यामेकैकं प्राशनं स्मृतम् ।
मन्दारैर्मालतीभिश्च तथा धुस्तूरकैरपि ॥
सिन्धुवारैरशोकैश्च मल्लिकाभिः सपाटलैः ।
अर्कपुष्पैः कदम्बैश्च शतपत्रा तथोत्पलैः ॥
एकैकेन चतुर्द्दश्यामर्च्चयेत् पार्व्वतीपतिम् ।
पुनश्च कार्त्तिके मासि सम्प्राप्ते तर्पयेद्द्विजान् ॥
अन्नैर्नानाविधैर्भक्ष्यै र्वस्त्रमाल्यविभूषणैः ।
कृत्वा नीलवृषोत्सर्गं श्रुत्युक्तविधिना नरः ॥
उमामहेश्वरं हैमं वृषभञ्च गवा सह ।
मुक्ताफलाष्टकयुतं सितनेत्रपटान्वितम् ॥
सर्व्वोपस्करसंयुक्तां शय्यां दद्यात् सकुम्भिकाम्[2] ।
ताम्रपात्रोपरि पुनः शालितण्डुलसंयुताम् ॥
स्थाप्य विप्राय शान्ताय वेदविद्प्रवराय[3] वै ।
ज्येष्ठसामविदे देयं न वकव्रतिने क्वचित् ॥
गुणज्ञे श्रोत्रिये दद्यादाचार्य्ये तत्त्ववेदिनि ।
अव्यङ्गाय च सौम्याय सदा कल्याणकारिणे ॥

---

१ D कर्पूरञ्चागुरुं यवान् । क्वचित् पञ्चगोशृङ्गवारि च ।

२ B सकुम्भकाम् । ३ मूले वेदव्रतपराय च ।

सपत्नीकाय सम्पूज्य माल्यवस्त्रविभूषणैः ।
गुरौ सति गुरौ देयं तदभावे द्विजातये ॥
वित्तशाठ्यं न कुर्व्वीत कुर्व्वन् दोषात् पतत्यधः ।
अनेन विधिना यस्तु कुर्य्याच्छिवचतुर्द्दशीम् ॥
सोऽश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ।
ब्रह्महत्यादिकं किञ्चिदिह चामुत्र वा कृतम् ॥
पितृभिर्मातृभिर्वापि तत्सर्व्वं नाशमाप्नुयात् ।
दीर्घायुरारोग्य कुलाभि(न्न)वृद्धि-
रत्राचयाऽमुत्र चतुर्भुजत्वम् ।
गणाधिपत्यं दिवि कल्पकोटि-
शतं वसित्वा पदमेति शम्भोः ॥
न वृहस्पतिरप्यलं तदस्याः[1]
फलमिन्द्रोऽपि पितामहो न वक्तुम् ।
न च सिद्धगणोऽप्यलं न चाहम्
यदि जिह्वायुतकोटयोऽपि वक्त्रे[2] ॥
भवत्यमरवल्लभः पठति यः स्मरेद्वा
शृणोत्यपि विमत्सरः सकलपापनिर्म्मोचनीम् ।
इमां शिवचतुर्द्दशीममरकामिनीकोटयः
स्तुवन्ति तमनिन्दितम् किमु समाचरेद् यः सदा ॥
या वाथ नारी कुरुतेऽतिभक्त्या
भर्त्तारमापृच्छ्य गुरुं सुतं वा ।

१ B चत्स्यास्याः ।    २ मूले वक्तुम् ।

सापि प्रसादात् परमेश्वरस्य
परं पदं याति पिनाकपाणेः॥
इति शिवचतुर्द्दशीव्रतम्।

---

ब्रह्मपुराणे—

वामनेत्वन्तु यद्विष्णोस्तदेव भुवनत्रयम्।
अनसूयात्मजश्चन्द्रस्त्वमृतेनाभ्यषेचयत्॥
पौर्णमास्यान्तु तस्मात्तं पूजयेत्तत्र सर्व्वदा।
शुक्लैः पुष्पैश्च पयसां नैवेद्यैः[1] श्रद्धयान्वितः॥
रत्नैर्दीपैश्च बलिभिर्होमैर्ब्राह्मणतर्पणैः।
गोभ्यश्च लवणं देयं तस्मिन्नहनि सर्व्वदा॥
तस्मात्तल्लवणं चन्द्राद्गव्यापादिनिःसृतम्।
माता स्वसा च दुहिता पूज्याश्च स्वकुलाङ्गनाः॥
रक्तवस्त्रद्वयेनैव सदृशेन नवेन च।
रूपसत्रन्तु विधिवत् कर्त्तव्यं तत्र सद्द्विजैः॥
कान्तं रूपं भवेत् स्त्रीणां पूर्णेन्दोः पूजनादिति।
कौड़न्याकाशगङ्गायामष्टमेवाभवत् मणिः॥ (?)
गजेन्द्राः कुमुदाद्याश्च करैस्तज्जाम्बुजलम्।
गृहीत्वा प्रतिमुञ्चन्ति सूत्कारे दक्षिणामुखैः॥
श्रुष्टाः पुष्णोऽम्बुपातैश्च सामीप्यात् सूर्य्यरश्मिभिः।
सम्यक् स्वदेहशान्त्यर्थं दाहस्य शमनाय च॥

---

1 B विकारैः।

महाप्रतापाग्निभसः पतमानन्तु तज्जलम् ।
वायुना ध्मायमानन्तु स्थानलमुपगच्छति ॥
तत्पुण्यं हिमवत्सानौ पतते च यदा हिमम् ।
प्रथमं तत्र सम्पूज्यो हिमवान् शिशिरस्तथा ॥
हेमन्तश्च तथा नागो नीलो नीलाञ्जनसन्निभः ।
स्थाननागश्च सम्पूज्यः फलैः पत्रैर्नमेरुजैः ॥
वकपुष्पाणि देयानि धूपो गुग्गुलुसम्भवः ।
मध्वाज्यतिलसम्मिश्रं पितृभ्यश्च हिमं बहु ॥
यस्मिन् देशे हिमं न स्यात् तत्र ब्रूयाद्धिमं हिमम् ।
घृतान्नं ब्राह्मणेभ्यश्च देयं माषौदनं तथा ॥
उत्सवश्च तथा कार्य्यो गीतनृत्यसमाकुलः ।
विशेषतस्च भोक्तव्यं मनोज्ञं भोजनं शुभम् ॥
श्यामा देवी पूजितव्या पुष्पधूपानुलेपनैः ।
अन्नैर्भक्ष्यैः फलैर्मूलैः स्वनुलिप्तैः स्वलङ्कृतैः ॥
हिमोपरि निविष्टैश्च गुरुप्रावरणाम्बरैः ।
पुत्रभृत्याप्तसम्बन्धिसहितैश्च यथासुखम् ॥
भोज्यं विशेषवत् कार्य्यं श्रोतव्यं गीतवादितम् ।
द्रष्टव्यं पुंश्चलीनृत्यं पूजनीयास्तथा स्त्रियः ॥
नवञ्च मद्यं पातव्यं मद्यपैश्च यथाक्रमम् ।

इति हिमपूजा ।

---

मत्स्यपुराणे—

यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च।
वसिष्ठायाग्निना प्रोक्तमाग्नेयं तत् प्रचक्षते॥
लेखयित्वा यो दद्याद्धैमपद्मसमन्वितम्।
मार्गशीर्ष्यां विधानेन तिलप्रस्थयुतन्तथा॥
तच्च षोडशसाहस्रं सर्व्वक्रतुफलप्रदम्।

विष्णुधर्म्मोत्तरे—

मार्गशीर्षे तथा मासे पूर्णे शिशिरदीधितौ।
महाराजनरङ्गेन कुसुम्भरञ्जितेन वा॥
आसाद्य कांस्यपात्रस्थं प्रस्थं कृत्वा समाहितः।
लवणस्य तु मुख्यस्य चूर्णितस्य द्विजोत्तमाः॥
प्रस्थो द्वात्रिंशत्पलानि, मुख्यस्य च हविष्यस्य।
दत्वा सुवर्णनाभन्तु तस्मिन्नेव द्विजातये॥
सौभाग्यरूपलावण्ययुक्तो भवति मानवः।

सुवर्णनाभं मध्यन्यस्तसुवर्णं कौसुम्भवस्त्रेण शाह्मणमाच्छाद्य कांस्यपात्रे चूर्णितसैन्धवप्रस्थं निधाय तन्मध्ये सुवर्णं दत्वाऽभ्यर्च्य दद्यादित्यर्थः।

सर्पाणामित्यनुवृत्तौ मत्स्यपुराणे—

कार्य्यः प्रत्यवरोहस्तु मार्गशीर्ष्यां न संशयः।

विष्णुः—

मार्गशीर्षे शुक्लपञ्चदश्यां मृगशिरोयुक्तायां चूर्णितलवणस्य

सुवर्णनाभं प्रस्थमेकं ब्राह्मणाय चन्द्रोदये प्रतिपादयेत् । अनेन कर्म्मणा रूपसौभाग्यमभिजायते ।

सुवर्णनाभं सुवर्णगर्भम् । प्रस्थः षोड़शपलानि, द्वादश प्रसृतिः सेतिः तच्चतुष्टयं प्रस्थ इति वा ।

वसिष्ठः—

श्रावण्याग्रहायण्योरष्टकासु च पितृभ्यो दद्यात् । अष्टकासाह- चर्य्यात् श्रावण्याग्रहायण्योरपि नित्यश्राद्धम् ।

इति महासान्धिविग्रहिकठक्कुरश्रीवीरेश्वरात्मजमहा-
सान्धिविग्रहिक श्रीचण्डेश्वरठक्कुरविरचिते
कृत्यरत्नाकरे मार्गमासतरङ्गः ।

---

## अथ पौषमासकृत्यम् ।

तत्र विष्णुधर्म्मोत्तरे—

पौषे कनकदानेन परां तुष्टिन्तथैव च ।
पुष्याणाञ्च सिते पक्षे दानं लक्ष्मीकरं स्मृतम् ॥
फलानाञ्च तथा दानं कृष्णपक्षे महाफलम् ।

वामनपुराणे—

प्रासादनगरादीनि गृहप्रावरणानि च ।
नारायणस्य तुष्ट्यर्थं पौषे देयानि नित्यशः ॥

अत्र प्रथमेनादिशब्देन ग्रामकर्व्वटयोर्ग्रहणम् । द्वितीयेन शय्याया इति दानसागरः । तन्मते गृहप्रावरणादिकमिति पाठः ।

ग्रहणमुपक्रम्य देवीपुराणे—

पौषे तु नर्म्मदा पुण्या स्नानदानादिकर्म्मणि ।

एकभक्तमुपक्रम्य स्कन्दपुराणे—

पौषे मासे तु पुत्रांश्च बहूनाप्नोति धार्म्मिकान् ।

श्रीमहाभारते—

पौषमासन्तु कौन्तेय भक्तेनैकेन यः क्षिपेत् ।

सुभगो दर्शनीयश्च यशोभागी च जायते ॥

पौषमभिप्रेत्य भविष्यपुराणम्—

व्रतान्ते गरुड़ं कृत्वा भानवे विनिवेदयेत् ।

गन्धमाल्यैरलङ्कृत्य भास्करं विबुधोत्तमम् ॥

ताम्रपात्रे स्थिते तस्मिन् तत्सर्व्वं विनिवेदयेत् ।

तस्मिन् गरुड़े—

महापद्मकयानेन दिव्यगन्धप्रवाहिणा ॥

समैकादशसाहस्रं सूर्य्यलोके महीयते ।

सम्प्राप्यैवं क्रमाल्लोकं यथेष्टं विन्दते पतिम् ॥

अत्र मासव्यापकमेकभक्तं षष्ठ्याम् सप्तम्याञ्चोभयपक्षयोरुपवासः।

क्षमासत्यादिनियमाश्च कार्त्तिकोक्ताः संबध्यन्ते ।

भविष्ये सुमन्तुरुवाच—

हन्त ते सम्प्रवक्ष्यामि सूर्य्यव्रतमनुत्तमम् ।

पौषे मासि तु सम्प्राप्ते यः कुर्य्यान्नक्तभोजनम् ॥

जितेन्द्रियः सत्यवादी स्वातीगोधूमगोरसैः ।

पक्षयोः सप्तमीं यत्नादुपवासेन यो नयेत् ॥

त्रिसन्ध्यमर्चयेद्भानुं शाण्डिलेयस्त सुव्रत ।
अधःशायी भवेन्नित्यं सर्व्वभोगविवर्जितः ॥
मासि पूर्णे तु सप्तम्यां घृतादिभिररिन्दम ।
कृत्वा स्नानं महापूजां सूर्य्यमन्त्रेण भारत ॥
नैवेद्यमोदनप्रस्थं चीरसिद्धं निवेदयेत् ।
भोजयित्वा द्विजानष्टौ सूर्य्यभक्तान् सुसामगान् ॥
गाश्च दद्यान्महाराज कपिलां भास्कराय तु ।
य एवं कुरुते पुण्यं सूर्य्यव्रतमनुत्तमम् ॥
तस्य पुण्यफलं वच्मि सर्व्वकामसमन्वितम् ।
सूर्य्यकोटिप्रतीकाशैर्विमानैः सार्व्वकामिकैः ॥
अप्सरोगणसङ्कीर्णैर्महाविभवविस्तरैः ।
ससंगीतनृत्यवाद्यै गंन्धर्व्वगणशोभितैः ॥
दोधूयमानश्चमरैः स्तूयमानः सुरासुरैः ।
सहस्रकिरणाद्भानोर्धनैश्वर्य्यसमन्वितः ॥
स याति परमं स्थानं यत्रास्ते रविरंशुमान् ।
रोमसंख्या तु या तस्यास्तत्प्रसूतिकुले तथा ॥
तावद्युगसहस्राणि स्वर्गलोके महीयते ।
त्रिःसप्तकुलजैः सार्द्धं भोगान् भुक्त्वा यथेप्सितान् ॥
ज्ञानयोगं समासाद्य सूर्य्यस्यैवालयं व्रजेत् ।

अत्र नक्तभोजनं सप्तमीद्वयं परित्यज्य मासे प्रथमसप्तम्यां प्रातः संकल्पः । शाण्डिलेयः शाण्डिलीपुत्रोऽग्निरिति यावत् । त्रिःसप्त-

कुलजै-रेकविंशतिकुलजैः। मासि संपूर्णे सति सप्तम्यां कपिलायाः गो र्भानवे दानम् ।

भविष्यपुराणे—

पौषे मासि तु सम्प्राप्ते यः कुर्य्यान्नक्तभोजनम् ।
जितेन्द्रियः सत्यवादी कामक्रोधविवर्जितः ॥
पक्षयोर्नवमीं यत्नादुपवासेन पालयेत् ।
त्रिकालं पूजयेदार्य्यां गन्धपुष्पोपहारतः ॥
कृत्वाग्निकार्य्यं विधिवद्भूमौ शय्यां प्रकल्पयेत् ।
मासान्ते स्नपनं कुर्य्याद्भगवत्यै घृतादिभिः ॥
कृत्वा ध्यानं महापूजां चण्डिकायै प्रकल्पयेत् ।
नैवेद्यं तण्डुलप्रस्थं क्षीरसिद्धं निवेदयेत् ॥
कुमारीं भोजयित्वाष्टौ विप्रान् भागवतांस्तथा ।
कृत्वा पिष्टमयीं देवीं नाम्ना चार्य्येति पूजयेत् ॥
चतुर्भुजां शूलधरां कुन्दपुष्पैः सगुग्गुलैः ।
स्नानं कृत्वा तिलैर्विप्र तिलानां प्राशनन्तथा ॥
य एवं पूजयेदार्य्यां तस्य पुण्यफलं शृणु ।
सूर्य्यकोटिप्रतीकाशं विमानवरमास्थितः ॥
दोधूयमानश्चमरैः स्तूयमानः सुरासुरैः ।
गच्छेद्दुर्गापुरं रम्यं यत्रास्ते चण्डिका स्वयम् ॥
क्रीड़ते देवगन्धर्व्वैर्यावदाभूतसंप्लवम् ।
त्रिःसप्तकुलजैः सार्द्धं भोगान् भुक्त्वा यथेप्सितान् ॥
पुनरेत्य भुवं वीर राजा भवति भूतले ।

भविष्यपुराणे—

सम्पूजयन् सदा पूज्यं भानुं सर्व्वार्थसिद्धिदम् ।
घृताभिषेकं यः कुर्य्यादहोरात्रन्तु भास्करे ॥
कुम्भैर्नानाविधैर्दिव्यैः पुष्यमासे समुद्यतः ।
गीतनृत्योपहारेण शङ्खवादित्रनिस्वनः ॥
कुर्य्याज्जागरणं देवे प्रदीपाद्यैः सुशोभितैः ।
वसेत् सूर्य्यपुरे श्रीमान् सूर्य्यतुल्यपराक्रमः ॥
ग्रहणे विषुवे चैव पुण्येषु दिवसेषु च ।
घृताभिषेकं यः पश्येद्दासमासै[1]रुपोषितः ॥
विधूय सर्व्वपापानि सूर्य्यलोकं स गच्छति ।

तथा—

घृताभिषेकं यः कुर्य्यादहोरात्रं शिवस्य च ।
सूक्ष्मधारेण भाण्डेन पुष्यमासे द्विजोत्तमः ॥
गीतनृत्योपहारेण शङ्खवादित्रनिस्वनैः ।
कुर्य्याज्जागरणञ्चापि प्रदीपाद्युपशोभितम् ॥
समस्तपापनिर्म्मुक्तः समस्तकुलवर्द्धनः ।
मुक्तः शिवपुरे श्रीमान् मोदते शिववत् सुखी ॥

ब्रह्मपुराणे—

पौषकृष्णाष्टकायान्तु शाकैः श्राद्धं सुशोभनैः ।

---

१ A पश्येत् सदाष्टाभिः ।

वायुपुराणे—

पिण्डदानाय मूले स्युरष्टकास्तिस्र एव च ।
कृष्णपक्षे वरिष्ठा हि पूर्व्वा चैन्द्रीति भाष्यते[1] ॥
प्राजापत्या द्वितीया स्यात्तृतीया वैश्वदेविकी ।
आद्यापूपैः सदा कार्य्या मांसैरन्या भवेत्तथा ॥
शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः ।
अन्वष्टका पितॄणान्तु नित्यमेव विधीयते ॥

एवञ्च ब्रह्मपुराणे आद्यायां शाक-विधानात् वायुपुराणे च तस्यामेवापूप-विधानात् शाखाभेदेन व्यवस्थितो विकल्पः । कल्पतरुरप्येवम् । समयप्रदीपस्तु-छन्दोग-वाजसनेययोः स्वगृह्यानु-सारादपूपः कठानान्तु शाकमिति व्यवस्था । यस्य तु स्वगृह्यादौ विशेषाश्रवणं तस्य तुल्यवद्विकल्प एवेत्याह ।

पापैर्मुच्यते इत्यधिकारे यमः ॥

नर्म्मदाम्भसि च स्नातः पौषकृष्णाष्टमीन्तथा ।

सप्तम्यर्थे द्वितीया ।

श्रीमहाभारते—

पौषमासस्य वै शुक्ले यदि युज्येत रोहिणी ।
तेन नक्षत्रयोगेन आकाशशयनो भवेत् ॥
सोमस्य रश्मयः पीत्वा महायज्ञफलं लभेत् ।

द्वितीयार्थे रश्मय इति प्रथमा ॥

---

1 D विभाव्यते ।

भविष्यपुराणे— महादेव उवाच—

पुष्यमासे यदा देवि शुक्लाष्टम्यां बुधो भवेत् ।
तदा सा तु महापुण्या महाभद्रेति कीर्त्तिता ॥
तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनम् ।
मत्प्रीतये कृतं देवि शतसाहस्रिकं भवेत् ॥
तस्मात्तस्यां महादेवि पूज्योऽहं विधिवद्बुधैः ।
गन्धपुष्पोपहारैश्च ब्राह्मणानाञ्च तर्पणैः ॥

तथा—

पौषे मासि यदा देवि अष्टम्यां नगजे शुभे ।
नक्षत्रं जायते पुण्यं यल्लोके रौद्रमुच्यते ॥

रौद्रमार्द्रा योगश्चायमतिदुर्लभोऽपि मुनिवचनविषयत्वात्तिथि-नक्षत्रवृद्धिह्रासक्रमेण काकतालीयो लक्षणीयः ॥

तदा सापि महापुण्या जयन्ती अष्टमी शुभा ।
तस्यां स्नानं तथा दानं जपो होमश्च तर्पणम् ॥
सर्व्वं कोटिगुणं देवि कृतं भवति कृत्स्नशः ।
तस्मान्मत्पूजनं देवि कर्त्तव्यं विधिवन्नरैः ॥

इयमष्टमी शुक्लैव प्रकरणात् ।

तत्रैव विष्णुरुवाच—

पौषे मासि सिते पक्षे अष्टम्यां विधिपूर्व्वकम् ।
पूजयित्वा महादेवं गन्धपुष्पोपहारतः ॥
महापाशुपतान् विप्रान् शैवांश्च विधिवद्द्विजान् ।
भोजयित्वा यथाशक्त्या देवमारोपयेद्धृयम् ॥

| Size. | Contents. | Per unit of 96 or 100 pages. |
|---|---|---|
| Demy octavo .. | Oriental text only .. .. | Rs. 0-12-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. .. | ,, 1-0-0 |
| Royal octavo .. | Oriental text only .. .. | ,, 1-0-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. | ,, 1-4-0 |
| Quarto .. | Oriental text only .. .. | ,, 2-0-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. | ,, 2-8-0 |

There are some exceptions to this scale, which in each case will be indicated in the price lists. For the calculation of prices each part of a unit in excess of the 96 or 100 pages counts again as a full unit.

Single issues may be bought separately, but three years after the completion of a work no complete sets are broken for the sale of loose component parts.

Each issue bears, besides its issue number, a fascicle number indicating its place in the work and volume to which it belongs.

**With the issue of this Notice all previous prices and price lists are cancelled.**

CALCUTTA,
*May*, 1924.

The publications or information about them are obtainable from the Asiatic Society of Bengal, No. 1, Park Street, Calcutta, or from the Society's Agents:—

MESSRS. LUZAC & CO., 46, Great Russell Street, London, W.C.

M. PAUL GEUTHNER, 13, Rue Jacob, Paris, VI^e.

BUCHHANDLUNG OTTO HARRASSOWITZ, 14, Querstrasse, Leipzig.

MESSRS. THACKER, SPINK & CO., 3, Esplanade East, Calcutta.

*Residents of Europe should order from the local Agents.*

When ordering direct from the Society the following rules should be observed:—

Orders should be addressed to the Asiatic Society of Bengal and not to any Official by name or title.

All Cheques, Money Orders, etc., should be made payable to the "Treasurer, Asiatic Society of Bengal."

Orders for books should be accompanied by a full name and address, legibly written, and should be sent on a separate sheet of paper containing no other communication.

In India books are supplied by V.-P.P.

# LIST OF WORKS ON SMṚTI

PUBLISHED IN

# THE BIBLIOTHECA INDICA.

### Work No. 162.

[Discontinued.]

1. BĀLAMBHAṬṬĪ, a Commentary on the Mitākṣarā, by Bālambhaṭṭa. Ed. Govinda Dāsa. 1904—. Vol. I, 2 fascicles; Vol. II, 1 fascicle; @ Re. 0-12-0 each. Rs. 2-4-0.

*All fascicles available.*

### Work No. 72.

[Completed.]

2. CATURVARGA-CINTĀMAṆI, by Hemādri. Ed. Bharatacandra Śiromaṇi, Yogeśvara Bhaṭṭācārya Smṛti-ratna, Kāmākhyā-nātha Tarka-ratna and Pramatha-nātha Tarka-bhūṣaṇa. 1871–1911. 4 vols. Vol. I (Dāna-khaṇḍa), 11 fascicles; Vol. II (Vrata-khaṇḍa), Part I: 13 fascicles, and Part II: 12 fascicles; Vol. III (Pariśeṣa-khaṇḍa), Part I: 18 fascicles, and Part II: 10 fascicles; Vol. IV (Prāyaścitta-khaṇḍa), 10 fascicles. Vol. I: fasc. X sold out, fascs. I–IX @ Re. 0-12-0 each, fasc. XI @ Rs. 1-8-0; Vol. II: fascs. 13 + 12 @ Re. 0-12-0 each; Vol. III: Part I, fascs. I–XVIII @ Re. 0-12-0 each, and Part II, fascs. I–VI and VIII–X @ Re. 0-12-0 each, and fasc. VII @ Rs. 1-8-0; Vol. IV: fascs. I–VI, VIII and IX @ Re. 0-12-0 each, and fascs. VII and X @ Rs. 1-8-0 each. Rs. 57-12-0.

Complete sets of Vol. I and Vol. II, Part I, cannot be supplied. A very few copies of loose fascicles available.

***Fascicles not all available.***

### Work No. 155.

[Completed.]

3. DĀNA-KRIYĀ-KAUMUDI, by Govindānanda Kavi-Kaṅkaṇ-ācārya. Ed. Kamala-kṛṣṇa Smṛti-bhūṣaṇa. 1902–1903. 2 fascicles. Fasc. I @ Re. 0-12-0 and fasc. II @ Rs. 1-8-0. Rs. 2-4-0.

*All fascicles available.*

### Work No. 177.

[Completed.]

4. HĀRA-LATĀ, by Aniruddha-bhaṭṭa. Ed. Kamala-kṛṣṇa Smṛti-tīrtha. 1909. 1 fascicle. Rs. 2-4-0.

*Available.*

### Work No. 147.

[Completed.]

5. KĀLA-SĀRA, by Gadādhara Rāja-guru [being a portion of Gadādhara-paddhati]. Ed. M.M. Sadāśiva Miśra. 1900–1904. Vol. I, 7 fascicles, @ Re. 0-12-0 each. Rs. 5-4-0.

*All fascicles available.*

### Work No. 136.

[Completed.]

6. KĀLA-VIVEKA, by Jīmūta-vāhana. Ed. Madhu-sūdana Smṛti-ratna and Pramatha-nātha Tarka-bhūṣaṇa. 1897–1905. 7 fascicles, @ Re. 0-12-0 each. Rs. 5-4-0.

*All fascicles available.*

### Work No. 237.

[In Progress.]

7. KṚTYA-RATNĀKARA, by Caṇḍeśvara Thakkura. Ed. Kamala-kṛṣṇa Smṛti-tīrtha. 1921—. 4 fascicles, @ Re. 0-12-0 each. Rs. 3-0-0.

*All fascicles available.*

### Work No. 114.

[Completed.]

8. MADANA-PĀRIJĀTA, by Madana-pāla. Ed. Madhu-sūdana Smṛti-ratna. 1887–1893. 11 fascicles, @ Re. 0-12-0 each. Rs. 8-4-0.

*All fascicles available.*

### Work No. 104.

[Completed.]

9. MANU-ṬĪKĀ-SAṂGRAHA, being extracts from the Commentaries of Medhātithi, Govindarāja, Nārāyaṇa, Rāghavānanda, Nandana, and a Kashmirian author. Ed. Julius Jolly. 1885–1889. 3 fascicles. Fascs. I and II @ Re. 0-12-0 each, and fasc. III @ Rs. 1-8-0. Rs. 3-0-0.

*All fascicles available.*

### Work No. 102.

[Completed.]

10. NĀRADA-SMṚTI, with extracts from the Commentaries of Asahāya and others. Ed. Julius Jolly. 1885–1886. 3 fascicles. All sold out except fasc. III, of which there is a limited number of copies for sale @ Re. 0-12-0 each.

*Fascicles not all available.*

### Work No. 4.

[Completed ]

11. NĪTI-SĀRA, by Kāmandaka, with a Commentary. Ed. Rāma-nārāyaṇa Vidyā-ratna. 1849–1884. 5 fascicles. All sold out.

*No fascicles available.*

### Work No. 152.

[Vol. I completed.]

12. NITYĀCĀRA-PADDHATI, by Vidyākara Vājapeyin. Ed. Vinoda-vihārī Bhaṭṭācārya. 1901–1903. 1 vol. 7 fascicles, @ Re. 0-12-0 each. Rs. 5-4-0.

*All fascicles available.*

### Work No. 160.

[In Progress.]

13. NITYĀCĀRA-PRADĪPA, by Narasiṁha Vājapeyin. Ed. Vinoda-vihārī Bhaṭṭācārya. 1903—. Vol. I, 8 fascicles; Vol. II, 4 fascicles. Vol. I: fascs. I–VII @ Re. 0-12-0 each, and fasc. VIII @ Rs. 1-8-0; Vol. II: fascs. I–IV @ Re. 0-12-0 each. Rs. 9-12-0.

*All fascicles available.*

### Work No. 94.

[Completed.]

14. PARĀŚARA-SMṚTI, with Mādhavācārya's Commentary. Ed. M.M. Candra-kānta Tarkālaṅkāra. 3 vols. 1883–1899. Vol. I, 8 fascicles; Vol. II, 6 fascicles; Vol. III, 6 fascicles. Vol. I: fascs. I–VII @ Re. 0-12-0 each, and fasc. VIII @ Rs. 1-8-0; Vol. II: fascs. I–VI @ Re. 0-12-0 each; Vol. III: fascs. I–VI @ Re. 0-12-0 each. Rs. 15-12-0.

*N.B.*—Vols. I and III have no title-page. Complete sets of Vol. I not available; a few loose copies of fascs. II–VIII available.

*Fascicles not all available.*

### Work No. 111.

[Completed.]

15. PARĀŚARA-SMṚTI. Eng. trans. Kṛṣṇa-kamala Bhaṭṭācārya. 1887. 1 fascicle. Re. 1-0-0.

*Available.*

### Work No. 216.

[In Progress.]

16. SMṚTI-PRAKĀŚA, by Vāsudeva Ratha. Ed. M.M. Sadāśiva Miśra. 1912—. Fasc. I. Re. 0-12-0.

*Available.*

[1]दीनानाथकृपणान् ब्राह्मणांश्च विशेषतः।
भोजयेत् पूजयेच्छक्त्या नानाभक्ष्यैर्विधानतः॥
तिलान् पलाशसमिधो जुहुयात् पावके तथा।
कृत्वा तु सप्ततं वीर देवमारोपयेद्रथम्॥
कुर्य्यात् प्रजागरं तत्र नानाप्रेक्षणकैर्द्विज।
परिव्राजकवर्गैस्तु नृत्यमानैश्च सर्व्वशः॥
एवं महोत्सवं कृत्वा यामिन्यर्द्धं वरानने।
कृष्णाष्टम्यान्ततः पौषे देवं तं भ्रामयेत् पुरम्॥
नानाप्रेक्षणकैर्विप्र ब्रह्मघोषैश्च सर्व्वशः।
वृन्दैः पाशुपतानाञ्च नृत्यमानैः समन्ततः॥
रथे विप्रध्वजच्छत्रैः किङ्किणीरवकाञ्चितैः।
वितानध्वजमालाभिर्घण्टाचामरदर्पणैः॥
शङ्खभेर्य्यादिनिर्घोषैर्गेयरङ्गसमाकुलम्।
लेप्य दारुमयैर्यन्त्रैर्मार्द्दरचोगणादिभिः॥
उद्यानखातपानाद्यैर्महोत्सवसमन्वितैः।
महाजनपदाकीर्णं यथावैभवकल्पितम्॥
सर्व्वदा दानपुण्यानि सर्व्वतीर्थफलानि च।
अत्युग्रतपसां पुण्यं सर्व्वयज्ञफलानि च॥
लभते च नरः श्रीमान् शिवयात्राप्रवर्त्तनात्।
शिवलोके महाभाग शिववन्मोदते सदा॥

---

१ D दीनार्थं कृपणान्।

अत्र शुक्लपक्षकथनानन्तरं कृष्णाष्टम्यान्ततः पौष इति भविष्य-पुराण एव कथनाद्युक्त एव शुक्लादिमासक्रमेण कृष्णः पौषपक्षः ।

तस्यान्ते देवराजत्वं चिरकालमवाप्नुयात् ।
जम्बुद्वीपपतिः श्रीमान् तस्यान्ते जायते पुनः ॥

तथा—

यः कुर्य्यात् पर्व्वकालेषु महीमार्गप्रवर्त्तनम् ।
शिवस्य रथयात्रायां दिनरात्रिपरिक्रमात् ॥
स दिव्यं यानमारूढ़ः किङ्किणीरवनादितम् ।
प्रयाति लोकमचलं गिरिजावल्लभस्य तु ॥

इति शिवस्य रथयात्रा ।

ब्रह्मपुराणे—

पौषे मासस्य शुक्लायामेकादश्यामुपोषितः ।
द्वादश्यां पूजयेद्विष्णुं देवं नारायणं हरिम् ॥
यात्रा कार्य्या त्रयोदश्यां चतुर्द्दश्यामुपोष्य च ।
पौर्णमास्यां यजेद्विष्णुं तथा विभवविस्तरैः ॥

विष्णुधर्म्मोत्तरे—

पौषशुक्लद्वादशीमुपक्रम्य—धान्यानाञ्च तथा पौष इति ।
अत्र तथेत्यनेन दानस्य पूर्व्वमासोक्तमहाफलपरामर्शः ।

वराहपुराणे— दुर्व्वासा उवाच—

पुष्यमासस्य या पुण्या द्वादशी शुक्लपक्षतः ।
तस्यां प्रागिव संकल्प्य कुर्य्यात् स्नानादिकाः क्रियाः ॥

प्रागिव मार्गवत् ।

निर्व्वर्त्त्या(रा) बोधयेद्द्वाचावेकादश्यां जनार्द्दनम्।
पूज्यमन्त्रैर्द्दिजश्रेष्ठ देवदेवं जनार्द्दनम्॥

कूर्म्माय पादौ प्रथमन्तु पूज्यौ
नारायणायेति कटिं हरेस्तु।
सङ्कर्षणायेत्युदरं हरेस्तु
उरो विशोकाय भवाय कण्ठम्॥
सुबाहवे लेव भुजौ शिरश्च
नमो विशालाय रथाङ्ग-शङ्खौ।
स्वनाममन्त्रेण सुपुष्पगन्धै-
र्नानानिवेद्यैर्विविधैः फलैश्च॥
अभ्यर्च्च्य देवं कलसं तदग्रे
संस्थाप्य माल्याम्बरदामकण्टम्।
तं हेमगर्भन्तु पुरेव कृत्वा
स्वशक्तितो हेममयन्तु देवम्॥
समन्दरं कूर्म्मरूपेण कृत्वा
संस्थापयेत्तास्रपात्रे घृतस्य।
पूर्णे घटोपर्य्यथ सन्निवेश्य
श्वो ब्राह्मणायैवमेवन्तु दद्यात्॥
श्वो ब्राह्मणान् भोज्य सदक्षिणांश्च
यथाशक्त्या प्रीणयेद्देवदेवम्।
नारायणं कूर्म्मरूपेण पश्चात्
स्वयञ्च भुञ्जीत सभृत्यवर्गः॥

एवं कृते वै त्रिविधं हि पापं
विनश्यते नात्र विचारणास्ति ।
संसारचक्रन्तु विहाय शुद्धम्
प्राप्नोति लोकन्तु हरेः पुराणम् ॥
अनेन जन्मान्तरसञ्चितानि
नश्यन्ति पापानि नरस्य भक्त्या ।
प्रागुक्तरूपन्तु फलं लभन्ते
नारायणस्तुष्टिमुपैति सद्यः ॥

कूर्म्मद्वादशी ।

विष्णुः—

पौषी चेत् पुष्ययुक्ता स्यात्तस्यां गौरसर्षपकल्केनोत्सादितशरीरो गव्यघृतपूर्णकुम्भेनाभिषिक्तः सर्व्वौषधि सर्व्वगन्धैः सर्व्वबीजैश्च स्नातः तेन च भगवन्तं वासुदेवं स्नापयित्वा पुष्पधूपनैवेद्यादिभिश्चाभ्यर्च्य वैष्णवैः सूक्तैर्बार्हस्पत्यमन्त्रैश्च पावकं कृत्वा सुवर्णेन घृतेन च ब्राह्मणं स्वस्ति वाचयेत् ।

ब्रह्मपुराणे—

इदं जगत्पुरा लक्ष्म्या त्यक्तमासीत्ततो हरिः ।
पुरन्दरस्य सोमस्य तथा पुष्य-बृहस्पती ॥
पश्चैते पुष्ययोगे तु पौर्णमास्यां तपोबलात् ।
अलङ्कृतं पुनश्चक्रुः सौभाग्योत्साहलक्ष्मीभिः ॥
तस्मान्नरैः पुष्ययोगे तत्र सौभाग्यवृद्धये ।
गौरसर्षपकल्केन समालभ्य स्वकां तनुम् ॥

कृतस्नानैस्ततः कार्य्यमलक्ष्मीनाशनं परम् ।
उद्वर्त्त्यं देहस्य तथा सर्व्वौषधियुतैर्जलैः ॥
स्नानं कृत्वा नवं वस्त्रं गृहीत्वाच्छादनन्ततः ।
द्रष्टव्यं मङ्गलशतं धूपस्रङ्माल्यशोभितम् ॥
ततो नारायणः शक्रः चन्द्रः पुष्य-वृहस्पती ।
सम्पूज्याः पुष्पधूपाद्यैर्नैवेद्यैश्च पृथक् पृथक् ॥
प्रशस्तैर्वैदिकैर्मन्त्रैः कृत्वाग्निहवनं शुभम् ।
धनैर्विप्राश्च सन्तर्प्या नवैर्वस्त्रैः सुशोभिताः ॥
ततः पुष्टिकरं हृद्यं भोक्तव्यं घृतपायसम् ।
पुष्ययोगे तु कर्त्तव्यं राज्ञा स्नानन्तु सर्व्वदा ॥

अथ देवीपुराणे—

पुष्ये पुष्याभिषेकस्तु कर्त्तव्यः पूजयेज्जयाम् ।

विष्णुधर्म्मोत्तरे—

गौरसर्षपकल्केन पौष्यामुत्सादितो नरः ।
गव्यस्याज्यस्य कुम्भेन सोऽभिषिक्तस्त्वनन्तरम् ॥

उत्सादित उद्वर्त्तितगात्रः ।

विरूक्षितस्तथा स्नातः सर्व्वबीजौषधीजलैः ।
रत्नगन्धफलोपेतैर्घृते च तदनन्तरम् ॥

सर्व्वौषधि सर्व्वबीजानि परिभाषोक्तानि ।

ससुवर्णं मुखं दृष्ट्वा तत्प्रदद्याद्द्विजातये ॥
घृतेन स्नापितं विष्णुं शक्त्या सम्पूजयेत्ततः ।
घृतञ्च जुहुयादग्नौ घृतं दद्याद्द्विजातये ॥

कर्त्त्रे वस्त्रयुगं दद्यात् सोपवासः समाहितः।
कर्म्मणानेन धर्म्मज्ञाः पुष्टिमाप्नोत्यनुत्तमाम्॥

अयमर्थः। एकभक्तं कृत्वा नियमेन सुप्त्वा परदिनमुपोष्या-परदिने प्रातः श्वेतसर्षपकल्केनोद्वर्त्त्य गव्यघृतकुम्भेन स्नातः तण्डुल-चूर्णादिभीरूक्षणं कृत्वा परिभाषोक्त सर्व्वधान्य सर्व्वौषधीमिश्रेण रत्नफलयुतेन जलेन च स्नातो सुखं सुवर्णसहिते घृते वीक्ष्य तत् यस्मिन् कस्मिंश्चिद्ब्राह्मणे प्रतिपाद्य स्नापितं भगवन्तं विष्णुं यथा-शक्ति सम्पूज्य ब्राह्मणद्वारा—

ॐ विष्णवे स्वाहेति घृतेन होमं कारयेत्।
ततो होमस्य कर्त्त्रे वाससी दक्षिणां दद्यात्॥

ततः प्रतिगृह्यैव ब्राह्मणमानाय्याभ्यर्च्याचिंतं घृतं तस्मै दद्यात्। अत्रानुत्तमपुष्टिः फलम्। पुष्ययोगे चाचैव दशगुणम्।

मत्स्यपुराणे—

चतुर्द्दशसहस्राणि तथा पञ्चशतानि च।
भविष्यचरितप्रायं भविष्यं तदिहोच्यते॥
तत् पौषमासि यो दद्यात् पौर्णमास्यां विशेषतः।
भविष्यचरितप्रायमादित्यचरितोज्ज्वलम्॥
गुडकुम्भसमायुक्तमग्निष्टोमफलं लभेत्।

इति महासान्धिविग्रहिकठक्कुर श्रीवीरेश्वरात्मज महा-
सान्धिविग्रहिकठक्कुर श्रीचण्डेश्वरविरचिते
कृत्यरत्नाकरे पौषमासतरङ्गः।

---

# अथ माघकृत्यम्।

श्रीमहाभारते—

माघे मासि तिलान् यस्तु ब्राह्मणेभ्यः प्रयच्छति।
सर्व्वसत्त्वसमाकीर्णं नरकं न स पश्यति॥

विष्णुधर्म्मोत्तरे—

तिलप्रदानान्माघे तु याम्यं लोकं न गच्छति।

वामनपुराणे—

माघे मासि तिलाः शस्तास्तिलधेनुश्च दानव!।
इध्मेन्धनाद्यश्चान्ये माधवप्रीणनाय तु॥

इध्म होमोपयोगिदारु। इन्धनमग्निज्वलनोचितम्। आदिशब्देन शीतहरतूलपटीकम्बलाः परिगृहीता इति दानसागरः।

कल्पतरुकारस्य तु—

यद्यदिष्टतमं वस्तु[1] यच्चाप्यस्ति गृहे शुचि।
तत्तद्धि देयं प्रीत्यर्थं देवदेवस्य चक्रिणः॥

इति वामनपुराणे मासदानोपसंहारे दर्शनादस्यैवादिपदार्थत्वमिष्टम्। एवमन्यत्राप्यादिपदार्थो नेयः।

तिलधेनुः धेनुदानावर्त्तस्थमत्स्यपुराणोक्ततिलधेनुविधया देयेति दानसागरः।

विष्णुः—

माघे मास्यग्निं प्रत्यहं तिलैर्हुत्वा सघृतं कल्माषं[2] ब्राह्मणान् भोजयित्वा दीप्ताग्निर्भवति।

---

१ B किञ्चित्। २ D कुल्माषम्।

कल्माषः[१] ईषत्खिन्नमाषः । ब्राह्मणभोजनमपि प्रतिदिनम् । माघप्राथम्याच्छिशिरर्त्तुकर्त्तव्यमप्यत्रैव लिख्यते ।

सम्वर्त्तः—

इन्धनानि च यो दद्यात् विप्रेभ्यः शिशिरागमे ।
स सुखी दीप्तकायाग्निः सुभगश्चैव जायते ॥

शिशिरागमे शिशिरोपक्रमे । अत्र दानारम्भो दानस्य मासद्वयव्यापित्वात् ।

यमः—

कृशरं भोजयित्वा तु स्वशक्त्या शिशिरे द्विजान् ।
दीप्ताग्नित्वमवाप्नोति स्वर्गलोकञ्च गच्छति ॥

विष्णुधर्म्मोत्तरे—

बहिः स्नानं नरः कृत्वा सूर्य्यस्योदयनं प्रति ।
शिशिरे सततं बह्निं तर्पयित्वा तथा तिलैः ॥
कल्माषं सघृतं दत्त्वा यथाशक्त्या द्विजातिषु ।
काय्याग्निदीप्तिः प्राकाश्यं प्रचुनाशञ्च विन्दति ।

शिशिरर्त्तूपक्रमे उदितमात्रे सूर्य्ये ग्रामाद्बहिर्जलाशये स्नात्वाग्नौ [ॐ प्रजापतये स्वाहेति] तिलान् हुत्वा[२] शूद्रो ब्राह्मणद्वारा होमं कारयित्वा घृतसहितान् खिन्नमाषान् दद्यात् ।

विष्णुधर्म्मोत्तरे—

इन्धनानां प्रदानेन शिशिरे स्यान्महाफलम् ।

---

१ D कुल्माषः ।      २ D चिह्नितांशः पतितः ।

भविष्यपुराणे—

शीतकालेन्धनं दद्यान्नराणां शीतनाशनम् ।
भानोरायतने देव सोऽश्वमेधफलं लभेत् ॥

नरसिंहपुराणे—

शीतकाले महावह्निं प्रज्वालयति यो नरः ।
सर्व्वसत्त्वहितार्थाय स्वर्गञ्चाप्नुयात् लभेत् ॥

एतज्ज्वालनमात्रम् । अतएव धार्म्मिकाः स्नानघट्टादिष्वग्नि-मनुदिनं प्रज्वालयन्ति ।

विष्णुधर्म्मोत्तरे—

शिशिरं सकलं कालं ग्रासं परगवे तथा ।
दत्त्वा स्वर्गमवाप्नोति सम्वत्सरशतानि षट् ॥

आग्नेयपुराणे—

हेमन्ते शिशिरे चैव पुण्याग्निं यः प्रयच्छति ।
सर्व्वलोकप्रतापार्थं पुण्यां गतिमवाप्नुयात् ॥

पुण्याग्निं पुण्यार्थमग्निम् ।

यमः—

प्रातःस्नायी च सततं द्वौ मासौ माघ-फाल्गुनौ ।
देवान् पितॄन् समभ्यर्च्य सर्व्वपापैः प्रमुच्यते ॥

विष्णुः—

प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघ-फाल्गुनौ ।
यदीच्छेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान् ॥

अत्र फलभेदाच्छिन्नमूलत्वे स्थिते यमवाक्यादनुवादानर्थक्य-

प्रसङ्गाद्देवपितृतर्पणसहितमेव स्नानं कृतसंकल्पेनाशौचेऽपि कर्त्तव्यम्। विष्णुवाक्यबोधितस्नानस्याशौचपाते मज्जनमात्रमेव विवक्षितमिति केचित्।

मत्स्यपुराणे—

मार्कण्डेय उवाच—

षष्टितीर्थसहस्राणि षष्टितीर्थशतानि च।
माघे मासि गमिष्यन्ति गङ्गायमुनसङ्गमे॥
गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम्।
प्रयागे माघमासस्य त्र्यहस्नानस्य तत्फलम्॥
सितासिते तु यत्स्नानं माघे मासि युधिष्ठिर।
न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि॥

यत्स्नानं येषां स्नानमिति तु प्रातःस्नानमनादायैव।

भविष्यपुराणे—

माघमासे समुद्युक्तस्त्रिसन्ध्यं पूजयेद्रविम्।
लभेत् षाण्मासिकं पुण्यं मासेनैव न संशयः॥
यथा माघे तथाषाढ़े मासमेकश्च कार्त्तिके।
त्रिषु पुण्यं समं ज्ञेयं मासश्रेष्ठेषु यत्कृतम्॥

मत्स्यपुराणे—

माघे मास्युषसि स्नानं कृत्वा दाम्पत्यमर्च्चयेत्।
पूजयित्वा यथाशक्ति माल्य-वस्त्र-विभूषणैः॥
सूर्य्यलोके वसेत् कल्पं सूर्य्यव्रतमिदं स्मृतम्।

अथ व्रतसाधारणधर्म्मान्वयः॥

व्रतमधिकृत्य— श्रीमहाभारते—

माघन्तु नियतो मासमेकभक्तेन यः क्षिपेत् ।
स श्रीमति कुले जातो महत्त्वेनोपपद्यते ॥

यथा स्कन्दपुराणे—

माघे मासे तु कुर्व्वाणः स्त्रियः प्राप्नोति वै शुभाः ।

कुर्व्वाण एकभक्तमित्यर्थान्वयः ॥

भविष्यपुराणे—

माघे रथञ्चाश्वयुतं दिव्यमाल्यविभूषितम् ।
पैष्टभानुसमायुक्तं कृत्वायतनमानयेत् ॥
महारथोपमैर्यानैः श्वेताम्बरसमन्वितैः ।
वर्षायुतशतं साग्रं सूर्य्यलोके महीयते ॥
सर्व्वामराणां लोकेषु प्राप्य कामान् यथेप्सितान् ।
क्रमादागत्य लोकेऽस्मिन् यथेष्टं विन्दते पतिम् ॥

मासव्यापकमेकभक्तादिकं कार्त्तिकवज्ज्ञेयम् ।

तत्रैव—

माघे मासे तु सम्प्राप्ते यः कुर्य्यान्नक्तभोजनम् ।
पिन्याकं घृतसम्मिश्रं भुञ्जानः संयतेन्द्रियः ॥
उपवासश्च सप्तम्यां भवेदुभयपक्षयोः ।
घृताभिषेकं सप्तम्यां कुर्य्याद्भानोर्नराधिप ॥
गाञ्च दद्याद्द्विजेशाय तरुणीं नीलसन्निभाम् ।
गत्वादित्यपुरं रम्यं भुंक्ते भोगान् यथेप्सितान् ॥

अत्र नक्तभोजनं मासव्यापि पिण्याकस्तिलकल्कः। नीलाञ्जनाभां इन्द्रनीलश्यामाम्।

तत्रैव—

माघे मासे तु सम्प्राप्ते यः कुर्य्यान्नक्तभोजनम्।
कृशरं घृतसंयुक्तं भुञ्जानः संयतेन्द्रियः॥
उपवासपरोऽष्टम्यां पक्षयोरुभयोरपि।
पूजयेदम्बिकां भक्त्या कृत्वा गोधूमचूर्णतः॥
[1]दुर्गामष्टभुजां वीर अम्बिकामिति नामतः।
गन्धपुष्पोपहारैस्तु सर्व्वैं रक्तैश्च पूजयेत्॥
धूपं कृष्णागुरुं दद्यात् मांसं दद्याच्च माहिषम्।
धान्यसिद्धार्थकाः स्नाने प्राशने च यवाः स्मृताः॥
य एवं माघमासे तु पूजयेदम्बिकां नृप।
दिव्यं विमानमारूढ़ः सूर्य्यलोके महीयते॥

ब्रह्मपुराणे—

झषादित्रयसंक्रान्तौ चण्डांशावुत्तरायणे।
ब्रह्मलोकन्तु गच्छन्ति देवाः सर्व्वे सवासवाः॥
तस्मान्मासत्रयन्तत्र प्रतिमाः शैलसम्भवाः।
आच्छाद्य गृह वस्त्राभ्यां तथा रथ्यासु नित्यशः॥
पुष्पैर्वस्त्रैः सुवासैश्च यष्टीतव्यास्तु सर्व्वदा।
पूज्याः प्रतिदिनं तास्तु ब्राह्मणास्तु सुशोभनैः॥

---

१ AB तवजङ्घामष्टभुजां वीराम्बामिति नामतः।

तर्पणीयास्तथा गावस्सलिलेन लवणादिभिः[१]।
वह्निर्नित्यश्च प्रज्वाल्यो नृणां कार्य्योऽग्निवर्द्धनः॥

झषोऽत्र मकरः। शैलसम्भवाः पाषाणनिर्म्मिताः। एतच्चोत्तरायणे देयम्। तदनु मासत्रयञ्च परिपालनीयम्।

तथाचोक्तम् तत्र

मेषं जिगमिषौ सूर्य्ये शैशिरं घृतकम्बलम्।
अपास्य देहाद्देवेभ्यः पूजा कार्य्या प्रयत्नतः॥

कालिकापुराणे—

कनकं कुलिशं नीलं पद्मरागञ्च मौक्तिकम्।
एतानि पञ्चरत्नानि विन्यसेल्लिङ्गमूर्द्धनि॥
रत्नानाञ्चाप्यभावे तु कर्षं कर्षार्द्धमेव वा।
सुवर्णं योजयित्वा तु तस्मिन्नेवोत्तरायणे॥
विधिवच्च तथाभ्यर्च्य गन्धेनाज्येन भूरिणा।
प्रक्षाल्य मर्द्दयित्वा तु प्रदद्याद् घृतकम्बलम्॥
दद्याच्चोपस्करं भूयो ब्राह्मणान् यतिभिः सह।
संभोज्य दत्तयित्वा तु कल्पयेदनिवारितम्॥
उपोष्य सर्व्वमेवैतत् कुर्य्याद् भक्तिपुरःसरः।
पञ्चगव्यं तिलैर्युक्तं पीत्वा वै पारयेत् स्वयम्॥
तिलैः स्नानं प्रकुर्व्वीत तैरेवोद्वर्त्तनं बुधः।
देवतानां पितृणाञ्च उभाभ्यां तर्पणन्तथा॥

---

१ D लवणाम्बुभिः।

होमं तेश्च प्रकुर्व्वीत सर्व्वदैवोत्तरायणे ।
तं वै देवाय विप्रेभ्यो हाटकेन समं ददेत् ॥
सकृदेव करोत्येवं चित्तं शम्भौ निवेश्य यः ।
उत्तरायणमासाद्य नरः कस्मात् स शोचते ॥

कुलिशं हीरकं । दक्षयित्वा दक्षिणया सम्पूज्य कल्पयेत् भोजनमिति शेषः । पारयेत् पारणं कुर्य्यात् । तिलस्नान-परयोर्नात्र क्रमो विवक्षितः । उभाभ्यामिति तादर्थ्ये चतुर्थी ।

कम्बलदानम् ॥

भविष्यपुराणे—

कृष्णपक्षस्य पञ्चम्यां माघे मासि भवेच्च यः ।
आदित्याभिमुखो ज्ञेयः शृणु चास्य परं विधिम् ॥
कृत्वैकभक्तं सूर्य्यस्य वारे त्रिपुरसूदन ।
प्रातःकृत्वा ततः स्नानं पूजयित्वा दिवाकरम् ॥
आदित्याभिमुखस्तिष्ठेद् यावदस्तमयं रवेः ।
जपमानो महाश्वेतां स्तम्भमाश्रित्य सुव्रत ॥
चतुर्हस्तं मृदु श्लक्ष्णमव्रणञ्च समं घटम् ।
रक्तचन्दनवृक्षस्य कुम्भं कुर्य्याद् गणाधिप ॥
तमाश्रित्य महाबाहो भक्त्या देवं दिवाकरम् ।
पश्यमानो जपन् श्वेतां तिष्ठेदास्तमयं रवेः ॥
गन्धपुष्पोपहारैश्च पूजयित्वा दिवाकरम् ।
ब्राह्मणे दक्षिणां दत्त्वा ततो भुञ्जीत वाग्यतः ॥
इत्यनेनन्तु यः कुर्य्यात् भास्करप्रीतये नरः ।

भानुमांस्तस्य प्रीतः स्यात्स प्रीतश्च ददाति हि ॥
धनं धान्यं तथा पुत्रानारोग्यं भार्गवीं नृप ।
तस्मात् सम्पूजयेत्तत्र गीर्व्वाणाधिपतिं हरिम् ॥

भार्गवी लक्ष्मीः । हरिः सूर्य्यः ।

इत्यादित्याभिमुखविधिः ॥

ब्रह्मपुराणे—

कृष्णाष्टम्यान्तु माघस्य मांसश्राद्धं महाफलम् ।
पितृभिः प्रार्थितं पूर्व्वं तस्मात्तत्तत्र कारयेत् ॥

एतच्च सर्व्वशाखिसाधारणम् विशिष्य बोधकविरहात् ।

विष्णुः—

पौष्यां समतीतायां कृष्णपक्षद्वादश्यां सोपवासस्तिलैः स्नातस्तिलोदकं दत्त्वा वासुदेवमभ्यर्च्य तानेव हुत्वा दत्त्वा भुक्त्वा च सर्व्वपापेभ्यः पूतो भवति ।

यमः—

माघान्धकारद्वादश्यां तिलैर्हुत्वा हुताशनम् ।
तिलान् दत्त्वैव विप्रेभ्यः सर्व्वपापैः प्रमुच्यते ॥

कूर्म्मपुराणे—

माघमासे तमिस्रे तु द्वादश्यां समुपोषितः ।
शुक्लाम्बरधरः कृष्णैस्तिलैर्हुत्वा हुताशनम् ॥
प्रदद्याद्ब्राह्मणेभ्यस्तु तिलानेव समाहितः ।
जन्मप्रभृति यत्पापं सर्व्वन्तरति वै द्विज ॥

ब्रह्मपुराणे—

माघे कृष्णद्वादश्यान्तु यमोऽपि भगवान् पुरा।
तिलानुत्पादयामास तपः कृत्वा सुदारुणम्॥
राजा दशरथो भूमौ तस्मात्तानावतारयत्।
तिलानामाधिपत्ये तु विष्णुस्तत्र कृतः सुरैः॥
तस्यामुपोषितः स्नातस्तिलैस्तस्माद्यजेद्धरिम्।
तिलतैलेन दीपाश्च देया देवगृहेष्वपि॥
निवेदयेत्तिलानेव होतव्याश्च तिलास्तथा।
तिलान् दद्याच्च विप्रेभ्यो भक्षयेच्च तथा तिलान्॥

इदन्तु भूपालकृत्यसमुच्चये माघकृत्योपसंहारे द्वादश्यां तिलद्वादशीव्रतमिति व्रतरूपतयोपसंहृतम्। कल्पतरु-पारिजातादिषु नैयतकालिके लिखितमिति भावनीयम्।

तत्रैव—

माघे कृष्णचतुर्द्दश्यां विष्णोर्देहान्मरीचयः।
निःसेरुस्तिलकाकाराः शतशोऽथ सहस्रशः॥
सुप्तस्य भोगिशयने योगनिद्रागतस्य च।
उदानपवनो(द्धू)द्धूता रोमकूपेषु सर्व्वसु॥
तारणाद्योगिमुख्यानां भिन्ने वैकारिके सति।
विनाशिन्यः शरीरे ताः सिद्धाः सूक्ष्मत्वमागताः॥
तिलकाकृतयो जाताः संस्थिताश्च सुधात्मनः।
तारकास्तु महाघोरात् संसारगहनार्णवात्॥
तरतिः प्लवने धातुस्तस्मात्तासां निगद्यते।

अनक्षाभ्युदिते काले मत्सु (?) तारांशुके शनिः ॥

शनिः शनैश्चरः पूज्य इत्यर्थः ।

राजा च तत्र सम्पूज्यो यमः प्रलयभास्करः ।
सर्व्वाङ्गसन्धिसम्भूता नद्यो विष्णोश्च तत्र च ॥
अरुणोदयवेलायां वा रटन्त्यपि[1] नित्यशः ।
नियुक्ता विष्णुना सर्व्वाः कस्य पापं पुनीमहे ॥
निमित्तं पञ्चता वेयं तत्र प्रोक्तं यतो भुवि ।
तदा सा तु निशा ज्ञेया ताराधात्री सुदारुणा ॥
तत्रोपोष्य चयोदश्यां सम्प्राप्ते तु निशाक्षये ।
वितस्तायां विशोकायां इन्द्रवत्यामथापि वा ॥
तथा हर्षपथायाञ्च त्रिनद्यां वा यथाक्रमम् ।
सिन्धौ नरकवाहिन्यां तीर्थेष्वन्येषु तत्र वा ॥
स्नात्वा पूज्यो जगद्भर्त्ता हरिः पूज्याश्च तारकाः ।
यमो नद्यश्च तीर्थानि देवताः पितरस्तथा ॥
अर्घैः पुष्पैस्तथा धूपैर्दीपमाल्यैर्विलेपनैः ।
नैवेद्यैर्विविधाकारैः कृशरेण तु भूरिणा ॥
वह्निः पूज्यश्च भगवान् घृताक्तैस्तिलतण्डुलैः ।
नमःप्रणवसंयुक्तान् सतिलांश्च जलाञ्जलीन् ॥
यमाय सप्त वितरेत् धर्म्मराजाय सप्त च ।
मृत्यवे सप्त देयाश्च तथा सप्तान्तकाय च ॥

---

1 D वराटन्ति ।

वैवस्वताय मन्त्रान्याः मन्त्र कालाय चैव हि ।
मन्त्र देयाश्च विधिवत् सर्व्वप्राणहराय च ॥
कृशरं भोजनीयाश्च ब्राह्मणास्तदनन्तरम् ।
श्राद्धं कृत्वा पितृभ्यश्च विमुक्तः सर्व्वपातकैः ।
ततो विभज्य बन्धुभ्यः कृशरं भक्षयेत् स्वयम् ॥

तारारात्रिव्रतम् ॥

तत्रैव—

अमावास्यायां श्रवणं रक्षोघ्नं वैष्णवं यदा ।
तदा पितृभ्यः श्राद्धन्तु दत्तं भवति चाक्षयम् ॥

रक्षोघ्नं श्राद्धमित्यन्वयः । अमावास्यायां रक्षोघ्नं श्राद्धमिति कृत्यसमुच्चयोपसंहारात् ।

शिष्टाः

माघे शुक्लद्वितीयायां कन्यका सद्वरार्थिनी ।
प्रातः स्नात्वाऽर्च्चयेद्गौरीं पुष्पनैवेद्यचन्दनैः ॥

मत्स्यपुराणे ।

माघे मासेऽथ चैत्रे वा गुड़धेनुप्रदो भवेत् ।
गुड़व्रतस्तृतीयायां गौरीलोके महीयते ॥

गुड़व्रतो गुड़मात्राशनः ।

भविष्यपुराणे—

माघे मासि तृतीयायां गुड़स्य लवणस्य च ।
दानं श्रेयस्करं राजन् नारीणां पुरुषस्य च ।
गुड़ेन तुष्यते देवी लवणेन स्वयंभुवः ।

मत्स्यपुराणे— ईश्वर उवाच—

अन्यामपि प्रवक्ष्यामि तृतीयां पापनाशिनीम् ।
रसकल्याणिनीमेनां पुरा कल्पविदो विदुः ॥
माघे मासि तु सम्प्राप्य तृतीयां शुक्लपक्षतः ।
प्रातर्गव्येन पयसा तिलैः स्नानं समाचरेत् ।
स्नापयेन्मधुना देवीं तथैवेक्षुरसेन तु ।
गन्धोदकेन मधुना पूजनं कुङ्कुमेन वै ।
दक्षिणाङ्गानि सम्पूज्य ततो वामानि पूजयेत् ।
ललितायै नमो देव्याः पादौ गुल्फौ तथार्चयेत् ।
जङ्घां[1] जानु तथेशान्यै तथा चारुश्रियै[2] नमः ।
मदालसायै तु कटिं अमलायै तथोत्तरम् ।
स्तनं वदनवासिन्यै कुमुदायै च कन्धराम् ।
भुजं भुजाग्रं माधव्यै कमलायै सुखस्मिते ।
[3]मुकुटं विश्ववासिन्यै शिरः कान्त्यै तथाऽर्चयेत् ।
भ्रूललाटञ्च रुद्राण्यै शङ्करायै तथालकाम् ।
मदनायै ललाटन्तु मोहनायै पुनर्भ्रुवौ ।
नेत्रे चन्द्रार्द्धधारिण्यै तुष्ट्यै च वदनं नमः ।
उत्कण्ठिन्यै नमः कण्ठममृतायै नमः स्तने ।
रम्भायै वामबाहुञ्च विशोकायै नमः कटिम् ।
हृदयं मन्दगामिन्यै पाटलायै तथोदरम् ।

---

१ A जङ्घे जानू । २ D उरुश्रियै ।
३ A D पुस्तकद्वये पंक्तिर्नास्ति ।

कटिं सुरतवासिन्यै तथोरू चम्पकप्रिये।
जानुजङ्घे नमो गौर्य्यै गुल्फं गायत्रिकै नमः[1] ॥
धराधरायै पादन्तु विश्वकायै नमः शिरः।
नमो भवान्यै कामिन्यै कामदेव्यै जगत्प्रिये।
आनन्दायै अनन्दायै सुभद्रायै नमो नमः ॥

नमो भवान्यै इत्यादिश्लोकस्य पूजोत्तरकालम् पाठः। गौर्य्यै स्वाहेति च घृतहोमः सामान्यप्राप्तः। इति पारिजातः।

एवं सम्पूज्य विधिवत् द्विजदाम्पत्यमर्च्चयेत्।
भोजयित्वान्नपानेन मधुरेण विमत्सरः ॥
सलड्डुकं वारिकुम्भं शुक्लाम्बरयुगद्वयम्।
दत्त्वा सुवर्णकमलं गन्धमाल्यैरथार्च्चयेत् ॥
प्रीयतामत्र कुमुदा गृह्णीयाल्लवणव्रतम्।

लवणादिव्रतमित्यर्थः।

अनेन विधिना देवीं मासि मासि सदार्चयेत् ॥
लवणं वर्जयेन्माघे फाल्गुने च गुड़ं पुनः।
[2]तवराजन्तथा चैत्रे वर्ज्ज्यञ्च मधु माधवे।

तवराजः शीतसाकर इति प्रसिद्धः।

पानकं ज्येष्ठमासे च तथाषाढ़े च जीरकम्।
श्रावणे वर्जयेत् क्षीरं दधि भाद्रपदे तथा।
घृतमाश्वयुजे तद्वदूर्जे वर्ज्ज्याऽथ मार्जिता।

मार्जिता रसाला। सा च वैद्यके।

---

१ मूले गायत्र्यै घुटिकै नमः।

२ B तैल राजिम्।

अर्द्धाढकं त्वविरपर्युषितस्य दध्नः
खण्डस्य षोड़श पलानि शशिप्रभस्य ।
सर्पिःपलं मधुपलं मरीचार्द्धकर्षं
शुण्ठ्यास्तथा द्विपलमर्द्धपलं द्विपस्य ॥
कृत्वांऽशुकेऽतिविमले मृदुपाणिघृष्टा
कर्पूरगन्धसुरभिर्नवभाण्डसंस्था ।
एषा त्रिभागसहिता रचिता रसाला
या. सेविता भगवता मधुसूदनेन ॥

अस्याः कृतिप्रक्रिया। असम्यक्(क्षप्त)त्यक्तप्रकृतिमधुररसस्य जायमानसुरसस्य सम्यग्जातस्य दध्नः पलम् ६४ शुद्धखण्डपलम् १६ घृतपलम् १ मधुपलम् १ मरीचचूर्णसमा ८ शुण्ठीचूर्णं पलम् १ नागकेसरगुण्डाचूर्णम् तोलकम् ४ । एतत् सर्व्वं शुक्लसूक्ष्मवस्त्रे कृत्वा हस्तेन मृदु घृष्ट्वा नूतनमृण्मयपात्रे स्थाप्यम् ।

ततस्तत्र कर्पूरैलाबीजपचकगुड़त्वच एतेषां चूर्णं यावता सौगन्ध्यं, भवति तावन्मानं देयम् । एतन्मानानुसारेण स्वल्पमानेनास्याः कल्पना करणीयेति ।

अयं रसालापदार्थो रसाला शिखरिणीति व्याकुर्व्वतानुमोदितः कल्पतरुकृतेति नेयम् ।

धान्यकं मार्गशीर्षे तु पौषे वर्ज्याथ शर्करा ।
व्रतान्ते करकं पूर्णमेतेषां मासि मासि च ॥
दद्यादिकालवेलायां भक्ष्यपात्रेण संयुतम् ।

व्रतान्ते करकमित्यादि एतेषां लवणगुड़ादीनां मध्ये यस्मिन्

मासे यत् त्यक्तं तन्मासव्रतान्ते तेन लवणादिना पूर्णं करकं वक्ष्यमाणलड्डुकादिभक्ष्यपाचयुक्तं विकाले दद्यादित्यर्थः।

लड्डुकान् श्वेतवर्त्तीश्च संयावमथ पूरिकाः॥
घारिका घृतपूर्णांश्च पिष्टापूपांश्च मण्डकान्।
चीरशाकञ्च दध्यन्नमण्डश्चा[1]शोकवर्त्तिकाः॥
माघादिक्रमशो दद्यादेतानि करकोपरि।

घारिका पक्वान्नविशेषः। घारीति प्रसिद्धः।
अशोकवर्त्तिकामपि पक्वान्नविशेषमिच्छन्ति।

कुमुदा माधवी गौरी रम्भा भद्रा जया शिवा।
उमा रतिः सती तद्वन्मङ्गला रतिलालसा॥
क्रमान्माघादिषु तत्र प्रीयतामिति कीर्त्तयेत्।
सर्व्वत्र पञ्चगव्येन प्राशनं समुदाहृतम्॥
उपवासी भवेन्नित्यमशक्तौ नक्तमिष्यते।
पुनर्माघे तु सम्प्राप्ते शर्करा करकोपरि॥
कृत्वा तु काञ्चनीं गौरीं पञ्चरत्नसमन्विताम्।
हैमीमङ्गुष्ठमात्राञ्च साचसूत्रकमण्डलुम्॥
चतुर्भुजामिन्दुयुतां सितनेत्रपटावृताम्।
तद्वद्गोमिथुनं शुक्लं सुवर्णास्यं सिताम्बरम्॥
सवस्त्रं भाजनं दद्याद्भवानी प्रीयतामिति।
अनेन विधिना यस्तु रसकल्याणिनीव्रतम्॥
कुर्य्यात् स सर्व्वपापेभ्यस्तत्क्षणादेव मुच्यते

---

1 D दध्नश्चा।

भवाच्छतसहस्रन्तु न दुःखी जायते क्वचित्।

अग्निष्टोमसहस्रेण यत् फलं तदवाप्नुयात्।

नारी वा कुरुते वापि कुमारी च वरानने।

विधवा वा वराकी वा सापि तत्फलभाग् भवेत्।

सौभाग्यारोग्यसम्पन्ना गौरीलोके महीयते।

इति रसकल्याणिनीव्रतम्॥

दुर्गाधिकारे देवीपुराणम्।

चतुर्थ्यां माघमासस्य देवीपूजा विधीयते।

ब्रह्मपुराणे।

उमाचतुर्थ्यां माघे तु शुक्लायां योगिनीगणैः ;

अर्घैः पुष्पैस्तथा धूपैर्दीपैर्बलिभिरेव च।

प्राक् पूजयित्वा स्रष्टा च भूयः स्वाङ्गाङ्गजैर्गुणैः।

कल्पतरौ प्रागभ्यर्च्येति पठितम्। अर्घैः पुष्पैरित्यादिश्लोकार्द्धं न लिखितम्।

महिताः सस्रजुर्यस्मात्तस्मात् प्रोक्ता ह्युमा सती॥

तस्मात् सा तत्र सम्पूज्या नरैः स्त्रीभिर्विशेषतः।

कुन्दपुष्पैः प्रयत्नेन सम्यक् भावात् समाहितैः॥

कुङ्कुमालक्तकाभ्याञ्च रक्तसूत्रैः सकङ्कणैः।

अर्घैर्धूपैस्तथा दीपैः पुष्पैर्बलिभिरेव च॥

गुडार्द्रकाभ्यां पयसा लवणेनाथ यावकैः।

पूज्याः स्त्रियश्च विधवास्तथा विप्राश्च गोधनाः।

सौभाग्यवृद्धये पश्चाद्भोक्तव्यं बन्धुभिः सह॥

इति गौरीपूजा॥

श्रिया:—

माघे मासि चतुर्थ्यान्तु वरमाराध्य च श्रियः ।
पञ्चम्यां कुन्दकुसुमैः पूजा कार्य्या समृद्धये ॥

वरो विनायकः । लोके वरचतुर्थी श्रीपञ्चमी च प्रसिद्धा ।

भविष्यपुराणे । आदित्य उवाच ।

माघे मासि तु शुक्लायां सप्तम्यां समुपोषितः ।
यः पूजयेत् पुमान् भक्त्या तस्याहं पुत्रतां व्रजे ॥
एवञ्चोभयसप्तम्यां मासि मासि सुरोत्तम ।
यस्तु मां पूजयेद्भक्त्या स्वमेकसेकमादरात् ॥

स्वमेकं सम्वत्सरम् । तथा च तैत्तिरीयब्राह्मणश्रुतिः स्वमेक इत्याह सम्वत्सरो वै स्वमेक इति वकारसहित सकारादि-श्चायं शब्दः ।

प्रयच्छामि सुतं तस्य आत्मनो ह्यंशसम्भवम् ।
वित्तं यशस्तथा पुत्रमारोग्यं परमं तथा ॥
माघमासे तु यो ब्रह्मन् शुक्लपक्षे जितेन्द्रियः ।
पाषण्डान् पतितान् नग्नान् जल्पानविजितेन्द्रियः ॥
उपोष्य विधिवत् षष्ठ्यां श्वेतमाल्यविलेपनैः[१] ।
पूजयित्वा तु मां भक्त्या निशि भूमौ स्वपेद्बुधः ॥
पुनरुत्थाय सप्तम्यां कृत्वा स्नानादिकां क्रियाम् ।
पूजयित्वा तु मां ब्रह्मन् क्षीरहोमं समाचरेत् ॥
प्रीणयित्वा हरिं भक्त्या हविषा पद्मलोचनम् ।

---

१ D श्वेतमाल्यानुलेपनैः ।

दध्योदनेन पयसा पायसेन द्विजांस्तथा ॥
तस्यैव कृष्णपक्षस्य षष्ठ्यां सम्यगुपोषितः ।
रक्तोत्पलसुगन्धाढ्यै रक्तपुष्पैश्च पूजयेत् ॥
एवं सम्पूजयेद्भक्त्या नरो मां विधिवत्प्रभो ।
उभयोरपि देवेन्द्र स पुत्रं लभते वरम् ॥

एतच्च संवत्सरसाध्यमेकदेव व्रतम्। माघे मासि तु सप्तम्यामित्यादि तस्याहं पुत्रतां व्रजे इत्यन्तैरेवस्तोभयसप्तम्यामित्यादि परमन्त्रथेत्यन्तवाक्यैर्बोध्यते ।

तदितिकर्त्तव्यता माघमासे तु यो ब्रह्मन् इत्यादिभिरग्रिमवाक्यैः प्रतिपाद्यत इति समयप्रदीपः। कर्म्मत्रयमेव स्वतन्त्रमेतत् । एवं माघमासीय शुक्लैकसप्तमीमात्रे तस्याहं पुत्रतां व्रजे इत्येतद्बोध्यम् फलमपरं शुक्लकृष्णसप्तमीद्वयकं सम्वत्सरव्यापि यशःप्रभृतिसहितपुत्रफलकम् ।

अन्यत्तु यावज्जीवकर्त्तव्यं वरपुत्रफलमित्यन्ये ।

अपरे प्रथमवाक्यबोध्य माघमासशुक्लैकसप्तमीस्वरूमात् पुत्रसमादित्यैकलक्षणफलकस्यैकत्वमपरस्य सम्वत्सरव्रतस्य पक्षद्वयशुक्लसप्तमीव्यापिनः प्रथमादन्यत्वमेव । तद्विवरणतयैकवाक्याग्रिमवाक्यानि। इति मन्यन्ते ।

तत्रैव—

माघस्य शुक्लपक्षे तु सप्तमी या त्रिलोचना ।
जयन्ती नाम सा प्रोक्ता पुण्या पापहरा तथा ॥
उपोष्या येन विधिना शृणु तं पार्व्वतीप्रिय

पारणानि तु चत्वारि कारितानि च पण्डितैः ॥
पञ्चम्यामेकभक्तन्तु षष्ठ्यां नक्तं प्रकीर्त्तितम् ।
उपवासन्तु सप्तम्यामष्टम्यां पारणं भवेत् ॥
माघे च फाल्गुने मासि तथा चैत्रे च सुव्रत ।
वकपुष्पाणि धान्यानि कुङ्कुमञ्च विलेपनम् ॥
नैवेद्यं मोदकाश्चात्र धूपमाज्यमुदाहृतम् ।
प्राशनं पञ्चगव्यञ्च पवित्रीकरणं परम् ॥
मोदकैर्भोजयेद्विप्रान् यथाशक्त्या गणाधिप ।
शाल्योदनञ्च भूतेश दद्याद्भक्त्या द्विजेषु वै ॥
इत्थं सम्पूजयेद् यस्तु भास्करं लोकपूजितम् ।
सर्व्वेषु पारणेष्वेवं सोऽश्वमेधफलं लभेत् ॥
द्वितीये पारणे पूज्य राजसूयफलं लभेत् ।
वैशाखेऽथ ज्यैष्ठे तु आषाढे मासि सुव्रत ॥
पूजार्थमत्र भानोर्वै शतपत्राणि सुव्रत ।
श्वेतञ्च चन्दनं भीम धूपो गुग्गुलुरुच्यते ॥
नैवेद्यं गुड़पूपाश्च प्राशनं गोमयस्य तु ।
भोजने चापि विप्राणां गुड़पूपाः प्रकीर्त्तिताः ॥
द्वितीयमिदमाख्यातं पारणं पापनाशनम् ।
तृतीयं शृणु देवेश पूजार्थं भास्करस्य तु ॥
श्रावणे मासि देवेश तथा भाद्रपदे विभो ।
आश्विने चापि मासे तु रक्तचन्दनमादिशेत् ॥
मालतीकुसुमानीह धूपो विजय उच्यते ।

विजयधूपः परिभाषोक्तः ।

नैवेद्यं घृतपूर्णास्तु भोजनेषु द्विजातिषु ॥

घृतपूर्णाः पक्वान्नविशेषाः। तथा च भामत्यां वाचस्पतिः। यथा नैकशिल्पकुशलः कुम्भकारः स्वयमेव स्थालीं निर्माय घृतपूर्णं पचतीति। प्रसिद्धिरपि तथा पाश्चात्यव्याख्यातृणाम्।

कुशोदकप्राशनन्तु कायशुद्धिकरं परम्।
तृतीयमपि व्याख्यातं पारणं पापनाशनम् ॥
राजसूयाश्वमेधाभ्यां फलदं भास्करप्रियम्।
चतुर्थमप्यहं वच्मि पारणं श्रेयसे नृप ॥
मासि वै कार्त्तिके वीर मार्गशीर्षे तथा शिव।
पुष्ये च कुरुशार्दूल शृणु पुष्पाण्यशेषतः ॥
करवीराणि रक्तानि तथा रक्तञ्च चन्दनम्।
अमृताख्यं तथा धूपं नैवेद्यं पायसं परम्।
अर्जुनीयं तथा वज्रं प्राशनं परमं मतम्।

अमृतधूपो भविष्यपुराण एवोक्तः। तद्यथा ॥

अगुरुं चन्दनं मुस्तां सिल्हकं[1] वृषणन्तथा।
समभागस्तु कर्त्तव्यो धूपश्चामृतसम्भवः ॥ इति

अर्जुनीयं गव्यं, वज्रं घृतम्।

नामानि कथितान्यत्र भास्करस्य महात्मनः।
चित्रभानुस्तथा भानुरादित्यो भास्करस्तथा ॥
प्रीयतामिति सर्व्वेषु पारणेष्वेवमादिषु।
अनेन विधिना यस्तु कुर्य्यात् पूजां विभावसोः।

---

१ B सिह्लकम्।

अस्यान्तिथौ महादेव स याति परमं पदम् ॥

विभावसुरादित्यार्थः ।

कृत्वैवं सप्तमीं वीर सर्व्वान् कामानवाप्नुयात् ।
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥
सरोगो[1] मुच्यते रोगात् शुभं प्राप्नोति पुष्कलम् ।
पूर्णे संवत्सरे भीम कार्य्या पूजा दिवाकरे ॥
गन्धपुष्पोपहारैस्तु ब्राह्मणानाञ्च तर्पणैः ।
नानाविधैः प्रेचणकैः पूजया वाचकस्य च ॥

वाचकः पुराणादिपाठकः ।

इत्थं सम्पूज्य देवेशं ब्राह्मणांश्च प्रपूज्य च ।
वाचकञ्च द्विजं पूज्यं इदं वाक्यमुदीरयेत् ॥
धर्म्मकार्य्येषु मे देव अर्थकार्य्येषु नित्यशः ।
काम्यकार्य्येषु सर्व्वेषु जयो भवतु सर्व्वदा ॥
तदा विसर्जयेद्विप्रान् स्नातकञ्च द्विजोत्तमम् ।
इत्थं कुर्य्यादिमां यस्तु स जयं प्राप्नुयात् सदा ॥
सर्व्वपापविशुद्धात्मा सूर्य्यलोकञ्च गच्छति ।
विमानवरमारूढ़ः कविजोद्भवमुत्तमम् ।
तेजसा रविसङ्काशः प्रभया पतगोपमः ॥

कविजं कविरग्निः तज्जं सुवर्णम् । पतगः सूर्य्यः ।

इति जयन्तीसप्तमी ॥

---

1 B रोगो च ।

ब्रह्मपुराणे—

शुक्लायां माघसप्तम्यां पूषा नाम महारविः ।
अदित्यां काश्यपाज्जज्ञे सहस्रकिरणो महान् ॥
तस्मात् प्रपूजयेत्तत्र[1] सोपवासो जितेन्द्रियः ।
अर्घैः पुष्पैस्तथा धूपैर्दीपैर्भक्ष्यैर्मनोऽनुगैः[2] ।
गीतैर्नृत्यैस्तथा वाद्यैर्होमैर्ब्राह्मणतर्पणैः ॥
अष्टम्याञ्च पुनर्भक्ष्यैः पूज्यो मधुघृतप्लुतैः ।
भक्ष्याणि तानि देयानि भक्षितव्यानि यानि च ॥
इति सूर्य्यपूजा ॥ [3]मन्वन्तरादिश्चेयं सप्तमी ।

शिष्टाः ।

सूर्य्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
तस्यां स्नानञ्च दानञ्च महापातकनाशनम् ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥

अत्र चार्कपत्रसप्तकं बदरपत्रसप्तकञ्च मूर्द्ध्नि कृत्वा ॐ—

यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु ।
तन्मे रोकञ्च शोकञ्च माकरी हन्तु सप्तमी ॥

इति स्नानाचारः । ॐ—

जननी सर्व्वभूतानां सप्तमी सप्तसप्तिके ।
सप्तव्याहृतिके देवि नमस्ते सूर्य्यमण्डले ॥

इति मन्त्रेणार्घ्यं दद्यात् । तथाष्टम्यां देवादितर्पणं विधाय भीष्माय जलदानम् । तच्च दैवविधिना ।

---

१ D तं पूजयेत् । २ C मनोरमैः । ३ AD पुस्तके नास्ति ।

वैयाघ्रपद्यगोत्राय साङ्कृतिप्रवराय च।
अपुत्राय जलं दद्यान्नमस्ते भीष्मवर्म्मणे॥

इति मन्त्रेण। एतस्य गौडस्मृतिराचारो वा प्रापकम्[१] प्रमाणमिति। तदुक्तात् सर्व्ववर्णविषयता।

असवर्णजलदाननिषेधस्तु प्रकरणादपि श्राद्धादिविषय इति समयप्रदीपः॥

विष्णुधर्म्मोत्तरे।

तथैव माघद्वादश्यां प्रदत्ता तिलगौर्नृप।
केशवं प्रीणयेच्चाशु सर्व्वलोकांश्च गच्छति॥

इयञ्च द्वादशी शुक्ला तथैव प्रक्रमात्।

वराहपुराणे। दुर्व्वासा उवाच।

एवं माघे सिते पक्षे द्वादशीन्धरणीश्वतः।
वराहस्य शृणुष्वान्यां पुण्यां परमधार्म्मिकः॥
अगम्यागमनं येन जानताऽजानता कृतम्।
स इमं विधिमाधाय तस्मात् पापाद्विमुच्यते॥
ब्रह्मक्रियाया लोपेन बहुवर्षकृतेन च।
उपोष्येमां सकृद्भक्त्या वेदे संस्कार[२]माप्नुयात्॥

वराहपुराणे—

किञ्चाच बहुनोक्तेन महापरमधार्म्मिक।
प्रागुक्तेन विधानेन संकल्पं स्नानमेव च॥

प्रागुक्तेन मार्गद्वादश्युक्तेन। संकल्पऽस्नानमेव।

---

१ AD आचारप्रापकम्। २ AD देहे संस्कारम्।

कृत्वा देवं समभ्यर्च्य एकादश्यां विचक्षणः ।
पुष्पैर्नैवेद्यगन्धैस्तु अर्चयित्वाच्युतं नरः ॥
पश्चात्तस्याग्रतः कुम्भं जलपूर्णन्तु विन्यसेत् ।
वराहायेति पादौ तु माधवायेति वै कटिम् ॥
क्षेत्रज्ञायेति जठरं विश्वरूपेत्युरो हरेः ।
सर्व्वज्ञायेति वै कण्ठं प्रजानांपतये शिरः ॥
प्रद्युम्नायेति च भुजौ दिव्यास्त्राय सुदर्शनम् ।
अमृतोद्भवायेति शङ्खमेष एवार्चने विधिः ॥
एवमभ्यर्च्य मेधावी तस्मिन् कुम्भे तु विन्यसेत् ।
सौवर्णं रौप्यं ताम्रं वा पात्रं विभवशक्तितः ॥
सर्व्वबीजैस्तु सम्पूर्णं स्थापयित्वा विचक्षणः ।
तत्र शक्त्या तु सौवर्णं वराहं कारयेद्बुधः ॥
दंष्ट्राग्रेणोद्धरन् पृथ्वीं सपर्व्वतवनद्रुमाम् ।
माधवं मधुहन्तारं वाराहं रूपमास्थितम् ॥
सर्व्वबीजभृते पात्रे रत्नगर्भघटोपरि ।
स्थापयेत् परमं देवं जातरूपमयं हरिम् ॥
सितवस्त्रयुगच्छन्नं ताम्राभावे तु वैणवे ।
स्थाप्यार्चयेद् गन्धपुष्पैर्नैवेद्यैर्विविधैः फलैः ॥
पुष्पमण्डपिकां कृत्वा जागरञ्चात्र कारयेत् ।
प्रादुर्भावान् हरेस्तत्र वाचयेद्धार[1]येद्बुधः ॥
एवं संस्तूयमानस्य प्रभातेऽभ्युदिते रवौ ।

[1] C धमयेत् ।

शुचिः स्नातो हरिं पूज्य ब्राह्मणाय निवेदयेत् ॥
वेदवेदाङ्गविदुषे साधुवृत्ताय धीमते ।
विष्णुभक्ताय विप्रर्षे विशेषेण तु दापयेत् ॥
एवं विधानतो दत्त्वा हरिं वाराहरूपिणम् ।
ब्राह्मणाय भवेद् यद्धि फलं तस्य निशामय ॥
इह जन्मनि सौभाग्यं श्रीःकान्तिस्तुष्टिरेव च ।
ज्ञानवान् नितरां[1] भोगी अपुत्रः पुत्रवान् भवेत् ॥
इति वराहद्वादशीव्रतम् ॥

ब्रह्मपुराणे ।

पौर्णमास्यां मघायोगे वायसाः पञ्च जज्ञिरे ।
इन्द्राच्च वरुणाद्वायोर्यमादथ च नैर्ऋतेः ॥
श्राद्धं पितृभ्यः कर्त्तव्यं तिलैः पूज्यास्तथा किल ।
ऐन्द्रवारुणवायव्या याम्या नैर्ऋतिकाश्च ये ॥
वायसाः पुण्ययशसस्ते मे गृह्णन्तु भोजनम् ।
दद्यादनेन मन्त्रेण तेभ्यो भक्तं[2] मधुप्लुतम् ॥
ब्राह्मणान् भोजयित्वा तु भुञ्जीरन् बन्धुभिः सह ।

इति पौर्णमास्यां पितृश्राद्धं तिलैर्वायसेभ्यो बलिदानमिति कृत्यमहार्णवेन कृत्यसमुच्चयः ।

विष्णुधर्म्मोत्तरे ।

माघ्यां कृत्वा तिलैः श्राद्धं सर्व्वपापैः प्रमुच्यते ।

अत्र पार्व्वणविधिना तिलैः श्राद्धकरणम् ।

---

१ C वित्तवान् । २ B भोक्तुम् ।

विष्णुः—

माघी मघायुक्ता चेत् स्नात्वा तस्यां तिलैः श्राद्धं कृत्वा पूतो भवति। नित्यश्राद्धकालेष्वपि माघी विष्णुना कथिता।

देवीपुराणे—

माघ्यान्तु पूजा कर्त्तव्या देवीं वै मङ्गलां यजेत्।

तथा।

धेनुं गुडमयीं माघ्यां दद्याद् यश्चोत्तरायणे।
सर्व्वकाममवाप्नोति ज्यैष्ठे जलमयीन्तथा॥

भविष्यपुराणे—

आलिङ्ग-पीठपर्य्यन्तं यो दद्याद् घृतकम्बलम्।
घृतेन रूपकं रम्यं माघ्यां शम्भोर्महात्मनः॥
मन्वन्तरशतं साग्रं रुद्रलोके महीयते।
सम्यक् प्रेक्षणकं दत्त्वा रुद्रलोके महीयते॥
रूपं पिष्टमयं कृत्वा चित्रेत्वं रत्नभूषितम्।
यज्ञोपवीतसंयुक्तं हेमपादं विशेषतः॥
दन्तेषु मौक्तिकं न्यस्य प्रवालमधरौष्ठयोः।
दद्यादश्मस्य नेत्राभ्यां वैदूर्य्यस्याप्यसम्भवे॥
हेमरूप्यस्य हस्ताभ्यां ताम्रं पादतले तथा।
अण्डजैर्ललितैर्वस्त्रैर्विचित्रैः परिवेष्टयेत्॥
विविधैर्भक्ष्यभोज्याद्यैर्लिङ्गपूजां प्रकल्पयेत्।
भोजयेच्छिवभक्तांश्च विप्रान् भक्त्या च दक्षयेत्॥
प्रीयतां मे महादेवो भक्तान् क्षमापयेद्विजान्।

तेरेव सर्व्वविप्रेन्द्र[1] तद्रूपञ्च शिवालये ॥
नीत्वा समर्पयेद्देव्यां शिवलिङ्गसमीपतः ।
सर्व्वयज्ञफलं प्राप्य सर्व्वयज्ञफलानि च ॥
स्वरूपो रूपदानेन शिवलोके महीयते ।
हेमरूप्यञ्च हस्ताभ्यां हस्तयोर्दक्ष-वामयोः ॥

यथासंख्यं हेमरूप्यञ्च न्यस्य । अण्डजैर्ललितैः वस्त्रैः पट्टविशेष-प्रस्तुतरम्यवस्त्रैः । सर्व्वयज्ञफलं प्राप्येत्यभिधाय सर्व्वयज्ञफलानि चेत्य-भिधानं अशेषयज्ञफलान्यप्यनेन भवन्तीति बोधनार्थम् ।

प्रथमं शर्व्वाँ महादेव इति केचित् । एतच्च हतकम्बल-रूपकदानाख्यं कर्म्म ।

मत्स्यपुराणे—

रथन्तरस्य कल्पस्य वृत्तान्त[2]मधिकृत्य च ।
सावर्णिना नारदाय कृष्णमाहात्म्यसंयुतम् ॥
यत्र ब्रह्मवराहस्य चरितं वर्ण्यते मुहुः ।
तदष्टादशसाहस्रं ब्रह्मवैवर्त्तमुच्यते ॥
पुराणं ब्रह्मवैवर्त्तं यो दद्यान्माघमासि च ।
पौर्णमास्यां स भवने ब्रह्मलोके महीयते ॥

इति महासान्धिविग्रहिकठक्कुर-वीरेश्वरतनुजसप्रक्रिय-
महासान्धिविग्रहिक श्रीचण्डेश्वरविरचिते
कृत्यरत्नाकरे माघमासतरङ्गः ॥

---

१ C सर्व्वविद् पुत्र ।   २ C चिराचम् ।

## अथ फाल्गुनमासकृत्यम् ।

वामनपुराणे ।

फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितम् ।
गोविन्दप्रीणनार्थाय दातव्यं पुरुषर्षभ ॥

दानसागरे ।

फाल्गुने व्रीहयो मुद्गा वस्त्रं कृष्णाजिनादिकम् ।

इति पठित्वा आदिशब्देन[1] कृष्णेतरचर्म्मग्रहणमिति व्याख्यातम् । अत्र च कल्पतरु-पारिजातालिखितोऽप्यादिशब्दो वामनपुराणे कृत्यसमुच्चये च दृष्टः, तेन सागरपाठो मनाक् सबलः । प्रावरण-मात्रस्यैवापेक्षितत्वात् । वस्त्रकृष्णाजिनान्यप्रावरणमेवादिपदार्थ इति केचित् ।

श्रीमहाभारते ।

भगदेवन्तु यो मासमेकभक्तेन क्षिपेत् ।
स्त्रीषु वल्लभतां याति वश्यास्तस्य भवन्ति ताः ॥

व्रतमेतत् ।

भविष्यपुराणे ।

देवार्च्चां फाल्गुने मासि कृत्वा पिष्टमयीन्तु वै ।
गन्धमाल्यैरलङ्कृत्य स्थापयेद्भास्करालये ॥
विमानैः सूर्य्यसङ्काशैर्गीतवाद्यसमाकुलैः ।
समैकादशसाहस्रं सूर्य्यलोके महीयते ॥
पुनरेत्य इमं लोकं यथेष्टं विन्दते पतिम् ।

---

[1] C पदेन ।

तैरेव सर्व्वविप्रेन्द्र[1] तद्रूपञ्च शिवालये ॥
नीत्वा समर्पयेद्देव्यां शिवलिङ्गसमीपतः ।
सर्व्वयज्ञफलं प्राप्य सर्व्वयज्ञफलानि च ॥
स्वरूपो रूपदानेन शिवलोके महीयते ।
हेमरूप्यञ्च हस्ताभ्यां हस्तयोर्दक्ष-वामयोः ॥

यथासंख्यं हेमरूप्यञ्च न्यस्य । अण्डजैर्लक्षितैः वस्त्रैः पट्टविशेष-प्रसूतरम्यवस्त्रैः । सर्व्वयज्ञफलं प्राप्येत्यभिधाय सर्व्वयज्ञफलानि चेत्य-भिधानं अशेषयज्ञफलान्यप्यनेन भवन्तीति बोधनार्थम् ।

प्रथमं शर्व्वां महादेव इति केचित् । एतच्च हतकम्बल-रूपकदानाख्यं कर्म्म ।

मत्स्यपुराणे—

रथन्तरस्य कल्पस्य वृत्तान्त[2]मधिकृत्य च ।
सावर्णिना नारदाय कृष्णमाहात्म्यसंयुतम् ॥
यत्र ब्रह्मवराहस्य चरितं वर्ण्यते मुहुः ।
तदष्टादशसाहस्रं ब्रह्मवैवर्त्तमुच्यते ॥
पुराणं ब्रह्मवैवर्त्तं यो दद्यान्माघमासि च ।
पौर्णमास्यां स भवने ब्रह्मलोके महीयते ॥

इति महासान्धिविग्रहिकठक्कुर-वीरेश्वरतनुजमप्रक्रिय-
महासान्धिविग्रहिक श्रीचण्डेश्वरविरचिते
कृत्यरत्नाकरे माघमासतरङ्गः ॥

---

१ C सर्व्वविद् पुन ।  २ C चिराचम् ।

## अथ फाल्गुनमासकृत्यम्।

वामनपुराणे।

फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितम्।
गोविन्दप्रीणनार्थाय दातव्यं पुरुषर्षभ॥

दानसागरे।

फाल्गुने व्रीहयो मुद्गा वस्त्रं कृष्णाजिनादिकम्।

इति पठित्वा आदिशब्देन कृष्णेतरचर्म्मग्रहणमिति व्याख्यातम्।
अत्र च कल्पतरु-पारिजातालिखितोऽप्यादिशब्दो वामनपुराणे कृत्यसमुच्चये च दृष्टः, तेन सागरपाठो मनाक् सबलः। प्रावरण-मात्रस्यैवापेक्षितत्वात्। वस्त्रकृष्णाजिनान्यप्रावरणमेवादिपदार्थ इति केचित्।

श्रीमहाभारते।

भगदैवन्तु यो मासमेकभक्तेन क्षिपेत्।
स्त्रीषु वल्लभतां याति वश्यास्तस्य भवन्ति ताः॥

व्रतमेतत्।

भविष्यपुराणे।

देवार्चां फाल्गुने मासि कृत्वा पिष्टमयीन्तु वै।
गन्धमाल्यैरलङ्कृत्य स्थापयेद्भास्करालये॥
विमानैः सूर्य्यसङ्काशैर्गीतवाद्यसमाकुलैः।
सप्तैकादशसाहस्रं सूर्य्यलोके महीयते॥
पुनरेत्य इमं लोकं यथेष्टं विन्दते पतिम्।

---

१ C पदेन।

अत्र मासव्याप्येकभक्तादिकं कार्त्तिकमासोक्त भविष्यपुराणीय-कामव्रतवदनुसन्धेयम् ॥

व्रतमधिकृत्य स्कन्दपुराणे।

एकभक्तन्तु कुर्व्वाणः फाल्गुने मासि नित्यशः।
स्त्रीषु सौभाग्यमाप्नोति स्त्रियश्च परमप्रियाः ॥

अत्र "धनधान्यसमृद्धे तु कुले जायेत मानवः"।

इति चैत्रमासीयमेव फलम् संबध्यत इति पारिजातः। तन्न-अग्रिमेण "स्त्रीषु सौभाग्यमाप्नोति स्त्रियश्च परमप्रियाः" इति खण्डेन समर्थितत्वात् तत्फलेनैव फलवत्त्वात्।

विष्णुधर्म्मोत्तरे।

प्रियङ्गुं फाल्गुने दत्त्वा प्रियो भवति भूतले।

प्रियङ्गुः काउनीति प्रसिद्धा।

भविष्यपुराणे।

फाल्गुने मासि राजेन्द्र यः कुर्य्यान्नक्तभोजनम्।
श्यामाक-चीर-नीवारैर्जितक्रोधो जितेन्द्रियः॥
षष्ठ्यां वाऽप्यथ सप्तम्यामुपवासपरो भवेत्।
अष्टम्यान्तु महास्नानं पञ्चगव्यघृतादिभिः॥
त्वग्भिश्च चीरवृक्षाणां स्नापयित्वा प्रपूजयेत्।
सौरभेयीन्ततो दद्याद्रक्ताङ्गीं रश्मिमालिने॥
गत्वादित्यपुरं रम्यं मोदते शाश्वतीः समाः।

अत्र पौषोक्तोभयसप्तमीसामान्यधर्म्मान्वयो महास्नाने, अन्यच्च कथित मध्वा[1]दिपरिग्रहः।

---

१ C मधादि।

तत्रैव ।

प्राप्ते तु फाल्गुने मासि यः कुर्य्यान्नक्तभोजनम् ।
यवान्नं भुञ्जमानस्तु त्यक्त्वा दूरेण योषितम् ॥
[1]कृतोपवासः सप्तम्यां पक्षयोरुभयोरपि ।
पूजयेद्विधिवद्दुर्गां नाम्ना गौरीति वै नृप ॥
कृत्वा ताम्रमयीं वीर द्वात्रिंशार्द्धभुजां शुभाम् ।
पीतैस्तु पूजयेत् पुष्पैश्चन्दनागुरुमिश्रितैः ॥
दध्योदनन्तु नैवेद्यं धूपोऽयं सिल्हकः[2] परः ।
स्नान-प्राशनयोर्धन्यं गोमूत्रं कायशोधनम् ॥
नवम्याञ्च महादेवस्नपनन्तु घृतादिभिः ।
कुमारीर्भोजयेद्भक्त्या ब्राह्मणांश्च स्वशक्तितः ॥
एवं सम्पूजयेद्भक्त्या दुर्गां देवीं नरोत्तम ।
स याति परमं स्थानं यत्र सा चण्डिका स्थिता ॥

इत्युभयनवमीव्रतम् ॥

अष्टकाधिकारे छन्दोगविषये वायुपुराणम् ।

शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः ।

तृतीया वैश्वदेवीनामिका ।

तथा च वाजसनेयिविषये ब्रह्मपुराणम् ।

ऐन्द्र्यान्तु प्रथमायान्तु शाकैः सन्तर्पयेत् पितॄन् ।
प्राजापत्ये द्वितीयायां मांसैः शुद्धैश्च तर्पयेत् ॥
वैश्वदेव्यां तृतीयायामपूपैश्च यथाक्रममिति ॥

---

१ C कृतोपवाससप्तम्यां ।   २ C D सिल्हकः ।

ब्रह्मपुराणे—

फाल्गुनस्य तु मासस्य कृष्णाष्टम्यां मही मिता ।
नारदप्रेरितैर्विप्रैर्दक्षपुत्रैः सिसृक्षुभिः ।
सबुद्ध्या सूक्ष्ममानेन समुद्रगिरिवर्जिता ॥
अतोऽर्थन्तु महीमानं स्वल्पन्तत्र निगद्यते ।
पितृभिः पूर्व्वं देवैस्तु कृत्वा तत्र महत्तपः ॥
सापूपं प्रार्थितं श्राद्धं मनुष्येभ्यो जनार्द्दनात् ।

कर्म्मान्तरम् ।

अथ शस्यानि सर्व्वाणि मुनिभिः कमलोद्भवात् ॥
प्रजानां वर्द्धनार्थाय कदाचित्तत्र सर्व्वदा ।
जाता दाशरथेः पत्नी तस्मिन्नहनि जानकी ॥
उपोषितो रघुपतिः समुद्रस्य तटे तदा ।
सर्व्वस्यैवेश्वरस्तस्मात्तत्र कर्त्तव्य एव हि ॥
सापूपैस्तैश्च सम्पूज्या विप्रसम्बन्धिबान्धवाः ।
रामपत्नी च सम्पूज्या सीता जनकनन्दिनी ॥
ततो नवम्यां लक्ष्मीश्च ब्राह्मणाश्च बहुश्रुताः ।
च्छागेन पिष्टभोज्येन मधुयुक्तेन सर्व्वदा ।
बहुप्रकारैर्भोज्यैश्च दशम्यां मित्रबान्धवाः ॥
तर्प्यश्चात्मा तथा पूज्यः श्रोतव्यं गीतवादितम् ।
मङ्गलालम्भनं कार्य्यं नित्यमेव दिनत्रयम् ॥

इति सीतापूजा ॥

---

१ C सर्व्वं— ।

तथा—

कृष्णायां फाल्गुने मासि द्वादश्यां श्रवणे सति।
चकार भगवान् विष्णुः पिण्डनिर्व्वपणं महत्॥
पितामहेभ्यः श्राद्धन्तु तिलैश्च कृतवान् पुरा।
सोपवासो हरिस्तस्मात्तत्र सम्पूजयेत्तिलैः॥
तिलैरभ्यर्चयेद्देवान् तिलांश्च जुहुयात्तथा।
तिलतैलेन दीपांश्च दद्याद्देवगृहेष्वपि॥
तिलान् दद्यात्तु विप्रेभ्यः पितृभ्यश्च तिलोदकम्।
तिलांश्च भक्षयेत्तत्र धर्म्मवृद्ध्यर्थमात्मनः॥

इति षट्तिलीविधिः॥

विष्णुः—

माघ्यां समतीतायां कृष्णद्वादश्यां [1]सश्रवणां प्राप्य वासुदेवाग्रतो महावर्त्तिद्वयेन दीपं दद्यात्। दक्षिणपार्श्वे महारजनयुक्तेन समग्रेण वाससा घृततुलामष्टाधिकां दत्त्वा वामपार्श्वे तैलतुलां साष्टां दत्त्वा श्वेतेन समग्रेण वाससा एतत् कृत्वा यस्मिन् राष्ट्रे यस्मिन् देशे यस्मिन् कुलेऽभिजायते तत्र तत्रोज्ज्वलो भवति।

तुलां पलशतं साष्टामष्टपलाधिकाम्।

विष्णुधर्म्मोत्तरे—

माघे श्रवणसंयुक्ता कृष्णा स्याद्द्वादशी यदा।
तिलदानं महत्पुण्यं विनापि श्रवणेन तु॥

---

१ A D सुश्रवणाम्।

श्रवणायोगव्यतिरेके यन्महत् पुण्यं तत् श्रवणयुक्तद्वादशीदान-जन्यपुण्यापेक्षयाऽल्पमिति ज्ञेयम्। अत्र कर्म्मणि शुक्लादिमासः, उत्सर्गात् सागरानुसाराच्च।

तथा—

श्रवणद्वादशीयोगे कृष्णपक्षे तथैव च।
घृतेन दीपा दातव्या स्तिलैर्वा यदुनन्दन॥

अत्र तथैव चेत्युक्तेः पूर्व्ववाक्यस्थं महत् पुण्यफलं सम्पद्यते।

ब्रह्मपुराणे—

अथ कृष्णचतुर्द्दश्यां फाल्गुने मासि शङ्करः।
ब्रह्म-विष्णू मोहयित्वा जगल्लिङ्गेन मायया॥
जगल्लिङ्गसहस्रैश्च पूरयामास तत्क्षणात्।
ततः प्रभृति रूढ़ा च लिङ्गपूजा कपर्द्दिनः॥

रूढ़ा जाता।

गौरमृत्तिकया लिङ्गं तस्मात्तत्र सुशोभनम्।
कुर्य्यात् प्रमाणसंयुक्तं त्रयोदश्यामुपोषितः॥

प्रमाणसंयुक्तं मानोन्मानसंयुक्तम्।

देवोत्थानविधानोक्तैर्द्रव्यैस्तत्र प्रपूजयेत्।

देवोत्थानविधानोक्तैः पुष्पैर्धूपैश्च नैवेद्यैरित्यादिना द्रव्यैर्वीर क्रयक्रीतै[1] रित्यन्तेन ब्रह्मपुराणोक्तैः।

अर्घैः सुगन्धैर्माल्यैश्च रत्नवस्त्रानुलेपनैः।
नैवेद्यैर्विविधाकारैर्होमैर्ब्राह्मणतर्पणैः॥

---

१ C कृतैः।

भुक्त्वा रात्रौ ततः कार्य्यो नृत्यगीतैः प्रजागरः ।
श्रोतव्याः शिवधर्म्माश्च प्रादुर्भावाश्च शाङ्कराः ॥
अहिंसालक्षणं धर्म्मं समाश्रित्याथ शङ्करः ।
रम्यैः पिष्टमयैः पूज्यः पशुभिश्च स्वलङ्कृतैः ॥

लोके त्वागमकल्पेन शिवरात्रिं प्रचारयन्ति ।

अत्र त्रयोदश्यामेकाहारः चतुर्द्दश्यामुपवासः, रात्रिप्रहरचतुष्टये पूजाचतुष्टयम् । प्रजागरादि च शिवालये । अन्यत्रापि शिवलिङ्गमुत्थाप्य व्रतमिदं कुर्व्वन्ति । यथाशक्ति घृतादिना लिङ्गस्नानं शिवमूर्त्तिपूजा चेति ।

फाल्गुने कृत्तिवासेश्वरं चतुर्द्दश्यौच्च प्रकृत्य लिङ्गपुराणम् ।

उपोष्य रजनीमेकां ब्रह्महत्यां व्यपोहति ।

आग्नेयपुराणे । अम्बरीष उवाच ।

धेनवो हरये देया वृषाश्चैव कपर्द्दिने ।
एतन्मे निश्चयं ब्रूहि गुरो संशयमेव तत् ॥

वशिष्ठ उवाच ।

व्रतरूपाणि दानानि नानारूपाणि पार्थिव ।
तानि तेऽहं प्रवक्ष्यामि लोकानां हितकाम्यया ॥
पुरा पृष्टेन रुद्रेण पार्व्वत्याः कथितानि तु ।
शृणुष्वैतानि सर्व्वाणि व्रतयुक्तानि भूपते ॥
यश्चरेदब्दमेकन्तु नक्तं शिवपरो नरः ।
पूजयंश्च चतुर्द्दश्यां फाल्गुनस्य यतव्रतः ॥
सम्पूज्य विधिवद् भक्त्या वृषं सर्व्वगुणान्वितम् ।

इत्यादिप्राय राजेन्द्र शिवो मे प्रीयतामिति ॥
एतच्छिवव्रतं नाम महापातकनाशनम् ।
शिवरूपधरो नित्यं शिवलोके महीयते ॥

ब्रह्मपुराणे ।

अमावास्यासु पूज्यास्तु रुद्रोऽग्निर्ब्राह्मणस्तथा ।

समयप्रदीपे गरुडोऽग्निर्वरुणस्तथेति पाठः । स च कृत्यसमुच्चय-कल्पतरुप्रभृतिपाठविरुद्धः ।

मांसौदनैर्लोपिकाभिः पूज्यश्चात्मा सबान्धवः ।

इयञ्चामावास्यायां रुद्राग्निपूजा स्वतन्त्रैव । कृत्यसमुच्चये फाल्गुनकृत्यसङ्कलनावसरे लिङ्गपूजा रुद्रादिदेवगृहादिभूषा चेत्यादौ स्वतन्त्रकर्म्मगणमध्यपाठात् ।

श्रीविष्णुपुराणे ।

माघे सिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन ।
ऋक्षेण कालः स परः पितॄणां नल्वपुण्यैर्नृप लभ्यतेऽसौ ॥
काले धनिष्ठा यदि नाम तस्मिन्
भवन्ति भूपाल तदा पितृभ्यः ।
दत्तं जलान्नं प्रददाति तृप्तिं
वर्षायुतं तत्कुलजैर्मनुष्यैः ॥
अत्रैव चेद् भाद्रपदा तु पूर्व्वा
काले यदा तत् क्रियते मनुष्यैः ।
श्राद्धं तदा तृप्तिमवाप्य तेन
युगं सहस्रं पितरः स्वपन्ति ॥

अत्र माघ्यनन्तरपक्षस्यैव शुक्लादिमासरीत्या माघामितत्वमुक्तम्।

अगस्त्य उवाच।

अतः परं महाराज सौभाग्यकरणव्रतम्।
शृणु येनास्य सौभाग्यं स्त्रीपुंसामभिजायते॥
फाल्गुनस्य तु मासस्य तृतीया शुक्लपक्षतः।
उपोषितस्य नक्तञ्च शुचिना सत्यवादिना[१]॥
सश्रीकञ्च हरिं पूज्य रुद्रं वा उमया सह।
गम्भीरायेति वै पादौ सुभगायेति वै कटिम्॥
उदरं देवदेवेति शितिकण्ठेति वै उरः।
त्रिलोचनायेति शिरो रुद्रायेति समन्ततः॥
एवमभ्यर्च्य मेधावी विष्णुं लक्ष्म्या समन्वितम्।
हरं वा गौरीसंयुक्तं गन्धपुष्पादिभिः क्रमात्॥
ततस्तस्याग्रतो होमं कारयेन्मधुसर्पिषा।
तिलैः सह महाराज सौभाग्यपतयेति च॥
ततस्त्वक्षारसंयुक्त निःस्नेहं धरणीतले।
गोधूमान्नन्तु भुञ्जीत कृष्णेऽप्येवं विधिः स्मृतः॥
आषाढादि द्वितीयान्तु पायसं तत्र भोजयेत्।
यवान्नन्तु ततः पश्चात् कार्त्तिकादिषु पार्थिव॥
श्यामाकान्नं हविर्वापि यथाशक्त्या प्रसन्नधीः।
ततस्तं ब्राह्मणे दद्यात् पात्रभूते विचक्षणे॥
अनङ्गहीने वेदानां पारगे साधुवर्त्तिनि।

---

१ A D—भाषिणा।

सदाचारयुते दद्यादसद्वृत्तेऽपि[1] भूपते ॥
षड्भिः पात्रैरुपेतन्तु ब्राह्मणाय निवेदयेत् ।
एकं मधुघृतं पात्रं द्वितीयं घृतपूरितम् ॥
तृतीयं तिलतैलस्य चतुर्थं गुड़संयुतम् ।
[2]पञ्चमं लवणापूर्णं षष्ठं गोक्षीरसंयुतम् ॥
एतान् दत्त्वा रसान् राजन् सप्तजन्मान्तरं भवेत् ।
सुभगो दर्शनीयश्च नारी वा पुरुषोऽथवा ॥

इति सौभाग्यव्रतम् ॥

भविष्यपुराणे— ब्रह्मोवाच—

सप्तम्यां शुक्लपक्षे तु फाल्गुनस्येह यो नरः ।
जपेद्धेलीति देवस्य नाम भक्त्या पुनः पुनः ॥
देवार्च्चने चाष्टशतं कृत्वैवन्तु जपेच्छतम् ।
स्नातः प्रस्थानकाले तु उत्थाने स्खलितेषु च ॥
पाषण्डपतितांश्चैव तथैवान्त्यावसायिनः ।
नालपेत तथा भानुमर्च्चयेच्छ्रद्धयान्वितः ।
इदञ्चोच्चारयेद्भानुं मनस्याधाय तत्परः ॥
हंस हंस कृपालुस्त्वमगतीनां गतिर्भव ।
संसारार्णवमग्नानां त्राता भव दिवाकर ॥
एवं प्रसाद्योपवासं कृत्वा नियतमानसः ।
पूर्व्वाह्ण एव चान्येद्युः शकृत् प्राश्यार्ज्जुनीयकम् ॥
अर्ज्जुनीयकं शकृत् गोमयम् ।

---

१ C अल्पवित्तेऽपि ।  २ C पुस्तके अधिका पङ्क्तिः ।

स्नातोऽर्चयित्वा हंसेति पुनर्नाम प्रकीर्त्तयेत् ।
वारिधाराचयञ्चैव निक्षिपेदेव पादयोः ।
चैत्र-वैशाखयोश्चैव तद्वज्ज्यैष्ठेऽपि पूजयेत् ॥
मर्त्यलोके गतिं श्रेष्ठां कृत्वा प्राप्नोति वै नरः ।
उत्क्रान्तश्च व्रजेत् कृत्वा दिव्यं हंसालयं शुभम् ॥
वृषध्वजप्रसादाद्वै संक्रन्दनसमो भवेत् ।
आषाढ़े श्रावणे चैवं मासि भाद्रपदे तथा ॥
तथैवाश्वयुजे चैव अनेन विधिना नरः ।
उपोष्य सम्पूज्य तथा मार्त्तण्डेति प्रकीर्त्तयेत् ॥
गोमूत्रप्राशनात् पूतो गणाधिपपुरं व्रजेत् ।
आराधितस्य जगतामीश्वरस्याव्ययात्मनः ॥
उत्क्रान्तिकाले स्मरणं भास्करस्य तथाश्रुते ।
चौरस्य प्राशनं कृत्वा विधिरेष मयोदितः ॥
कार्त्तिकादि यथान्यायं कुर्य्यान्मासचतुष्टयम् ।
तेनैव विधिना कृत्वा भास्करेति प्रकीर्त्तयेत् ॥
स याति भानुसालोक्यं भास्करं स्मरति चये ।
[1]प्रतिमासं द्विजातिभ्यो दद्याद्दानं यथेच्छया ॥
चातुर्मास्ये तु सम्प्राप्ते कृत्वा पुस्तकवाचनम् ।
कथां वा भास्करस्येह तद्गीतककथापि वा ॥
धर्म्मश्रवणमिष्टञ्च सदा धर्म्मध्वजस्य च ।

धर्म्मध्वजः सूर्य्यः ।

---

१ C पुस्तके अधिकः ।

वाचकं पूजयित्वा तु तस्मात्कार्य्यञ्च श्रद्धया ॥
श्राद्धमन्त्रेन पक्केन वाचकेन द्विजेन तु ।
द्वितीयेन च तथा युक्तमभीष्टं भास्करस्य हि ॥
एवमन्ते गतिं श्रेष्ठां देवानामनुकीर्त्तयेत् ।
प्राप्नुयात् त्रिविधां कृष्ण त्रिलोकाख्यां नरः सदा ॥
कथितं पारणं यत्ते प्रथमं गोधराधर ।
आधिपत्यं तथा भोगांस्तेन प्राप्नोति मानुषान् ॥
द्वितीयेन तथा भोगान् गोचारैः प्राप्नुयान्नरः ।
सूर्य्यलोकं तृतीयेन पारणेन तथाप्नुयात् ॥
एवमेव मयाख्यातं गतिप्रापकमुत्तमम् ।
विधानं देवशार्दूल यदुक्तं सप्तमीव्रते ॥
यस्त्वेतां सप्तमीं कुर्य्यात् त्रिगतिं श्रद्धया नरः ।
तथा भक्त्या च वै नारी प्राप्नोति त्रिविधां गतिम् ॥
एषा पुण्या पापहरा त्रिगतिः समुदाहृता ।
आराधनाय शस्तैषा सदा भानोर्हुनावहा ॥
पठतां शृण्वताञ्चैव सर्व्वपापभयापहा ।
तथा सुकर्म्मपुण्या च त्रिवर्गज्येष्ठदा मता ॥
गोचारिरिन्द्रः । त्रिवर्गज्येष्ठो धर्म्मः ।

त्रिगतिः सप्तमीयम् ॥

ब्रह्मपुराणे—

फाल्गुने मासि शुक्लायामष्टम्यां केशवः पुरा ।
महीं सृष्ट्वा तु मनसा सशैलवनकाननाम् ॥

दक्षं प्रजापतिं प्राह सृष्टिमापूरयस्व मे।
तस्य तद्वचनं श्रुत्वा स मुनिश्च महीन्नतः॥
मापयामास विधिवत् बृहन्मानेन तत्क्षणात्।
द्वीपार्णव-मरुच्चन्द्र-नदी-वर्षसमन्वितैः॥
बृहन्मानं समुद्रस्य शतयोजनमात्रकम्।
चक्रे रघुपतिस्तत्र वृक्ष-पाषाण-कर्द्दमैः॥
त्रिकूटशिखरप्रान्तसंस्थितो भगवांश्च सः।
बृहच्च तन्महीमानं पुराणो वीक्ष्य विस्मितः॥
इयं मही मया सृष्टा पद्माभिति विचिन्तयन्।
सुतस्य कुम्भकर्णस्य महामानं स्मरन्निव॥
बृहन्मानेन द्वीपाश्च सबाह्याभ्यन्तरे गृहे।
दत्तास्तत्र महीदानं कृतं माल्यादिभिः सदा॥
[1][तस्माद्बृहन्महीमानं यथा कार्य्यं तथा शृणु।
अनडु .... रष्टम्यां सुस्नातैः समलङ्कृतैः॥
लक्ष्मीः सीता च सम्पूज्या गन्धमाल्यादिभिः सदा।]
ततः प्रदोषसमये दीपः शतसहस्रशः॥
नरैर्गृहे गृहे देयाः सर्व्वदेवेभ्य एव च।
देवेभ्यश्च पितृभ्यश्च ततो वाह्ये च वेश्मनः॥
तेषाञ्चोपरि देयाश्च तावत्संख्याश्च दीपकाः।
दत्तशिष्टं ततो भोज्यं भक्षितव्यं सबन्धुभिः॥
द्वितीयेऽह्नि च मध्याह्ने शोभनैर्माल्यदामभिः।

---

१ [ ] चिह्नित पंक्तित्रयं C पुस्तके अधिकं।

गृहाणि भूषणीयानि तथा देवगृहाण्यपि ॥
सीतां सम्पूज्य भोक्तव्यं नृत्यगीतसमाकुलम् ।
पक्वान्नं नित्यदानञ्च तत्र देयन्तु याचते ॥
नान्यत् किञ्चित् प्रार्थितव्यं लब्धं ग्राह्यमयत्नतः ।

इति देवगृहादिभूषाविधिः ॥

तथा तत्रैव ।

दशम्याञ्चापि कर्त्तव्यं बलिकर्म्म तथात्मनः ॥
मङ्गलालभनं कार्य्यमुत्सवस्य विशेषतः ।
ब्राह्मणेभ्यो धनं देयं भृत्येभ्यश्च यथाक्रमम् ॥
धान्यमन्नं सुवर्णञ्च वस्त्रमाभरणन्तथा ।
गोभूमिरत्नवेश्मानि देयानि प्रयतात्मनः ॥
सम्प्राप्तान् ग्राहयेत् सम्यक् न तत्र क्षपयेन्मनः ।
न कश्चिदसुखस्तत्र कर्त्तव्यश्चागतो जनः ॥
स्वजातिविहितं पानं पेयं देयञ्च याचते ।
शय्यासने च कर्त्तव्ये गन्धपुष्पाधिवासिते ॥
स्त्रियः पूज्याः स्वलङ्कार्य्याः प्रहृष्टाश्च सुरचिताः ।
निशायां क्रीड़माना या नृत्येषु कृतभोजनाः ॥

वराहपुराणे— दुर्वासा उवाच—

तद्वच्च फाल्गुने मासि शुक्लपक्षे तु द्वादशीम् ।
उपोष्य प्रोक्तविधिना हरिमाराधयेद्बुधः ॥

तद्वदित्यनेन वराहपुराणीयमत्स्यद्वादश्युक्तधर्म्मातिदेशः ।

नरसिंहाय पादौ तु गोविन्दायोदरन्तथा ।

कटिं विश्वभुजे पूज्यमनिरुद्धेत्युरस्तथा ॥
कण्ठन्तु शितिकण्ठाय [1]पिङ्गकेशाय वै शिरः।
असुरध्वंसनायेति चक्रन्तोयात्मने तथा ॥
तदग्रे स्थाप्य तु घटं सितवस्त्रयुगान्वितम्।
तत्रोपरि नृसिंहन्तु सौवर्णं ताम्रभाजने ॥
सौवर्णं शक्तितः कृत्वा दारुवंशमयेऽपि वा।
रत्नगर्भघटे स्थाप्य तत्र पूज्य विधानतः।
द्वादश्यां वेदविदुषे ब्राह्मणाय निवेदयेत्।
एवं कृते फलं प्राप्तं यत्पुरा पार्थिवेन तु ॥
वत्सनाम्ना च तत्तेऽहं प्रवक्ष्यामि महामुने।
तस्य व्रतान्ते भगवान् नरसिंहस्तुतोष च ॥
चक्रं प्रादाच्च शत्रूणां विध्वंसनकरं मृधे।
तेनास्त्रेण स्वयं राज्यं जितवान् स नृपोत्तमः ॥
राज्ये स्थित्वाऽश्वमेधानां सहस्रमकरोत् प्रभुः।
अन्ते च ब्रह्मलोकाख्यं पदमागाच्च सत्तमम् ॥
एषा धन्या पापहरा द्वादशी भवतो मुने।
कथितेमां प्रयत्नेन श्रुत्वा कुरु यथेच्छकम् ॥

इति नरसिंहद्वादशी।

फाल्गुनशुक्लद्वादश्यामित्यनुवृत्तौ विष्णुधर्मोत्तरे—

फाल्गुने सर्व्वगन्धानां नात्र कार्य्या विचारणा।

---

[1] C लिङ्गकेशाय वै नमः।

सर्व्वगन्धानां दानं महाफलमित्यनुषज्यते ।

सर्व्वगन्धाश्च परिभाषोक्ताः ।

फाल्गुने पुष्यसहिता द्वादशी पावनी परा ।
नक्षत्रयुक्तास्वेतासु तथा दानमुपोषितम् ॥
सर्व्वं महाफलं ज्ञेयमनन्तं द्विजसत्तमाः ।

ब्रह्मपुराणे—

फाल्गुन्यामर्य्यमा जातस्त्वदितौ कश्यपादपि ।
अत्रेश्चाप्यनसूयायां जातः पूर्व्वमथ शशी ॥
तौ तत्र पूज्यौ विधिवत्प्राप्ते चन्द्रोदये सति ।
गीतनृत्यैस्तथा वाद्यै रात्रौ कार्य्यः प्रजागरः ॥

इति चन्द्रार्कादिपूजा ॥

विष्णुधर्म्मोत्तरे—

आस्तीर्णं शयनं दत्त्वा फाल्गुन्यां ब्राह्मणाय तु ।
रूपद्रविणसंयुक्तां भार्य्यां पत्नवतीन्तथा ॥
नरः प्राप्नोति धर्म्मज्ञाः पुष्टिमाप्नोत्यनुत्तमाम् ।
तथा नार्य्यपि भर्त्तारं नात्र कार्य्या विचारणा ॥

आस्तीर्णं दारुमयप्रसारितखट्टोपरि तूलकादिरूपम् । धर्म्मज्ञा इति सम्बोधनम् । अत्र चानुत्तमपुष्टिरूपफलभेदात् नक्षत्रविशेषानिर्द्देशाच्च विष्णुविहितशय्यादानाभिन्नता, अतएव दानसागरे पृथगेव लिखितम्[1] ।

---

१ D लिखनम् ।

विष्णुः — फाल्गुनी फल्गुनीयुता चेत् स्यात् तस्यां ब्राह्मणाय सुसंस्कृतं विस्तीर्णं शयनं निवेद्य भार्य्यां मनोज्ञां पत्त्रवतीं द्रविणवतीञ्चाप्नोति नार्य्यपि तु भर्त्तारम्। पत्त्रवतीं भ्रात्रादिबन्धुमतीम्।

त्रिरात्रोपोषितो दद्यात् फाल्गुन्यां भवनं शुभम् ।
आदित्यलोकमाप्नोति धामव्रतमिदं स्मृतम् ॥

देवीपुराणे—

फाल्गुन्यां पूजयेद्देवीं चण्डिकेति च या मता ।
मातृणाञ्च विशेषेण तत्र पूजा विधीयते ॥

मत्स्यपुराणे—

यत्राग्निलिङ्गमध्यस्थः प्राह देवो महेश्वरः ।
धर्म्मार्थकाममोक्षार्थमाग्नेयमधिकृत्य च ।
कल्पान्तं लिङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम् ॥
तदेकादशसाहस्रं फाल्गुन्यां यः प्रयच्छति ।
तिलधेनुसमायुक्तं स याति शिवसात्मताम् ॥

इति महामान्धिविग्रहिकठक्कुर-श्रीवीरेश्वरात्मज महामान्धि-
विग्रहिकठक्कुर-श्रीचण्डेश्वरविरचिते कृत्यरत्नाकरे
फाल्गुनमासतरङ्गः ॥

कृष्णादिमासक्रमेण कथितकृत्यमिदं चैत्रतरङ्गसङ्गततया तत्रैव लिखितुमुचितमपि कल्पतरुकारादि-लिखनानुसारादेतदनन्तरं लिख्यते ।

ब्रह्मपुराणे—

अथ चैत्रे तु कृष्णायां प्रतिपद्यपि सर्व्वदा ।
झल्ल-मल्ल-नटादीनां द्रष्टव्यं कौतुकं पृथक् ॥
प्रतिपत्तः समारभ्य पञ्चमीं यावदेव हि ।
पूजाकर्म्म तथा कार्य्यं स्त्रीजनस्यात्मनस्तथा ॥
भोजनं पर्य्यटप्रायं भोज्यं देयञ्च याचते ।

झल्लमल्लौ सङ्करजातिविशेषौ ।

तत्रैव

चैत्रे तु कृष्णपञ्चम्यां कश्मीरा[1] तु रजस्वला ।
नित्यं भवति तस्मात्तां कृत्वा शैलमयीं स्त्रियः ॥
अभ्यङ्गवस्त्रनैवेद्यैः पूजयन्ति दिनत्रयम् ।
पुष्पालङ्कारधूपैश्च गोरसं वर्जयन्ति च ॥

कश्मीरा[2] धरित्री ।

अष्टम्यान्तु ततः स्नाप्य ताभिरेव गृहे गृहे ।
सुस्नाताभिः सुहृष्टाभिर्जीवपत्नीभिरेव हि ॥
भूषिताभिः शुभैर्वस्त्रैर्माल्यै गन्धैर्विशेषतः
अनन्तरं द्विजैः स्नाप्य सर्व्वौषधिजलैर्जनैः ॥
गन्धैर्बीजैस्तथा रत्नैः फलैः सिद्धार्थकैस्तथा ।

---

१ A B काश्मीरा । २ A B D काश्मीरा ।

स्नापयित्वा च तां देवीं गन्धैर्माल्यैश्च पूजयेत् ॥
वस्त्रालङ्कारपुष्पैश्च तथा पुष्पैश्च गोरसैः।
मुद्गपिष्टैस्त्रिकोणैश्च भक्ष्यैश्चैव हि शालिजैः ॥
पयसा पायसैर्दद्ध्यैस्तथा ब्राह्मणतर्पणैः।
तन्निवेदितशिष्टन्तु प्राशितव्यं गृहे गृहे।
तन्त्रीवाद्यं सुमधुरं ततः श्रोतव्यमादरात्।
अतःपरमृतुस्नाता गर्भं गृह्णाति मेदिनी ॥
आदित्यमहिषी राज्ञी पौराणी देवपूजिता।
राज्ञीस्नपनमेतस्मात् कारणात्तच्च विश्रुतम् ॥
ब्रह्मा विष्णुश्च रुद्रश्च कश्यपः सुरभी तथा।
इन्द्रः प्रचेताः पर्जन्यः शेषश्चन्द्रार्कवह्नयः ॥
बलदेवो हलं भूमिर्वृषभौ रामलक्ष्मणौ।
रक्षोघ्नौ जानकी सीता युगं गगनमेव च ॥
सीता लाङ्गलपद्धतिः। युगं युगकाष्ठम्।
एते द्वाविंशतिः प्रोक्ताः प्रजानां पतयः शुभाः।
गोमङ्गले तु सम्पूज्याः कृष्यारम्भे महोत्सवे ॥
अर्घैः पुष्पैस्तु धूपैश्च माल्यै रत्नैः पृथक् पृथक्।
प्रदक्षिणैर्विधानेन होमैर्ब्राह्मणतर्पणैः ॥
ततः शकुनिसूक्तेन वाद्यशब्देन भूरिणा।
हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलङ्कृतः।
पूर्वोत्तरां दिशं गच्छेत् क्रमात् पौरन्दरीं शुभाम् ॥
कृत्वा प्रदक्षिणावर्त्तमैशान्यभिमुखौ ततः।

विमुच्य वृषभो वीजं पुरुषो लक्षणान्वितः ॥
ब्रह्म: सुवासा: स्रग्वी च सुवर्णजलसेवितम् ।
सुवर्णपात्रसंयुक्तं प्राङ्मुखो निर्वपेद्भुवि ॥
उप्ता वीजन्तु तत्रैव भोक्तव्यं बन्धुभिः सह ।
उत्सवश्चैव कर्त्तव्यो गीतनृत्यसमाकुलः ॥

तथा ।

पूर्व्वं त्रेतायुगे कश्चिन्मध्यदेशोद्भवो द्विजः ।
तीर्थयात्राप्रसङ्गेन चचार पृथिवीमिमाम् ।
विहाय कर्म्म गार्हस्थ्यं तस्मिन् गेहाद्विनिर्गते ।
प्रसक्ता ब्राह्मणी शूद्रे स्मश्रुकर्म्मकरे रहः ॥
तस्याः कदाचित् पुत्रस्तु तस्माज्जातो विधेर्वशात् ।
शालिकीर्त्तिर्वर्द्धितश्च सद्विवेकश्च मातरम् ।
पप्रच्छ जातसन्देहः पितुर्जन्मात्मनस्तथा ॥
वक्रोक्त्या सा तदा प्रोक्ता गिरिभ्यः सरितस्त्विमाः ।
निम्नं प्रयाता निम्नेषु जाताः पुष्टास्तु शालयः ॥
स च तद्वचनं श्रुत्वा दृष्ट्वा सूर्य्यस्य दुर्म्मनाः ।
तपश्चचार सुमहन्मरणे कृतनिश्चयः ॥
प्रयानकाले ब्रह्माणमपश्यत पुरःस्थितम् ।
दुर्लभं ब्राह्मणं जन्म न च तस्मात्स लब्धवान् ॥
मूढ़ग्राहः स्वात्मानं[१] पीड़यित्वा विचेतनः ।
निष्फलन्तु ततस्त्यागं परं पीड़ार्थमाचरत् ॥

---

१ C स्वमात्मानम् ।

एकादश्यान्तु चैत्रस्य कृष्णायां निर्जने स्मृतः।
यस्मात् पिशाच्यां मत्तायां लेभे जन्माऽथ तामसम्॥
जघन्यां यक्षजातिस्तु गौल्मकौल्मां समाश्रितः।
अद्यापि तत्फलं भुङ्क्ते तावन्मात्रन्तु तामसम्॥
तस्मात् स तत्र सम्पूज्यः प्रभाते स्त्रीभिरेव हि।
पाषाणे वर्त्तुलप्राये मृण्मये वापि चित्रितः॥
अर्घैः पुष्पैस्तथा धूपैः कुङ्कुमेन सुगन्धिना।
औरभ्रलोमभिर्मत्स्यैर्भक्ष्यैरुच्चावचैरपि॥
तत्र विप्रैरनध्यायः कर्त्तव्यो वापि संयमः।
ततो मध्याह्नसमये मृण्मये वापि चित्रितः॥
क्षिप्त्वा द्वारेण निःसार्य्य स्त्रीभिरेव सुभाषितैः (?)।
क्षिप्त्वा गवाक्षरन्ध्रेण प्रवेश्य च पुनर्गृहे॥
तत्र कृष्णचतुर्द्दश्यां निकुम्भः शङ्करं तदा।
सम्पूजयति धर्मात्मा पिशाचैः सहितो बली॥
तस्यां निशायां कर्त्तव्यो नरैर्नृत्यं प्रजागरः।
शम्भुः पूज्यो निकुम्भस्य पिशाचेभ्यो बलिं हरेत्॥
दीपिकास्तिलतैलस्य कल्कयुक्ताः[1] सुशोभनाः।
मत्स्यमांसानि भूरीणि तथा माषौदनं शुभम्॥
भक्ष्याणि परमान्नानि पानकानि शुभानि च।
वृक्षमूलेषु गोष्ठेषु तथा शून्यगृहेषु च॥
चतुष्पथेषु रथ्यासु द्वारेषु च नदीषु च।

---

१ A C D लोपिका।

अट्टालकश्मशानेषु राजमार्गेषु सर्व्वदा ॥
तस्यां निशायां रथ्यासु पिशाचेभ्यस्तु बालकाः ।
द्रष्टव्यं पुंश्चलीनृत्यं न कुर्य्यात् स्त्रीनिषेवनम् ॥

तत्रैव ।

अमावास्यायां चैत्रे तु सारमेयैस्तु काश्यपैः ।
वासुदेवादरो लब्धः प्रभूतं भोजनं क्षिति ॥
वैवस्वतकुले जातौ द्वौ श्याव[1]शवलौ शुनौ
वरं तस्माच्च लेभाते यमद्वार[2]निवासिनम् ॥
तस्मात्तत्र पितॄन् देवान् तर्पयित्वा द्विजैः सह ।
शुनामन्नं प्रभूतन्तु पश्चाद्देयं यथेप्सितम् ॥

तथा—

प्रतिमासाद्यदिवसे सर्व्वैः कार्य्यो महोत्सवः ।
अत्यन्तादुष्टे सौराष्ट्रि मङ्गलालभनन्तथा ॥

सर्व्वसौराष्ट्रि मङ्गलालभनमित्यर्थः ।

कृत्यसमुच्चयोऽप्येवम् ॥

## अथ मलिम्लुचनिर्णयः ।

तत्र लघुहारीतः—

दर्शाग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः ।
अग्नीषोमौ कृतौ मध्ये समाप्तौ पितृसोमकौ ॥
तमतिक्रम्य तु यदा रविर्गच्छेत् कदाचन ।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः ॥

---

१ C श्याम— । २ C यमद्वारि ।

तस्मिंस्तु प्रकृते मासि कुर्य्यात् श्राद्धं यथाविधि।
तथैवाभ्युदयं कार्य्यं नित्यं नैमित्तिकन्तथा॥
प्रत्यब्दं द्वादशे मासि कार्य्या पिण्डक्रिया द्विजैः।
क्वचित् त्रयोदशेऽपि स्यादाद्यं मुक्ता तु वत्सरम्॥
असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः
तथैव मासिकं श्राद्धं सपिण्डीकरणन्तथा॥

असंक्रान्तेऽपि मलमासेऽपीत्यर्थः।

एतत्तु यदा मरणदिवसादारभ्य द्वादशमासो मलमासो भवति तदा बोद्धव्यम्।

सपिण्डीकरणादूर्द्धं यत्किञ्चिच्छ्राद्धिकं भवेत्।
दृष्टं वाप्यथवा पूर्त्तं तन्न कुर्य्यान्मलिम्लुचे॥

आद्यो मलिम्लुच इत्यादेरयमर्थः।

रविसंक्रान्तिवर्जितामावास्याद्वयावच्छिन्नो मासो मलिम्लुचः। तदुत्तरस्तु द्वितीयो मासः प्रकृत इति।

तथाचोक्तम्।

अमावास्याद्वयं यत्र रविसंक्रान्तिवर्जितम्।
मलिम्लुचः स विज्ञेयोऽनर्हः स सर्व्वकर्मसु॥
रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः। इत्यादि।

विष्णुः—संवत्सराभ्यन्तरे यद्यधिकमासपातो भवेत् तदा मासिकार्थं दिनमेकं वर्द्धयेत्। अत्र संवत्सरशब्द एकादशमासपरः, तेनैकादशमासाभ्यन्तरे यद्यधिकमासपातस्तदा त्रयोदशमासिकानि भवन्ति। सपिण्डीकरणन्तु त्रयोदशमासे सम्पूर्णे सति त्र्याहे।

ऋष्यशृङ्गः—

संवत्सरातिरेको वै मासश्चैव त्रयोदश।
तस्मात् त्रयोदशं श्राद्धं न कुर्य्यान्नोपतिष्ठते॥

एतदपि वचनं प्रथमवर्षे द्वादशमासो यदि मलमासस्तदा।

बृहस्पतिः—

नित्यनैमित्तिके कुर्य्यात्प्रयतः सन्मलिम्लुचे।
तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च॥

प्रेतश्राद्धस्य नैमित्तिकस्यापि पृथगुपादानात् तदन्यनैमित्तिकमुपरागश्राद्धादि मन्तव्यम्। तथा—

गर्भे वार्द्धुषिके कृत्ये मृतानां पिण्डकर्म्मसु।
सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः॥

अनिषिद्धमिति शेषः। गर्भे गर्भाधानानन्तरकर्म्मणि अन्यत्रापि नियतकालीने। पिण्डकर्म्मसु दाशाहिकेषु मृतानामिति विशेषणोपादानान्नावनीतघृतवदचिरलोपलब्धेः[१]।

परिशिष्टे—

मलिम्लुचस्तु मासो वै मलिनः पापसम्भवः।
गर्हितः पितृदेवेभ्यः सर्व्वकर्म्मसु तं त्यजेत्॥

अत्रापि सर्व्वकर्म्माणि विशेषविहितव्यतिरिक्तानि।

ज्योतिःशास्त्रे—

अग्न्याधेयं प्रतिष्ठाञ्च यज्ञदानव्रतानि च।
देवव्रतवृषोत्सर्गं चूडाकरणमेखलाः।

---

१ D अचिरमुपलब्धेः।

मङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत्॥

अग्न्याधेयमग्न्याधानं स्वर्गादिदेवतामुद्दिश्य यो व्रतरूपो वृषोत्सर्गः।

तथा च षष्टिव्रते मत्स्यपुराणम्—

कार्त्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत्।
शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतम्॥

तथा देवीक्रमपूजायां देवीपुराणम्—

गवोत्सर्गश्च कर्त्तव्यो नीलस्या वृषमुत्सृजेत्।

इत्यादि। मङ्गल्यमभिषेकं राज्याभिषेकम्।

तथाच।

बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते।
[1]मलमासेषु चैतानि वर्जयेद्देवदर्शनम्॥
अनादिदेवतां दृष्ट्वा शुचः सूर्नष्टभार्गवे।
मलिम्लुचेऽप्यनावृत्तं तीर्थस्नानमपि त्यजेत्॥

अनावृत्तं प्रथमम्।

विष्णुधर्म्मोत्तरे—

[2]भगावस्ते गुरौ सिंहे गुर्व्वादित्ये मलिम्लुचे।
त्यजेद्दानं महादानं व्रतं देवविलोकनम्॥

इति महासान्धिविग्रहिकठक्कुरश्रीवीरेश्वरात्मज-महा-
सान्धिविग्रहिकठक्कुर-श्रीचण्डेश्वरविरचिते कृत्य-
रत्नाकरे मलिम्लुचनिर्णयतरङ्गः॥

---

१ B मलमास इवैतानि। २ A B सुवारम्भे।

## अथ प्रकीर्णकृत्यानि।

तत्र ब्रह्मपुराणे—

सर्व्वैश्च जन्मदिवसे स्नातैर्मङ्गलपाणिभिः।
गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः॥
स्वनक्षत्रञ्च पितरौ तथा देवः प्रजापतिः।
प्रतिसंवत्सरं यत्नात्कर्त्तव्यस्तु महोत्सवः॥

मङ्गलं कनकदूर्व्वादि सर्व्वैरिति स्वरसात् प्रतिसम्वत्सरमित्यभिधानाच्च नित्याधिकारः।

अत्र च—

तिलोद्वर्त्ती तिलस्नायी शुचिर्नित्यं तिलोदकी।
होता दाता च भोक्ता च षट्तिली नावसीदति॥

इति सामान्यवचनं नित्यपदात्स्वसमुसङ्ग जन्मदिने योजयन्तीति समयप्रदीपः।

केचित्तु—

तिलोद्वर्त्ती तिलस्नायी तिलहोता तिलप्रदः।
तिलभक्षी तिलावापी षट्तिली नावसीदति॥

इति पठन्ति। अत्राचारोपष्टम्भकेऽपि, अश्वत्थाम-बलि व्यासहनुमद्विभीषण-कृप परशुराम मार्कण्डेयानर्च्चयन्ति। तत्र शिष्टानुमतो विधिर्लिख्यते।

द्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम्।
मार्कण्डेयं नरो भक्त्या पूजयेत् प्रयतस्तथा॥

दीर्घायुषं ततो व्यासं रामं द्रौणिं बलिं कृपम् ।
प्रह्लादञ्च हनूमन्तं विभीषणमनुस्मरेत् ॥
स्नात्वा जन्मदिने स्त्रियं परिहरन् प्राप्नोत्यभीष्टां श्रियम् ।
मत्स्यान् मोचयतो द्विजाय ददतस्त्वायुश्चिरं वर्द्धते ॥

इति । तथा—

खण्डनं नखकेशानां मैथुनाध्वानमेव च ।
आमिषं सङ्गरं हिंसां वर्षवृद्धौ विवर्ज्जयेत् ॥

वर्षवृद्धौ जन्मदिवसे, जन्मदिवसे पूजानन्तरं मार्कण्डेयं प्रार्थयन्ति—

मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ।
चिरजीवी यथा त्वं भो भविष्यामि तथा विभो ॥
सतिलं गुडमिश्रञ्चाञ्जल्यर्द्धमितं[1] पयः ।
मार्कण्डेयवरं लब्ध्वा पिवाम्यायुष्यहेतवे ॥

इति मधुरद्रव्यसहितं सतिलं पयः पिवन्ति । आमिषं वर्जयन्ति ब्रह्मचर्य्यञ्च चरन्ति । ब्रह्मचर्य्यञ्चाष्टविधमैथुननिवृत्तिः ।

तथाच दक्षः—

स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥

ब्रह्मपुराणे—

वैशाखे शुक्लपक्षे तु तृतीयायां कृतं युगम् ।
कार्त्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ॥

---

1 B अञ्जल्यर्द्धचयम् ।

अथ भाद्रपदे कृष्णत्रयोदश्यान्तु द्वापरम् ।
माघे तु पौर्णमास्यां वै घोरं कलियुगन्तथा ॥
युगारम्भास्तु तिथयो युगाद्यास्तेन कीर्त्तिताः ।

श्रीविष्णुपुराणे—

वैशाखमासस्य च या तृतीया
नवम्यसौ कार्त्तिकशुक्लपक्षे ।
नभस्यमासस्य तमिस्रपक्षे
त्रयोदशी पञ्चदशी च माघे ॥
एता युगाद्याः कथिताः पुराणै-
रनन्तपुण्यास्तिथयस्तदस्ताः ।
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समाः सहस्रं
रहस्यमेतत् पितरो वदन्ति ॥

एतच्च ब्रह्मपुराणीय निःसन्दिग्धपौर्णमासीपदस्वरसात् पञ्चदशी च माघ इत्यत्र पञ्चदशीपदं पूर्णिमापरमेव । यच्च

दर्शे च माघमासस्य प्रवृत्तं द्वापरं युगम् ।
इति वचनं तदमूलकमित्युपेक्षितम् ।

ब्रह्मपुराणे—

सूर्य्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य च ।
अथ वृश्चिकसंक्रान्त्यामन्तस्त्रेतायुगस्य च ॥
ज्ञेयस्तु वृषसंक्रान्त्यां द्वापरान्तस्य संज्ञया ।

तथा च कुम्भसंक्रान्त्यामन्तः कलियुगस्य च ॥
युगाद्येषु युगान्तेषु श्राद्धमक्षय्यमुच्यते ।

[1]मत्स्यपुराणे—

अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकी तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावस्या पुष्यस्यैकादशी तथा ।
आषाढ़स्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाषाढ़स्य पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा ॥
मन्वन्तराद्यश्चैता दत्तस्याक्षयकारिकाः ।

अमावास्या-श्रावणाष्टमीव्यतिरिक्ताः सर्व्वास्तिथयः शुक्लाः ।

भविष्यपुराणे—

प्रौष्ठे मास्यष्टमी पुण्या चैत्रे मासि त्रयोदशी ।
कार्त्तिके पौर्णमासी स्याद् द्वादशी कार्त्तिकोत्तरे ॥

कार्त्तिकोत्तरे मार्गशीर्षे। आचारात् पुत्रजन्मदिन षष्ठदिने प्रदोषे षष्ठिकापूजा । तत्र गणपतिसहिताः—

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ।
हृष्टिः पुष्टिस्तथा तुष्टिरयात्मकुलदेवताः ।

एवं रूपाः षोड़श मातृरावाहन स्थापन पाद्यार्घाचमनीय-स्नानीयपुनराचमनीये गन्धपुष्पधूपदीपनैवेद्यैश्च पूजयित्वा श्रावा

1 D ब्रह्मपुराणे ।

हनादिभिरेव यथाकुलाचारं षष्ठिकां पुष्पाञ्जलिभिः— ॐ षष्ठिकायै नम इति मूलमन्त्रेण ॐ—

गौर्य्याः पुत्रो यथा स्कन्दः शिशुः संरक्षितस्त्वया ।
तथा ममाप्ययं बालो रक्ष्यतां षष्ठिके नमः ॥

इति पूजयेत् । ततो वरप्रार्थनम् ।

ॐ रूपं देहि यशो देहि भगं भगवति देहि मे ।
पुत्रान् देहि धनं देहि सर्व्वान् कामान् प्रदेहि मे ॥

इति मन्त्रेण । ततः —

शिवा सम्भूतिनामा च प्रीतिः सन्नतिरेव च ।
अनसूया क्षमा चैव षड़ेताः कृत्तिका मताः ॥

इति वाक्यबोधिताः— ॐ शिवायै नमः इत्यादि मन्त्रेण यथाक्रमं षट् कृत्तिकाः पूजयेत् ।

## अथ पर्व्वकृत्यादि ।

तत्र मनुः—

सावित्रान् शान्तिहोमांश्च कुर्य्यात् पर्व्वसु नित्यशः ।
पितृंश्चैवाष्टकास्वर्चेन्नित्यमन्वष्टकासु च ॥

सावित्रान् सवितृदेवताकान् । ते च गायत्र्या अक्षतद्रव्येण कार्य्याः—

शान्तिकामस्तु जुहुयात् गायत्रीमक्षतैः शुचिः ।

इति शङ्खवचनात् । पर्व्वसु चतुर्द्दश्यादिषु । नित्यग्रहणात् पर्व्वसु अवश्यकर्त्तव्यता प्रतीयते ।

विष्णुः—पर्व्वस्वपि च शान्तिहोमान् कुर्य्यात् न तृणमपि छिन्द्यादलङ्कृतस्तिष्ठेत् एवमाचारसेवी स्यात् ।

छिन्द्यात् हिंस्यात् ।

आपस्तम्बः—

दिवादित्यः सत्त्वानि गोपयति नक्तञ्चन्द्रमास्तस्मादमावास्यायां निशायां साधीय आत्मनो गुप्तिमिच्छेत् प्रायत्येन ब्रह्मचर्य्येण काले चर्य्यया सह । एतां रात्रिं सूर्य्याचन्द्रमसौ सह वसतः ।

साधीयो भृशतरं क्रियाविशेषणश्चैतत् । गुप्तिः रक्षा । प्रायत्येन अप्रायत्यनिमित्तदृष्टार्थरथ्योपसर्पणवर्ज्जनादि सम्यक् शौचाचमननिष्पादनेन एवं ब्रह्मचर्य्येण काले चर्य्यया मुख्यकाल एव प्रातरादौ तत्तत्कर्म्मकरणेन तेन यत्र तां रात्रिं सूर्य्याचन्द्रमसौ सहवसतोऽतः [प्रायत्यनिमित्तदृष्टार्थतः] प्रायत्यादिभिरात्मानं रक्षेदित्यर्थः ।

छन्दोगपरिशिष्टे कात्यायनः—

पौर्णमासीममावास्यामधिस्नापो विधीयते ।
अनाहिताग्नेरप्येष पश्चादग्नेर्विधीयते ॥

अनाहिताग्निरत्र स्मार्त्ताग्निमान् ।

बौधायनः—

पर्व्वसु च नाधीयीत न मांसमश्नीयात् न स्त्रिय-मुपेयात् । पर्व्वसु हि रक्षः-पिशाचान्यभिचरन्तीति भवन्ति ।

पैठीनसिः—

न पर्व्वसु तैलं क्षुरं मैथुनं मांसमुपेयात्। नामावास्यायां हरितानि छिन्द्यात्।

उपेयादुपभुञ्जीत॥

विष्णुपुराणे—

छिनत्ति वीरुधं यस्तु वीरुत्संस्थे निशाकरे।
पत्रं वा पातयत्येकं ब्रह्महत्यां स विन्दति॥

वीरुत्संस्थे वनस्पतिगते।

यमः—

आसप्तमं कुलं हन्ति शिरोऽभ्यङ्गे चतुर्द्दशी।
मांसाशने पञ्चदशी [1]कामधर्म्मे तथाष्टमी॥

वृद्धशातातपः—

दन्तकाष्ठममावास्या मैथुनञ्च चतुर्द्दशी।
हन्ति सप्तकुलन्तस्य तैलग्रहणमष्टमी॥
षष्ठ्यष्टमी पञ्चदशी उभौ पक्षौ चतुर्द्दशी।
[2]अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे॥
षष्ठ्यां तैलमनायुष्यमष्टम्यां पिशितन्तथा।
क्षुरकर्म्म चतुर्द्दश्यां तथा पर्व्वणि मैथुनम्॥

सर्व्वपर्व्वसु षष्ठ्यासु सामान्येनैव तैलादिप्रतिषेधे सिद्धे तत्तत्तिथिविशेषसम्बन्धेन तैलादिविषयनिषेधो दोषाधिक्यद्योतनार्थः।

---

१ C कायधर्म्मे। २ मूले— आयुः संहरते पापात्।

देवलः—

पञ्चदश्यां चतुर्द्दश्यामष्टम्याञ्च विशारदः।

तैलं मांसं व्यवायञ्च क्षुरञ्च विनिवर्ज्जयेत्॥

अत्र च षष्ठ्यादिशब्देन तिथिवाचिना चन्द्रगत्युपरक्तकाल-विशेषबोधनात् यावत् षष्ठ्यादितिथिकालमेव मांसादिनिषेधः। न तु तदुपलक्षितेऽहोरात्रे उपलक्षणपरत्वे [1]प्रमाणाभावात्। अतएव देव-पितृकृत्ययोः पूर्व्वाह्णापराह्णयोर्विहितत्वात् तत्काल-व्यापितिथ्यादरः। अतएव निषिद्धे कालवर्जनमिति पठन्ति।

श्रीविष्णुपुराणे—

चतुर्द्दश्यष्टमी चैव अमावास्याऽथ पूर्णिमा।

पर्व्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च॥

स्त्रीतैलमांससम्भोगी पर्व्वस्वेतेषु वै पुमान्।

विण्मूत्रभोजनं नाम प्रयाति नरकं नृप॥

अशेषपर्व्वस्वेतेषु तस्मात् संयमिभिर्नरैः।

भाव्यं सच्छास्त्रदेवेज्याध्यानजप्यपरैः सदा॥

वराहपुराणे— चाण्डालशपथेषु—

षष्ठ्यष्टम्यप्यमावास्या उभौ पक्षौ चतुर्द्दशी।

अस्नातानां गतिं यान्ति यद्यहं नागमे पुनः॥

भविष्यपुराणे—

सप्तम्यां स्पृशतस्तैलमिष्टा भार्य्या विनश्यति।

---

[1] C प्रामाण्याभावात्।

वामनपुराणे—

नन्दासु नाभ्यङ्गमुपाचरेच्च चौरञ्च रिक्तासु जयासु मांसम्।
पूर्णासु योषित् परिवर्ज्जनीया भद्रासु सर्व्वाणि समारभेत॥
नाभ्यङ्गमर्के न च भूमिपुत्रे चौरञ्च शुक्रेऽथ कुजे च मांसम्।
बुधे च योषां न समाचरेत शेषेषु सर्व्वाणि सदैव कुर्य्यात्॥
चित्रासु हस्ते श्रवणे च तैलं चौरं विशाखा-प्रतिपत्सु वर्ज्ज्यम्।
मूले मृगे भाद्रपदासु मांसं योषिन्मघाकृत्तिकयोत्तरासु॥

वराहपुराणे वैष्णवं प्रकृत्य वराह उवाच—

[1]षष्ठ्यष्टमीममावास्यामुभे पक्षे चतुर्द्दशीम्।
मैथुनं नैव सेवेत द्वादशीञ्च मम प्रियाम्॥
अष्टम्याञ्च चतुर्द्दश्यां षष्ठ्याञ्च द्वादशीन्तथा।
अमावास्याञ्चतुर्थ्याञ्च मैथुनं योऽधिगच्छति॥
तिर्य्यग्योनिं स गच्छेत मम लोकं न गच्छति।

मनुः—

अमावास्यामष्टमीञ्च पौर्णमासीञ्चतुर्द्दशीम्।
ब्रह्मचारी भवेन्नित्यमप्युभौ स्नातको द्विजः॥

उभौ पक्षौ।

नन्दिपुराणे—

यदि वाप्यसमर्थः स्यात् सदा मांसविवर्जने।
वर्जयेदयने सुख्ये कृतस्वर्गमतिर्नरः॥

---

१ C पुस्तके षष्ठ्यष्टमीमित्यादि पङ्क्तित्रयं नास्ति।

चतुर्थी चाष्टमी चैव द्वादशी च चतुर्द्दशी ।
तथा पञ्चदशी वर्ज्या षडशीतिमुखानि च ॥
संक्रमश्चापि सूर्य्यस्य विषुवौ चापि वार्षिकौ ।
मांसात्तु विरतो मर्त्त्यः स्वर्गं याति दिनत्रयम् ॥

दिनत्रयं मांसाद्विरत इत्यन्वयः ।

वराहपुराणे—

यावकं दधिमिश्रन्तु पात्र औदुम्बरे स्थितम् ।
सोमाय पौर्णमास्यां वा दत्त्वा पापैः प्रमुच्यते ॥
अरुन्धतीं ध्रुवञ्चैव तथा सप्त महामुनीन् ।
अभ्यर्च्च्य विधिना रात्रौ तथा दत्त्वा च यावकम् ॥
एकाग्रमानसो भूत्वा यो नमस्येत् कृताञ्जलिः ।
किल्बिषं तस्य वै सर्व्वं तत्क्षणादेव नश्यति ॥

यमः—

चतुर्थीभरणीयोगे शनैश्चरदिनं यदि ।
तदाभ्यर्च्च्य यमं देवं मुच्यते सर्व्वकिल्बिषैः ॥

अथ नक्षत्रदानानि ।

तत्र विष्णुः—

प्रतिमासं रेवतीयुते चन्द्रमसि (रेवतीप्रीत्यै) मधुघृतयुतं परमान्नं ब्राह्मणान् भोजयित्वा रेवतीं प्रीणयित्वा रूपभाग् भवति ।

परमान्नं पायसम् ।

श्रीमहाभारते—

कृत्तिकासु महाभाग पायसेन ससर्पिषा ।

सन्तर्प्य ब्राह्मणान् साधून् लोकान् प्राप्नोत्यनुत्तमान् ॥

रोहिण्यां प्रथितैर्मांसैर्मार्गैर्यत्नेन सर्पिषा ।
पयोऽन्नपानं दातव्यमानृण्यार्थं द्विजातये ॥

प्रथितैः प्रसिद्धैः । मार्गैः मृगसम्बन्धिभिः ।

द्रोगर्भीं दत्त्वा सवत्सान्तु नक्षत्रे सोमदैवते ।
गच्छते मानुषाल्लोकात् स्वर्गलोकमनुत्तमम् ॥

सोमदैवते मृगशिरसि ।

आर्द्रायां कृशरं दत्त्वा तैलमिश्रमुपोषितः ।
नरस्तरति दुर्गाणि क्षुरधारांश्च पर्व्वतान् ॥

पूपान् पुनर्वसौ दत्त्वा तथैवान्नानि शोभने ।
यशस्वी रूपसम्पन्नो बहुले जायते कुले ॥

पुष्ये तु कनकं दत्त्वा कृतम्वाऽकृतमेव वा ।
अनालोकेषु लोकेषु सोमवत् स विराजते ॥

कृतं घटितम् ।

अश्लेषासु च यो रूप्यं वृषभं वा प्रयच्छति ।
स सर्व्वभयनिर्म्मुक्तः गोत्रवानधितिष्ठति ॥

मघासु तिलपूर्णानि वर्द्धमानानि मानवः ।
प्रदाय पुत्रपशुमानिह प्रेत्य च जायते ॥

फल्गुनीपूर्व्वसमये ब्राह्मणानामुपोषितः ।
भक्ष्यान् फाणितसंयुक्तान् दत्त्वा सौभाग्यमृच्छति ॥

फल्गुनीपूर्व्वसमये पूर्व्वफल्गुनीसमये । फाणितं गुडविकारः ।

घृतक्षीरसमायुक्तं विधिवत् षष्टिकौदनम् ।

उत्तराविषये दत्वा स्वर्गलोके महीयते ॥

उत्तराविषये उत्तरफल्गुनीसमये ।

यद्यत् प्रदीयते दानं उत्तराविषये नरैः ।
महाफलस्य तत्सर्वं[1] भवतीति विनिश्चयः ॥
हस्ते [2]हस्तिरथं दत्त्वा चतुर्युक्तमुपोषितः ।
प्राप्नोति परमान् लोकान् पुण्यकामसमन्वितान् ॥

चतुर्युक्तं चतुर्भिर्गजैर्युक्तमिति सागरः ।

चित्रायां वृषभं दत्त्वा पुण्यान् गन्धांश्च भारत ।
चरत्यप्सरसां लोके रमते नन्दते तथा ॥
स्वातौ रथधनं दत्त्वा यदिष्टतममात्मनः ।
प्राप्नोति लोकान् स शुभानिह चैव महद्यशः ॥
विशाखायामनड्वाहं धेनुं दत्त्वा च दुग्धदाम् ।
सप्रासङ्गञ्च शकटं सधान्यं वस्त्रसंयुतम् ॥
पितृदेवांश्च प्रीणाति प्रेत्य चानन्त्यमश्नुते ।
न च दुर्गाण्यवाप्नोति स्वर्गलोकञ्च गच्छति ॥

प्रासङ्गो द्वितीयं [3]गृहकाष्ठम् ।

अनुराधासु प्रावारं वस्त्रोत्तरमुपोषितः ।
दत्त्वा युगशतं वापि नरः स्वर्गे महीयते ॥

प्रावारः प्रच्छदपटः । वस्त्रोत्तरं परिधानवस्त्राधिकम् ।

कालशाकञ्च विप्रेभ्यो दत्त्वा मर्त्त्यः समूलकम् ।
ज्येष्ठायामृद्धिमिष्टां वै गतिमिष्टाञ्च विन्दति ॥

---

१ C D महाफलमनन्तञ्च भवतीति। २ A B हरि—। ३ C युगकाष्ठम्

मूले च मूलकं[१] दत्त्वा ब्राह्मणेभ्यः समाहितः ।
पितृंश्च सन्तर्पयति गतिमिष्टाञ्च विन्दति ॥
अथापि पूर्व्वाषाढासु दधिपात्रमुपोषितः ।
कुलवृत्तोपसम्पन्ने ब्राह्मणे वेदपारगे ॥
प्रदाय जायते प्रेत्य कुलेऽप्रसङ्कुले कुले ।
उदमन्थं ससर्पिष्कं प्रभूतमधुफाणितम् ॥
दत्त्वोत्तराषाढ़ासु सर्व्वलोकानवाप्नुयात् ।

उदमन्थः ।

सक्तवः सर्पिषाऽभ्यक्ताः शीतवारिपरिप्लुताः ।
नात्यच्छा नातिसान्द्राश्च मन्थ इत्यभिधीयते ॥

अत्रैवोदकयोगे सत्युदमन्थः ।

दुग्धन्त्वभिजितो योगे दत्त्वा मधुघृतप्लुतम् ।
धर्म्मविद्भ्यो मनीषिभ्यः स्वर्गलोके महीयते ॥

उत्तराषाढ़ान्तचतुर्थभागे श्रवणाद्यनाड़िकाचतुष्टयाधिकेऽभिजितो नक्षत्रस्य योगः ।

श्रवणे कम्बलं दत्त्वा वस्त्रान्तरितमेव च ।
श्वेतेन याति यानेन सर्व्वलोकान् सुपुष्कलान् ॥
गोयुग्युक्तं धनिष्ठासु यानं दत्त्वा समाहितः ॥
वत्सरश्मिरवं सद्यः प्रेत्य राज्यं समश्नुते ॥

गोयुग्युक्तन्तदाकर्षकगोद्वयसहितं वत्सरश्मिर्वत्सघटितरज्जुः ।

---

१ C मूले मूलफलम् ।

गन्धान् शतभिषायोगे दत्त्वा चागुरुचन्दनान् ।
प्राप्नोत्यप्सरसां लोकान् प्रेत्य गन्धांश्च शाश्वतान् ॥
पूर्व्वभाद्रपदायोगे राजमाषान् प्रदापयेत् ।
सर्व्वभक्ष्यफलोपेतः स वै प्रेत्य सुखी भवेत् ॥
औरभ्रमुत्तरायोगे यस्तु मांसं प्रयच्छति ।
स पितॄन् स्वान् प्रीणयति प्रेत्य चानन्त्यमश्नुते ॥
कांस्योपदोहनीं धेनुं रेवत्यां यः प्रयच्छति ।
स प्रेत्य कामानादाय दातारमुपतिष्ठति ॥
रथमश्वसमायुक्तं दत्त्वाश्विन्यां नरोत्तमः ।
हस्त्यश्वरथसम्पन्ने उत्तमे जायते कुले ॥
भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदापयेत् ।
गाश्च प्रभूताः प्राप्नोति नरः प्रेत्य यशस्तथा ॥

विष्णुधर्म्मोत्तरे—

कृत्तिकासु सुवर्णस्य दानं बहुफलं स्मृतम् ।
रक्तवस्त्रस्य रोहिण्यां सौम्यभे लवणस्य च ॥

सौम्यभे मृगशिरसि ।

कृशरस्य तथार्द्रायामादित्ये रजतस्य तु ।
घृतस्य तु तथा पुष्ये चन्दनानान्तु सर्पभे ॥

आदित्ये पुनर्वसौ । सर्पभे अश्लेषायाम् । चन्दनानामिति श्वेतचन्दनरक्तचन्दनकुङ्कुमानाम् ।

तिलानाञ्च मघायोगे प्रियङ्गोर्भगदैवते ।
अर्य्यम्णे चाप्यपूपानां सावित्रे पायसस्य तु ॥

भगदैवते पूर्व्वफल्गुन्याम्। अर्य्यम्णे उत्तरफल्गुन्याम्। सावित्रे हस्तायाम्।

चित्रायां चित्रवस्त्राणां शक्तूनां वायुदैवते।
ऐन्द्राग्ने चैव लोकानां मैत्रे माल्यफलस्य च॥

वायुदैवते स्वात्याम्। ऐन्द्राग्ने विशाखायाम्। मैत्रे अनुराधायाम्।

कृत्वस्य च तथा शाक्रे मूले मूलफलस्य च।
हिमस्य मधुयुक्तस्य दानमाप्ये महाफलम्॥

शाक्रे ज्येष्ठायाम्। आप्ये पूर्व्वाषाढ़ायाम्।

विश्वेश्वरेऽन्नदानस्य श्रवणे वसनस्य च।
धान्यस्य वासवे विप्रा वारुणे चौषधस्य च॥

विश्वेश्वरे उत्तराषाढ़ायाम्। वासवे धनिष्ठायाम्। वारुणे शतभिषायाम्।

आजे पुराणबीजानां शस्यानान्तदनन्तरे।
गोरसानां तथा पौष्णे स्नानानामथवाश्विने॥

आजे पूर्व्वभाद्रपदायाम्। तदनन्तरे उत्तरभाद्रपदे। स्नानानां स्नानोपकरणामलकादीनाम्।

तिलानाञ्च तथा दानं भरणीषु महाफलम्।

तथा—

श्रवणे दीपकं दत्त्वा नदीदितयसङ्गमे।
तेजस्वी च यशस्वी च रूपवानभिजायते॥

तथा—

मासोपवासे रेवत्यां ब्राह्मणान् घृतपायसम् ।
सदक्षिणं भोजयित्वा रूपमाप्नोत्यनुत्तमम् ॥

इति नक्षत्रदानम् ॥

## अथ तिथिनक्षत्रदेवतापूजा ।

भविष्यपुराणे—

अग्निमिष्ट्वा च कृत्वा च प्रतिपद्यसृतं घृतम् ।
हविषा सर्व्वधान्यानि प्राप्नुयादमितं धनम् ॥
ब्राह्मणञ्च द्वितीयायां सम्पूज्य ब्रह्मचारिणम् ।
भोजयित्वा च विद्यानां सर्व्वासां पारगो भवेत् ॥
तृतीयायास्तु वित्तेशं विद्याढ्यो जायते ध्रुवम् ।
क्रयादिव्यवहारे च लाभो बहुगुणो भवेत् ॥
गणेशः पूजितः कुर्य्यात् चतुर्थ्यां सर्व्वकर्म्मसु ।
अविघ्नं विदुषा विघ्नं कार्य्यस्तास्य न कर्हिचित् ॥
नागानिष्ट्वाथ पञ्चम्यां न विषैरभिभूयते ।
स्त्रियामालभते पुत्रं श्रियञ्च परमां लभेत् ॥
सम्पूज्य कार्त्तिकेयन्तु द्विजः षष्ठ्यां प्रजायते ।
मेधावी रूपसम्पन्नो दीर्घायुः कीर्त्तिवर्द्धनः ॥
सप्तम्यां पूज्य स्वर्चेशं चित्रभानुं दिवाकरम् ।
अष्टम्यां पूजितो देवो [1]गोम्रताभरणो हरः ॥

---

१ C गोव्रत— ।

ज्ञानं ददाति विपुलान् कामान् स यच्छते गुणान्।
मृत्युहा ज्ञानदश्चैव पापहा च प्रपूजितः॥
दुर्गां सम्पूज्य दुर्गाणि नवम्यां तरतीच्छया।
संग्रामे व्यवहारे च सदा विजयमादिशेत्॥
दशम्यां धर्म्मराजस्य सर्व्वव्याधिहरो ध्रुवम्।
नरकादपमृत्योश्च समुद्धरति मानवम्॥
एकादश्यां यथोदिष्टा विश्वेदेवाः प्रपूजिताः।
प्रजाः पशून् धनं धान्यं प्रयच्छन्ति महीन्तथा॥
द्वादश्यां विष्णुमिष्ट्वा च सर्व्वदा विजयी भवेत्।
पूज्यश्च सर्व्वलोकानां यथा गोपतिगो हरः॥
कामदेवं त्रयोदश्यां सुरूपो जायते ध्रुवम्।

इष्ट्वेत्यनुषज्यते।

इष्टां रूपवतीं भार्य्यां लभेत् कामांश्च पुष्कलान्॥
इष्ट्वेश्वरं चतुर्द्दश्यां सर्व्वैश्वर्य्यसमन्वितः।
बहुपुत्रो बहुधनस्तथा स्यान्नात्र संशयः॥
पौर्णमास्यान्तु यः सोमं पूजयेद्भक्तिमान्नरः।
बह्वपत्यं भवेत्तस्य इति मे निश्चिता मतिः॥
पितरः स्वदिने पिण्डैरिष्टाः कुर्व्वन्ति सर्व्वदा।
प्रजावृद्धिं धनं रक्षामायुष्यं धनमेव च॥

स्वदिने अमावास्यायाम्।

---

१ C भवः।

उपवासं विनाऽप्येते भवन्त्यतिफलप्रदाः ।
पूजया जप-होमैश्च तोषिताः शक्तितः सदा ॥
मूलमन्त्राः (स्व)सुसंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः ।
पूर्व्ववत् पद्मपत्रस्थाः कर्त्तव्याश्च तिथीश्वराः ॥
गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते ॥
पूजा शाठ्येनाशाठ्येन[1] कृता तुल्यफलप्रदा ।
आज्यधारासमिद्भिश्च दधिक्षीरान्नमाक्षिकैः ॥
यथोक्तफलदं होमं जपन् शान्तेन चेतसा ।
कृत्वा यज्ञान् दश द्वे च फलान्येतानि भक्तितः ॥
यथोक्तानि फलान्येव लभन्ते ह्यधिकान्यपि ।
इह जन्मन्यथान्यस्मिन् निवसेच्च सुखी सदा ॥
तेषां लोकेषु मन्त्रज्ञो(?) या यस्येह तिथिः स्मृता ।
इह तस्मात् परिभ्रष्टो मद्भक्तो जायते नरः ॥
सुरूपो बलसम्पन्नो निर्जितारिर्महामतिः ।
स्त्री पुं-नपुंसको वापि जायते पुरुषोत्तमः ॥

इति तिथिदेवतापूजा ॥

ब्रह्मोवाच—

चन्द्रमा यत्र नक्षत्रे यदा दृष्टिस्थितस्तदा ।
उक्तस्तु देवयज्ञस्तु तदा स फलवान् भवेत् ॥
देवताश्च प्रवक्ष्यामि नक्षत्राणां यथाक्रमम् ।
नक्षत्राणि च सर्व्वाणि यज्ञांश्चैव पृथक् पृथक् ॥

---

[1] A B साध्येनासाध्येन ।

अश्विन्यामश्विना विष्टा दीर्घायुर्जायते नरः।
व्याधिभिर्मुच्यते चिप्रमत्यर्थं व्याधिपीड़ितः॥
भरण्यां यममभ्यर्च्य कुसुमैरसितैः शुभैः।
गन्धादिभिस्तथा शुभ्रैरपमृत्योर्विमुच्यते॥
अनलः कृत्तिकायान्तु वृद्धिं सम्पूजितः पराम्।
रक्तमाल्यादिभिर्दद्यात् घृतहोमेन च ध्रुवम्॥
दृष्टः प्रजापतिः प्रीत्या दृष्टान् दद्यात् पशूंस्तथा।
रोहिण्यां देव शार्दूल-गोऽजावि-हय-कुञ्जरान्॥
मृगशीर्षे तथा सोमं जयमारोग्यमेव च।
आर्द्रायान्तु शिवं पूज्य पशून् विजयमश्नुते।
सितैः पद्मादिभिर्दिव्यैर्देवलं पयसा च वै॥

तथा—

पुनर्वसावदितिश्च सदा सम्पूजनादिभिः।
चरणा तर्पिता चैव मातेव परिरचति॥
तिष्ये वृहस्पतिर्बुद्धिं ददाति विपुलं धनम्॥
पानैर्गन्धादिभिर्नागा अश्लेषायां प्रपूजिताः।
तर्पितास्च यथान्यायं भक्ष्याद्यैर्मधुरैः शुभैः॥
रचां विषादिदोषेभ्यः प्रीताः कुर्य्युः सदैव हि।
मघासु पितरः सर्व्वे हव्यैः कव्यैश्च पूजिताः॥
प्रयच्छन्ति धनं धान्यं भृत्यान् पुत्रान् पशूंस्तथा।
फल्गुन्यामथ वै पूषा दृष्टः पुष्पादिभिः शुभैः॥

१ C दानैः।

पूर्व्वायां विजयं दद्यादुत्तरायां भगस्तथा ।
भर्त्तारमीप्सितं कुर्य्यात् कन्यायै पुरुषस्य वा ॥
इह जन्मनि चामुष्मिन् रूपद्रविणसम्पदः ।
पूजितः सविता हस्ते विश्वेतेजोनिधिः सदा ॥
वस्त्रैः पुष्पादिभिः सर्व्वं ददाति विपुलं धनम् ।
राज्यं लष्टा च चित्रायां निःसपत्नं प्रयच्छति ॥
दृष्टः सन्तर्पितः प्रीतः स्वात्यां वायुर्बलं परम् ॥
इन्द्राग्नी च विशाखायां पीतरक्तैः प्रपूज्य च ।
धनं राज्यस्य लब्ध्वेह तेजांसि निवसेत् सदा ॥
रक्तैर्मित्रमनुराधास्विह सम्पूज्य शक्तितः ।
प्रियो भवति सर्व्वेषां चिरजीवित्वमाप्नुयात् ॥
ज्येष्ठायां पूर्व्ववच्छक्रमिष्ट्वा पुष्टिमवाप्नुयात् ॥
गणैः सर्व्वैश्च सम्पूज्यः कर्म्मणा च धनेन च ।
मूले तु निर्ऋतिं सम्यक् भक्त्या सम्पूज्य पूर्व्ववत् ॥
सम्पूर्णफलमाप्नोति स्वस्थाने च स्थिरो भवेत् ।
अप इष्ट्वा जलैः श्वेतैः पूर्व्वास्वेव पूर्व्ववत् ॥
सन्तापान्मुच्यते क्षिप्रं शारीरान्मानसात्तथा ।
आषाढ़ासु तथा विद्वानुत्तराषाढ़योगतः ॥
विश्वान् सम्पूज्य पुष्पाद्यैः स्वर्गमाप्नोति मानवः ।
श्रवणे लक्षिते विष्णुं लेपैर्धूपैश्च शक्तितः ॥
सम्पूज्य श्रियमाप्नोति परं विजयमेव च ।
धनिष्ठासु वसूनिष्ट्वा न भयं जायते क्वचित् ॥

मघतोपि तथा श्वेते गन्ध[1]पुष्पादिभिः शुभैः ।
वरुणं शतभिष्यर्च्य व्याधिभिर्मुच्यते भृशम् ॥
आतुरः पुष्टिमाप्नोति स्वास्थ्यमैश्वर्य्यमेव च ।
अजं भाद्रपदायाञ्च शुद्धस्फटिकसन्निभम् ॥
सम्पूज्य भक्तिमाप्नोति नात्र कार्य्या विचारणा ।
उत्तरायामहिर्बुध्नं परां शान्तिमवाप्नुयात् ॥
रेवत्यां पूजितः पूषा ददाति सततं पशून् ।
सितैः पुष्पैः स्थितिञ्चैव धृतिं विजयमेव च ॥
ये तवैते समाख्याता यज्ञाः संक्षेपतो मया ।
नक्षत्रदेवतानाञ्च साधकानां हिताय वै ॥
भक्त्या वित्तानुसारेण भवन्ति फलदाः कृताः ।
गन्तुमिच्छेद्यदा ग्रामं क्रियां प्रारब्धुमेव च ॥
नक्षत्रदेवतायज्ञं कृत्वा तत्सर्व्वमाचरेत् ।
एवं कृते हि तत्सर्व्वं यात्राफलमवाप्नुयात् ॥
क्रियाफलञ्च सम्पूर्णमित्युक्तं भानुना स्वयम् ।
यज्ञाभावे जपं कुर्य्यात् क्रियां कुर्व्वन् यथेप्सितम् ॥

---

## अथ नानादानानि ।

सम्वर्त्तः ।

ताम्बूलञ्चैव यो दद्याद्ब्राह्मणेभ्यो विचक्षणः ।
मेधावी सुभगः प्राज्ञो दर्शनीयश्च जायते ॥

---

[1] D कुन्द— ।

विष्णुः—

मधुघृततैलेनारोग्यं तालवृन्तचामरदानेनादुःखित्वम्।

तालवृन्त-चामरयोः प्रत्येकमेव दानमिति सागरः।

यमः—

राजोपकरणं दत्त्वा रत्नानि विविधानि च।

नगरञ्च तथा दत्त्वा राजा भवति भूतले॥

आदित्यपुराणे—

नवं श्लक्ष्णं[१] सुविपुलं ये प्रयच्छन्ति पत्रकम्।

अवीजमानो घर्म्मेऽपि पवनो वातिशीतलः॥

नवं नूतनं, श्लक्ष्णं[२] कुटिलकर्म्मयुक्तम्। सुविपुलं विस्तीर्णं पत्रकं मयूरपत्रव्यजनम्। अग्रिमखण्डानुयायित्वेन तेषामित्य-ध्याहार्य्यम्। तथा—

तीर्थकूपतड़ागादि नौकासेतुप्रदाश्च ये।

स्कन्धेन तारयेद्यस्तु तृषार्त्तानां जलप्रदः॥

षष्टिं कोटिसहस्राणि अर्ब्बुदानाञ्च वै त्रयम्।

क्रीड़न्ति ते श्वेतपुरे एतदुक्तं द्विजोत्तम॥

तीर्थं जलाशयावतरणवर्त्म स्कन्धेन जलेषु दुर्ब्बलजन्तुतारणम्। अत्र तारणमनुष्ठानमात्रं विवक्षितम्। तथा—

यष्टिञ्च ये प्रयच्छन्ति नेत्रहीनेऽतिदुर्बले।

तेषान्तु विपुलः पन्थाः फलमूलोपशोभितः॥

भवतीति शेषः।

---

१ B सूक्ष्मम्। २ B सूक्ष्मम्।

नन्दिपुराणे—

यष्टिं वृद्धास्तु यो दद्यात् पुरुषस्तु दयापरः ।
सदाश्रयो भवेन्नित्यं गतभीः स्वर्गमाप्नुयात् ॥

एतदुभयमर्पणमात्रमिति दानसागरः । अत्र पुरुषत्वमविवक्षितम् ।

तथा—

वह्नि-वस्त्रप्रदानेन ब्रह्मलोकं प्रपद्यते ।

तथा—

उष्णीषदायी यो मर्त्यो जायते मुकुटोत्कटः ।
विस्तीर्णे राजवंशे तु श्वेतच्छत्रं स लब्धवान् ॥

उष्णीषं पुरोहितमुकुटीकृतवासोविन्यासरूपमिति दानसागरः । वाससः शिरोवेष्टनमित्यन्ये तत्रैव प्रयोगबाहुल्यात् ।

महाभारते—

स्रग् गन्धधूपान्यनुलेपनानि
स्नानानि माल्यानि च मानवो यः ।
दद्याद्द्विजेभ्यः स भवेदरोग-
स्तदादिरूपश्च नरेन्द्रलोके ॥

स्नानानि स्नानसाधनानि तिलामलकादीनि इति ।

तथा—

भक्ष्यान्न-पानीय-रसप्रदाता ।
सर्व्वान् समाप्नोति रसान् प्रकामम् ॥

रसा लवणादयः । तथा—

पिपासया न म्रियते सोपच्छन्दश्च जायते ।

न प्राप्नुयाच्च व्यसनं करम्भान् यः प्रयच्छति ॥

करम्भान् दधिसक्तून्। उपच्छन्दोऽनुवृत्तिः। तेनानुवर्त्तनीय इत्यर्थः। तथा—

निवेशनानां क्षेत्राणां वसतीनाञ्च भारत।

दातारः प्रार्थितानाञ्च पुरुषाः स्वर्गगामिनः॥

विष्णुधर्मोत्तरे—

मस्तुपिण्डकिलाटादि कूर्च्चिकादानतस्तथा।

गोरसानां प्रदानेन तृप्तिमाप्नोत्यनुत्तमाम्॥

मस्तु मात्त इति प्रसिद्धम्। पिण्डं पिण्डितदुग्धं। किलाटः स्वयन्नष्टदुग्धपिण्डः। आदिशब्दात् दुग्धविकारान्तरग्रहणम्। कूर्च्चिका दधिसरः छानेति प्रसिद्धम्। गोरसानां दधितक्र शिखरिण्यादीनां। तथा—

लेह्यादोऽप्सरसां लोकं वसूनामपि चोष्यदः।

इक्षुमृद्वीकयोर्दानात् परं सौभाग्यमाप्नुयात्॥

लेह्यं लेहनीयं चोष्यं चोषणीयं दुग्धाग्रादि। मृद्वीका द्राक्षा प्राशितुमिति प्रत्येकमभिसम्बध्यते। तथा—

दन्तकाष्ठप्रदानेन सौभाग्यं महदाप्नुयात्।

जिह्वानिर्लेखनं दत्त्वाऽवियोगस्त्वभिजायते॥

तथा—

मृत्तिकायाः प्रदानेन शुचिः सर्व्वत्र जायते।

मृत्तिका तीर्थमृत्तिका च स्नानार्था शौचार्था च। अत्र दन्तकाष्ठ जिह्वानिर्लेखन मृत्तिकादानेषु—अनुत्सृज्य समर्पण-

मात्रेपि फलमुक्तम्। उत्सर्गे तु दक्षिणाधिक्यात् फलाधिक्यमिति दानसागरः। तथा—

वितानकप्रदानेन सर्व्वपापैः प्रमुच्यते।

वितानं चन्द्रातपः, चन्द्रोदय इति प्रसिद्धम्।

तथा—

दत्त्वा पूगफलं विप्राः सफलां विन्दते क्रियाम्।
ताम्बूलस्य प्रदानेन सौभाग्यमिह विन्दति॥
यज्ञोपवीतदानेन वस्त्रदानफलं लभेत्।
उष्णीषदानस्य तथा फलमेतदुदाहृतम्॥

तथा—

कङ्कतस्य प्रदानेन परां बाधां प्रमुञ्चति।

कङ्कतं केशप्रसाधनोचितं द्रव्यं चीरण इति प्रसिद्धम्।

तथा—

बाले क्रीड़नकं दत्त्वा मिष्टमन्नन्तथैव च॥
फलं मनोहरं वापि अग्निष्टोमफलं लभेत्।

क्रीड़नकं क्रीड़ोचितं कन्दुकादि। अनुपनीताय दाने त्यागमात्रमिति दानसागरः।

तथा—

समुद्रजानां भाण्डानां शङ्खादीनां प्रदायकः।
पात्रीभवति दानानां यशसश्च न संशयः॥

अत्र सागरे आदिशब्देन शुक्तिग्रहणमित्युक्तं बहुवचनसङ्गमस्तु पात्रद्वये शङ्खशुक्त्योरन्यतरस्य दातव्यमिति कल्पतरुकृतः। तथा—

स्नानानां सुखवासानां धूपानाञ्च प्रदायकाः ।
लोके प्रयान्ति प्रियतां भवन्ति च सुगन्धिनः ॥

तथा ग्रक्रतुदस्तृप्तिमाप्नोति । तथा—

अरण्यपशुदानेन वायुलोके महीयते ।
एतदेव फलं प्रोक्तं प्रदानेन तु पक्षिणाम् ॥

अत्रारण्यकपदोपादानात् पक्षिणोऽप्यारण्यका एव मयूरादयो विवक्षिताः । तथा भोगमाप्नोति ताम्रदः ।

लोहारकूटयोर्दानात् कुप्यमाप्नोत्यसंशयम् ।
अयसस्य प्रदानेन स्थैर्य्यं सुमहदश्नुते ।

अत्र लोहपदमयःप्रभृतीनामप्युपादानात् कांस्यपरमिति सागरः । तथा च विश्वकोषे लोहं वै सर्व्वतैजसमिति । आरकूटं पित्तलम् ।

तथा—

त्रपु-सीसकयोर्द्दानात् वह्निदृष्टिमवाप्नुयात् ।

त्रपु रङ्गम् । तथा—

शिल्पभाण्डानि यो दद्याल्लोहानि विधिवद्द्विजाः ॥
विद्यादानफलं तस्य कथितं नात्र संशयः ।

शिल्पभाण्डानि शिल्पनिर्म्माणोचितद्रव्याणि वास्यादीनि ।

अत्र कारुभ्यो दानं विष्णुधर्म्मोत्तर एव स्थानान्तरे श्रवणात् । तथा च—

येन जीवति भाण्डेन तस्य भाण्डस्य दायकः ।
सर्व्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥

तथा—

यज्ञोपकरणं द्रव्यं ब्राह्मणस्य महाफलम् ।
युद्धोपकरणं द्रव्यं क्षत्रिये द्विजपुङ्गवाः ॥
पण्योपयोगि तद्वैश्ये शूद्रे शिल्पोपजीवनम् ।
यस्योपयोगि यद्द्रव्यं देयं तस्यैव तद्भवेत् ॥
येन येन च भाण्डेन यस्य वृत्तिरुदाहृता ।
तत्तत्तस्यैव दातव्यं पुण्यकामेन धीमता ॥

तथा— वर्म्मदाता नरो नित्यं रक्षां समधिगच्छति ।

वर्म्म सन्नाहः । तथा—

आयुधानां प्रदानेन रिपुनाशमवाप्नुयात् ॥

आयुधानि शक्रदैवतानि ब्राह्मणप्रकरणे पाठादेव ब्राह्मणे दानम् ।

तथा सामान्यतो मनुः—

यद्यदिष्टतमं किञ्चित् यच्चास्य दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥

एषु सर्व्वेषु विष्णुर्द्देवतेति ।

नन्दिपुराणे—

अलङ्कारन्तु यो दद्याद्विप्रायाथ सुराय वा ।
स गच्छेद्वारुणं लोकं नानाभरणभूषितः ॥
जातः पृथिव्यां कालेन भवेद्द्वीपपतिर्नृपः ।

तथा—

यश्चोभयमुखीं दद्यात् विप्रे वै वेदवादिनि ।
देवाय वाप्यभीष्टाय स कुलान्येकविंशतिम् ॥

समुद्धृत्य नरस्तिष्ठेन्नरकाद्ब्रह्मणोऽन्तिके ।
युगानि रोमतुल्यानि यदि श्रद्धापरो नरः ॥

आदित्यपुराणे—

ये च शय्यां प्रयच्छन्ति देवेषु च गुरुष्विह ।
ज्ञानवृद्धेषु विप्रेषु दत्त्वा नश्यति कण्टकम् ॥
दीपं ददाति यो मर्त्यः सुरब्राह्मणवेश्मनाम् ।
स दिव्येन तु यानेन महाभ्राभप्रकाशिना ॥
गच्छेत स्वर्गमतुलं वसेत्तत्र समाः शतम् ॥

सुवर्णदानानुवृत्तौ—

यं देवमर्चयेत्तेन यश्चैव सम्प्रयच्छति ।
तस्य लोके निवसति नित्यश्चैव ददाति यः ॥

तथा—

छत्रं ये च प्रयच्छन्ति गुरु-विप्र-सुरेषु च ।
न तेषां पतते घोरमग्निवर्षं सुदारुणम् ॥

विष्णुधर्मोत्तरे—

यानं शय्यासनं छत्रं पादुके चाप्युपानहौ ।
वाहनं गाश्च धर्मज्ञस्त्विद्भ्यो ददाति यः ॥
एकैकस्मादवाप्नोति वह्निष्टोमफलं नरः ।

यानं रथं, पादुके काष्ठोपानहौ वाहनं हस्त्यादीति सागरः ।

तथा—

निवेद्य शस्त्राणि तथा गतिमाप्नोत्यनुत्तमाम् ।
उपस्करः स्नान-पूजाद्युपयोगिकलसादिसामग्री ॥

तथा—

राजलिङ्गप्रदानेन राजेव भवति चितौ ।

राजलिङ्गं कनकदण्डादि । तथा—

विभूषणप्रदानेन राजा भवति भूतले ।

विभूषणमलङ्कारः किरीटादिः ।

तथा—

प्रतिपाद्य तथा भक्त्या ध्वजं त्रिदशवेश्मनि ।
निर्णुदत्याशु पापानि महापातकजान्यपि ॥

महापातकशब्दस्तद्धेतुपरः ।

तथा—

भूमिं कृत्वा तु यो दद्याद्देवब्राह्मणसंसदि ।
स्वर्गलोकमवाप्नोति पुरुषोऽतिसुदारुणः ॥

अतिसुदारुण इत्यत्रापिशब्दोऽध्याहार्य्यस्तेनातिदारुणोऽपि स्वर्गं प्राप्नोतीत्यर्थः । अतिदारुणोऽतिक्रान्तदारुणः । दारुणशब्द-श्चानिष्टपर इत्यन्ये ।

तथा—

वस्त्रदानेन लोकेऽस्मिन् सुवेशस्त्वभिजायते ।

तथा— फलानि दत्त्वा विप्रेभ्यः सफलां विन्दते श्रियम् ।

तथा— गीतवाद्यप्रदानेन सौख्यं प्राप्नोत्यनुत्तमम् ।

तथा— प्रेक्षणीयप्रदानेन रूपवानभिजायते ।

प्रेक्षणीयं नृत्यं । अत्र गीतवाद्यानामभ्यासनमेव दानपदार्थः ॥

———

## अथ सूर्य्यदानानि ।

भविष्यपुराणे—

गावो वाऽथ महिष्यो वा गजानश्वांश्च शोभनान् ।
यः प्रयच्छति सूर्य्याय तस्य पुण्यफलं शृणु ॥
अक्षयं सर्व्वकामाढ्यमश्वमेधफलं लभेत् ।
सहस्रगुणितं तच्च दानमत्रोपतिष्ठते ॥

दीयत इति दानं गोमहिषादि तेन यदपि दीयते तदपि सहस्रगुणितमुपतिष्ठते इत्यर्थः । तथा—

यस्तु दारुमयं कुर्य्याद्रवे रथमनुत्तमम् ।
स यात्यर्कसवर्णेन विमानेनार्कमण्डलम् ॥

तथा—

पुस्तकं भानवे दद्याद् भारतस्य गणाधिप ।
सर्व्वपापविनिर्म्मुक्तो विष्णुलोके महीयते
रामायणस्य दत्त्वा तु पुस्तकं त्रिपुरान्तक ।
वाजपेयफलं प्राप्य गोपतेः पुरमाव्रजेत् ॥

गोपतेः सूर्य्यस्य ।

भविष्यं शाम्बसंज्ञञ्च दत्त्वा सूर्य्याय पुस्तकौ ।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥

तथा—

दत्त्वा वासांसि सूर्य्याय अलङ्कारांस्तथैव च ।
क्रीड़तेऽण्डजलोकस्थो यावदाभूतसंप्लवम् ॥

अलङ्कारान् हीरकादीन् । अण्डजः सूर्य्यः ।

तथा—

छत्रं ध्वजवितानं वा पताकाश्चामराणि च ।
हेमदण्डानि यो दद्याद्रवेर्वै भक्तिमान्नरः ॥
ध्वजश्चामरपताकान्वितोच्छ्रितदण्डः ।
विमानेन स दिव्येन किङ्किणीजालमालिना ।
सूर्य्यलोकमितो गत्वा भवत्यप्सरसां पतिः ॥
तत्रोष्य सुचिरं कालं स्वर्गात् प्रत्यागतः पुनः ।
मनुष्ये जायते राजा सर्व्वराजनमस्कृतः ॥

तथा—

[1]वेश्मकदम्बकं यस्तु दद्यात् सूर्य्याय भक्तितः ।
स गच्छेत् परमं स्थानं यत्र तिष्ठति भानुमान् ॥

तथा—

भेर्य्यादीनि च वाद्यानि शङ्खवेण्वादिकानि च ।
ये प्रयच्छन्ति सूर्य्याय यान्ति ते हंसमन्दिरम् ॥
वाद्यानि वाद्यभाण्डानि ।

तथा—

महीं ददाति योऽर्काय कृष्यां फलवतीं शुभाम् ।
स तारयति वै वंशान् दशपूर्व्वान् दशावरान् ।
विमानेनार्कवर्णेन गोपुरं गोपतेर्व्रजेत् ॥
कृष्यां कृष्युचिताम् । गोपतेः सूर्य्यस्य ।

---

१ C वेश्माः ।

तथा—

ग्रामं ददाति सूर्य्याय यो भक्त्या मतिमान् शुभम्।
विमानेनार्कवर्णेन स याति परमां गतिम्॥

[1]शुभं शोभनम्।

तथा—

धनं धान्यं हिरण्यं वा वासांसि विविधानि च।
ये प्रयच्छन्ति सूर्य्याय ते यान्ति परमां गतिम्॥

तथा—

सूर्य्याय तर्पणीं धेनुं गामेकां यः प्रयच्छति।
कञ्जजामचलां प्राप्य पुनर्लेखपुरं व्रजेत्॥

कञ्जजामचलां लक्ष्मीमत्यन्तस्थिरामित्यर्थः। लेखो देवः।

गोशरीरे तु रोमाणि यावन्ति त्रिपुरान्तक।
तावत्यो वर्षकोट्यस्तु लेखलोके महीयते॥

लेखो देवः। तथा—

गोशतं भानवे दत्त्वा राजसूयफलं लभेत्।
अश्वमेधफलन्तस्य यः सहस्रं प्रयच्छति॥

---

## अथ महेश्वरदानानि।

स्कन्दपुराणे— महेश्वरवाक्यम्—

यो मे गान्तु हिरण्यं वा दद्यादविमनाः प्रिये।
लोकान् ददाम्यहं तस्मै सर्व्वलोकसमर्चितान्॥

---

१ D अधिकः।

अविमना: मच्चित्त इति सागरः । सोत्साह इत्यन्ये ।

तथा—

वृषभं वा प्रयच्छेत श्वेतं नीलमथापि वा ।
स कुलानामुभयतस्तारयेदेकविंशतिम् ॥

तथा—

कृत्वा हिरण्मयीं यो मे दद्यात् प्रतिकृतिं स्त्रिकाम्[१] ।
सर्व्वगन्धरसैर्युक्तां निर्यासैश्च सुसंस्कृताम् ।

सर्व्वगन्धाः सर्व्वरसाश्च परिभाषोक्ताः । निर्य्यासः सरल-द्रवादिरूपः ।

भक्ष्यभोज्यैश्च विविधैः कृष्णपक्षचतुर्द्दशीम् ।
पूर्व्व-दक्षिणयोश्चाथ पश्चिमोत्तरयोस्तथा ।
पार्श्वेषु हरितालञ्च कृष्णागुरु मनःशिलाम् ।
चन्दनञ्चैव दद्याद्वै यथासंख्येन पूजितम् ।
तस्य पुण्यफलं देवि शृणु यन्मत्तकाशिनि ।
सर्व्वव्याधिविनिर्म्मुक्तस्तथा निष्कल्मषश्च ह ।
वर्षकोटिशतान्यष्टौ दिवि भुक्त्वा महासुखम् ।
इह लोके सुखी जातो मामेव प्रतिपद्यते ।

अत्र हिरण्मयीमिति शालिपिष्टमयीमिति क्वचित्पाठः ।

तथा—

रत्नावलीञ्च यो दद्याद्ब्राह्मणः क्षत्रियश्च विट् ।
शूद्रः स्त्री वा स मल्लोके मत्सौख्यं प्राप्नुते परम् ॥

---

१ C प्रकृतिकाम्रिकाम् ।

तथा—

गोचर्म्ममात्रं वा यो दद्यान्मे वसुन्धराम् ।
स मे पुरं समासाद्य गणेशैः सह मोदते ॥

भूमिदानोक्तं गोचर्म्मपरिमाणमिह ग्राह्यम् ।

तथा—

दत्त्वा तु खेलं वृषभं महादेवालये नरः[१] ।
रुद्रलोकमवाप्नोति कुलमुद्धरते तथा ।

खेलं क्रीड़ावन्तम् ॥

अथ वासुदेवाय दानानि ।

नरसिंहपुराणे—

यो गां पयस्विनीं विष्णोः कपिलां संप्रयच्छति ।
स सर्व्वपापरहितः सर्व्वभूषणभूषितः ।
गवां सहस्रदानेन फलं प्राप्य दिवं व्रजेत् ।

तथा—

ध्वजञ्च विष्णवे यस्तु गरुड़ेन समन्वितम् ।
दद्यात्सोऽपि ध्वजाकीर्णविमानेन विराजते ॥

वक्ष्यमाणगरुड़ध्वजान्तरादतिशयितफलश्रुतेश्छत्रातप-चामर-पताकाशालिनो यथाशक्तिनिर्म्मितप्रासादस्योर्द्धं स्थाप्यस्य ध्वजस्य ग्रहणमचेति सागरः ।

१ A C देवाय यो नरः ।

वामनपुराणे—

[1][यः कारयेन्मन्दिरं केशवस्य पुण्यान् लोकान् स जयेच्छाश्वतांश्च।]

दत्त्वारामान् पुष्पफलाभिपन्नान्।

भोगान् भुङ्क्ते कामतः श्लाघनीयान्॥

विष्णुधर्म्मोत्तरे—

विष्णोरायतने दत्त्वा तत्कथापुस्तकं नरः।

ब्रह्मलोकमवाप्नोति वत्सरान् बहवो द्विजाः॥

तत्कथापुस्तकं विष्णुपुराणादि।

तथा—

पुस्तकांस्तु तथैवान्यान् यः प्रदद्यान्नरस्त्विह।

सारस्वतमवाप्नोति लोकं कालं तथा बहु॥

अन्यान् विष्णु[2]महोत्सवबोधकान् स्कन्दपुराणादीन्।

तथा—

स्वभृतं वाचकं कृत्वा देवागारे नरः सदा।

विद्यादानफलं प्राप्य ब्रह्मलोके महीयते॥

स्वभृतं वेतनादिना स्वायत्तीकृतमिति वृद्धाः।

तथा—

[3][विष्णोः शङ्खप्रदानेन वारुणं लोकमश्नुते।

---

१ [ ] चिह्नितांशः मूलपुस्तकस्थः।

२ D माहात्म्यम्।

३ C पुस्तके [ ] चिह्नितांशोऽधिकः।

मानुष्यमासाद्य तथा ख्यातशब्दश्च जायते ॥

घण्टाप्रदानेन तथा महद्यश उपास्नुते ।]

तथा— सौभाग्यं महदाप्नोति किङ्किणीं प्रददद्धरिः ।

किङ्किणी घर्घरीति प्रसिद्धेति सागरः । क्षुद्रघण्टिकेति प्राञ्चः ।

तथा— कूटागारं तथा दत्त्वा नगराधिपतिर्भवेत् ।

कूटागारं मञ्चगृहम् ।

तथा— कृत्वा तु देवकर्मार्थं नवां वेदिं दृढां शुभाम् ।

पार्थिवत्वमवाप्नोति वेदी हि पृथिवी यतः ॥

तथा— तोरणं कल्पयेद्यस्तु देवदेवालये नरः ।

लोकेषु तस्य द्वाराणि भवन्ति विवृतानि च ॥

तथा—

देववेश्मोपभोग्यानि शिल्पभाण्डानि यो नरः ।

दद्याद्वा वाद्यभाण्डानि गणेशत्वमवाप्नुयात् ॥

तथा—

यः कुम्भं देवकर्मार्थं नरो दद्यान्नवं शुभम् ।

वारुणं लोकमाप्नोति सर्व्वपापैः प्रमुच्यते ॥

शुभं सुरूपं । देवकर्मार्थं देवपूजार्थम् ।

तथा—

चतुरः कलसान् यस्तु दद्याद्देवगृहे नरः ।

चतुःसमुद्रवलयां स तु भुङ्क्ते वसुन्धराम् ॥

अत्र फलभूमा शक्त्यनुसारेण सुवर्णादिघटिताः कुम्भा ग्राह्या इति सागरः ।

तथा—

वारिधानीं तथा दत्त्वा वारुणं लोकमश्नुते।

वारिधानी वासमीति सागरः। अत्रापि गन्ध्यनुसारः।

तथा— कमण्डलुप्रदानेन गोदानफलमाप्नुयात्।

तथा—

मात्रान्तु परिचर्य्यार्थं निवेद्य विधिवत्तथा।

सर्व्वकामसमृद्धस्य यज्ञस्य फलमश्नुते॥

परिचर्य्यार्थं मात्रां सामग्रीम्।

तथा—

माल्याधारं तथा दत्त्वा धूपाधारन्तथैव च।

गन्धाधारं तथा पात्रं कामानां पात्रतां व्रजेत्॥

माल्याधारो डला साजी एवमादिः। धूपाधारो धूपदहन इति प्रसिद्धः। गन्धाधारः सीप इति प्रसिद्धपात्रम्।

तथा—

समुद्रजानि पात्राणि दत्त्वा वै तैजसानि च।

पात्रं भवति कामानां विद्यानाञ्च धनस्य च॥

पात्रं भाजनं। समुद्रजानि शङ्खशुक्तिपात्राणि। तैजसानि सुवर्णरजतादिनिर्म्मितानि।

तथा— पतद्ग्रहप्रदाने च सर्व्वपापमपोहति।

पतद्ग्रहः पड़िगह इति प्रसिद्धः।

तथा— दर्पणस्य प्रदानेन दर्पवान् रूपवान् भवेत्।

तथा— उशीरकूर्च्चकं दत्त्वा सर्व्वपापैः प्रमुच्यते।

उशीरकूर्च्चकं देवाङ्गनशोधनार्थं वीरणमूलघटितं कोञ्चीति प्रसिद्धम् ।

तथा—

दत्त्वा गोबालकं विप्राः सर्व्वांस्तापानपोहति ।

गोबालकमिह प्रकरणे गोबालकृतकूर्च्चकम् ।

तथा— दत्त्वा चामरजं कूर्चं श्रियमाप्नोत्यनुत्तमाम् ।

चामरजं चमरमृगरोमभवम् ।

आसनानां प्रदानेन स्थानं सर्व्वंच विन्दति ।

पादपीठप्रदानेन तथैव च नरोत्तमाः ॥

तथैव चेत्यनेनासनदानफलं सम्बध्यते ।

शयनासनदानेन श्रियं विन्दति शाश्वतीम् ।

तथा—

उत्तरच्छददानेन सर्व्वान् कामानवाप्नुयात् ।

उत्तरच्छदः शय्यायामाच्छादनवस्त्रम् ।

तथा—

वितानकप्रदानेन सर्व्वपापैः प्रमुच्यते ।

परां निर्वृतिमाप्नोति यत्र यत्राभिजायते ॥

वितानं चन्द्रातपश्चित्ररूपवस्त्रनिर्म्मितोविमान इति प्रसिद्धम् ।

तथा—

कार्पासिकं वस्त्रयुगं यः प्रदद्याज्जनार्द्दने ।

यावन्ति तस्य तन्तूनि हस्तमात्रमितानि तु ॥

तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।

तथा—

श्वेतवस्त्रप्रदानेन श्रियं प्राप्नोत्यनुत्तमाम् ।
महाराजनरक्तेन सौभाग्यं महदश्नुते ॥

अत्रापि स एव शेषः ।

तथा— नीलरक्तं विनारक्तं शेषवद्दे द्विजोत्तमाः ।
दत्त्वा भवति धर्म्मात्मा सर्व्वव्याधिविवर्जितः ॥

एतेन नीलीरक्ते तरद्रक्तम्[1] देयमित्युक्तम् ।

तथा— दुकूलकप्रदानेन वह्निष्टोमफलं लभेत् ।

तथा—

कौशेयानि वस्त्राणि मृदूनि च लघूनि च ।
यः प्रयच्छति देवेशे सोऽश्वमेधफलं लभेत् ॥

कौशेयानि कौशकारकृमितन्तुमयानि ।

सरोमाणि च वस्त्राणि यः प्रयच्छति धर्म्मवित् ।
क्षतानि वरवस्त्राणि सोऽश्वमेधफलं लभेत् ॥

सरोमाणि तूलपट्टादिरूपाणि ।

तथा—

नानाभक्तिविचित्राणि चीरजानि नवानि च ।
दत्त्वा वासांसि शुभ्राणि राजसूयफलं लभेत् ॥

नानाभक्तिविचित्राणि सूक्ष्मसूच्यादिकर्म्मनिर्म्मितानि । चीरजानि वल्कलजानि। ब्राह्मणवासोदानप्रकरणे त्रयाणामेषां पृथक्श्रुतेरत्रापि स्वतन्त्राणामेव दानमिति सागरः ।

---

१ A भवेद्रक्तम् ।

तथा—

अनुक्तान्यपि विप्रेन्द्र वासांस्याभरणानि च।

दत्त्वैवं देवदेवाय वह्निष्टोमफलं लभेत्॥

अनुक्तानि वस्त्राणि उक्तविपरीतजातीयानि वर्म्मनेत्रादीनि आभरणानि हारादीनि।

तथा— यज्ञोपवीतदानेन ब्रह्मदानफलं लभेत्।

तथा— दत्त्वा प्रतिसरान् मुख्यान् न भूतैरभिभूयते।

प्रतिसरः पट्टादिरचितसूत्रं मुख्यमुत्कृष्टम्।

तथा—

नरः सुवर्णदानेन सर्व्वान् कामान् समश्नुते।

तदा— रूप्यदो रूपमाप्नोति विशेषाद्भुवि दुर्लभम्।

रत्नदानेन लोकेऽस्मिन् प्रामाण्यमुपगच्छति॥

प्रामाण्यं सत्यवचनता। तथा—

मूर्द्धाभरणदानेन राजसूयफलं लभेत्।

मूर्द्धाभरणं किरीटादि।

तथा—

कर्णपूरप्रदानेन श्रुतिं विन्दति सर्व्वतः।

सर्व्वतः श्रुतिं सर्व्वशास्त्रश्रवणमिति सागरः। कर्णपूरः कर्णाभरणविशेषः।

तथा—

कर्णाभरणदानेन भवेच्छ्रुतिधरो नरः।

अश्वमेधमवाप्नोति सौभाग्यञ्चैव विन्दति॥

तथा— ग्रैवेयकाणि दत्त्वा च सर्व्वशास्त्रार्थविद्भवेत्।
नार्य्यश्च वशगास्तस्य भवन्ति द्विजपुङ्गवाः।
श्रियमाप्नोति परमां राजसूयञ्च विन्दति॥

तथा— केयूरदानाद्भवति शत्रुपक्षक्षयङ्करः।

तथा— हस्ताङ्गुरीयदानेन परं सौभाग्यमाप्नुयात्।

हस्ताङ्गुरीयकं हस्ताङ्गुलीपरिधानयोग्यं मुद्रिकादि।

तथा—

तथैवाङ्गददानेन राजा भवति भूतले।

तथा— श्रोणीसूत्रप्रदानेन मर्हीं सागरमेखलाम्।
प्रशास्ति निहतामित्रो नात्र कार्य्या विचारणा॥

श्रोणीसूत्रं काञ्चीदाम।

तथाभरणदानेन स्थानं सर्व्वत्र विन्दति।

तथा— [1]पादाङ्गुलीयदानेन गुह्यकानां पतिर्भवेत्।

पादाङ्गुलीयं चरणाङ्गुलिपरिधानयोग्याङ्गुलिका।

तथा— यथादेशं यथाकालं राजलिङ्गं सुरालये।
दत्त्वा भवति राजैव नात्र कार्य्या विचारणा॥

राजलिङ्गं छत्रचामरादि।

तथा—

पादुकानां प्रदानेन गतिमाप्नोत्यनुत्तमाम्।
उपानत्प्रदानेन विमानमधिरोहति॥
यथेष्टं तेन लोकेषु विचरत्यमरप्रभुः।

---

१ A D पादाङ्गुलीय।

तथा— गोदानफलमाप्नोति तथा पाद्यप्रदो नरः ।

पाद्यं पादप्रक्षालनार्थं जलम् ।

तथा— नरस्त्वाचमनीयस्य दानाद्भवति निर्मलः ।

तथा— मुखलेपप्रदानेन परं रूपमवाप्नुयात् ।

मुखलेपः मुखहेतुरङ्गरागः शीतकुङ्कुमलेप-ग्रीष्मचन्दन-लेपादिः ।

तथा—

गन्धतैलानि दिव्यानि सुगन्धीनि शुचीनि च ।
केशवाय नरो दत्त्वा गन्धर्वैः सह मोदते ॥

दिव्यान्युत्कृष्टानि शुचीन्यपनीताशुचिसम्बन्धानि ।

तथा— राजा भवति लोकेऽस्मिन् छत्रं दत्त्वा द्विजोत्तमः ।
नाप्नोति रिपुजं दुःखं संग्रामे रिपुजिद्भवेत् ॥

तथा— तालवृन्तप्रदानेन निर्वृत्तिं प्राप्नुयात् पराम् ।
तथा चामरदानेन श्रीमान् भवति भूतले ॥

तथा— लोकेषु ध्वजभूतस्य विष्णोर्दत्वा तथा ध्वजम् ।
शक्रलोकमवाप्नोति बहूनब्दगणान्नरः ।

ध्वजश्चामर-दर्पण-पताकाद्यन्वितो दण्डः, चिह्नदण्ड इति प्रसिद्धः ।

तथा—

पताकाञ्च शुभां दत्त्वा तथा केशववेश्मनि ।
वायुलोकमवाप्नोति बहून्यब्दगणानि तु ॥
दोधूयते तथा स तु वायुना केशवालये ।

तथा तथाऽस्य सकलं देहात्पापं प्रणश्यति ॥
यथा यथा च सा शोभां करोति चिदशालये।
तथा तथा स यशसा महितस्तु विराजते ॥
पताकां ये प्रयच्छन्ति कूटागारे मनोहराम्।
संत्यज्य सकलं पापं वायुलोकं व्रजन्ति ते ॥

तथा—

युक्तं पीतपताकाभिर्निवेद्य गरुड़ध्वजम्।
केशवाय द्विजश्रेष्ठाः शक्रलोके महीयते ॥

गरुड़ध्वजं गरुड़चिह्नितं ध्वजम्। तथा—

युक्तं नीलपताकाभिस्तालं दत्त्वा द्विजोत्तमाः।
यस्माल्लोकात् परिभ्रष्टो विरोगस्त्वभिजायते ॥

तालं तालवृक्षाकारं ध्वजम्। नीलपताकाभिस्त्रिसृभिः।

तथा—

युक्तं श्वेतपताकाभिर्मकरं यः प्रयच्छति।
राजा भवति लोकेऽस्मिन् भुक्त्वा लोकान् प्रचेतसः ॥

प्रकरणान्मकरशब्दोऽत्र मकराकृतिध्वजपरः।

युक्तं रक्तपताकाभिर्दत्त्वा ऋष्यमनुत्तमम्।
अलकां समवाप्नोति तथा पापक्षयं नरः ॥
अत्रापि ऋष्यशब्दो ऋष्ययुक्तध्वजपरः ॥

मकर-ऋष्यौ च वस्त्रनिर्मितौ। ऋष्यो हरिणः, कलिङ्गस्तु हरिणविशेषं ऋष्यमाह। तथा च तेनोक्तं वर्णतोऽयं नीलो घोटकप्रमाणः कर्कशजिह्वश्टङ्गश्चेति।

तथा—

शिविकां ये प्रयच्छन्ति ते प्रयान्त्यमरावतीम् ।

अश्वदाः सूर्य्यलोकस्था राजन्ते[1] दिवि सूर्य्यवत् ॥

शिविका चतुर्द्दोलकम् ।

तथा—

गवां लोकमवाप्नोति धेनुं दत्त्वा पयस्विनीम् ।

अनड्वाहप्रदानेन दशधेनुफलं लभेत् ॥

अजाविमहिषोष्ट्राणां तथैवाश्वतरस्य च ।

सहस्रगुणितं दानं पूर्व्वप्रोक्तं प्रकीर्त्तितम् ॥

विष्णुधर्म्मोत्तरीय ब्राह्मणसम्प्रदानकाजादि[2]दानेषु यत् फलं तदेव विष्णुसम्प्रदानक तत्तत्पशुदाने सहस्रगुणितं फलं भवतीत्यर्थः। अश्वतरो वेसर इति प्रसिद्धः ।

तथा—

वारुणं लोकमाप्नोति दत्त्वा वस्त्रं नरोत्तमः ।

अविप्रदाता च तथा तमेव लोकमश्नुते ॥

अविश्छागः ।

तथा—

उष्ट्रं वा गर्द्दभं वापि खरं वा यः प्रयच्छति ।

अलकां स समासाद्य यक्षेन्द्रैः सह मोदते ॥

खरोऽश्वतरः ।

---

१ A C अनन्तः । २ C खजावि— ।

तथा—

दासं दत्त्वा सुखे लोके नाकभ्रष्टोऽभिजायते ।
दासीं दत्त्वा तथा विप्रा नात्र कार्य्या विचारणा ॥

तथा—

गणिकां ये प्रयच्छन्ति नृत्यगीतविशारदाम् ।
सर्व्वदुःखविनिर्म्मुक्तास्ते प्रयान्त्यमरावतीम् ।
नृत्यं दत्त्वा तथाप्नोति रुद्रलोकमसंशयम् ॥

तथा—

प्रेक्षणीयप्रदानेन शक्रलोके महीयते ।
दत्त्वा गीतञ्च धर्म्मज्ञाः गन्धर्व्वैः सह मोदते ॥
वाद्यं दत्त्वा तथा विप्राः शक्रलोके महीयते ।
वाद्यानामपि देवस्य तन्त्रीवाद्यं सदाप्रियम् ॥

एतेन वाद्यान्तरापेक्षया तन्त्रीवाद्यदानेऽधिकफलम् ।

तथा—

दुन्दुभिं ये प्रयच्छन्ति कीर्त्तिमन्तो भवन्ति ते ।

दुन्दुभि भेरी ।

तथा—

दत्त्वा धान्यानि बीजानि शस्यानि विविधानि च ।
रूपकाणि च तान्येव प्राप्नोत्ययुतशः पुनः ॥

धान्यानि कलमादीनि। बीजानि शाककुष्माण्डादीनां शस्यानि धान्येतरयवादीनि। पृथक् धान्यग्रहणं फलभूम्ने। रूपकाणि रूपा इति पश्चिमदेशे प्रसिद्धानीति सागरः ।

तथा—

दत्वा शाकानि रम्याणि विशोकस्त्वभिजायते ।

दत्त्वा च व्यञ्जनार्थाय तथोपकरणानि च ॥

रम्याणि शाकदलानि कीटादिवेधरहितानि स्वादूनि च व्यञ्जनोपकरणानि घृतशर्करासैन्धवादीनि ।

तथा—

पुष्पवृक्षं तथा दत्त्वा ग्रामस्याधिपतिर्भवेत् ।

फलवृक्षं तथा दत्त्वा नगराधिपतिर्भवेत् ॥

पुष्प-फलवृक्षौ पुष्पफलार्थवृक्षाविति सागरः। पुष्पितफलित-वृक्षावित्यन्ये ।

कङ्कतस्य प्रदानेन विरोगस्त्वभिजायते ।

तथा—

कूर्चप्रसाधनं दत्त्वा सुखमत्यन्तमश्नुते ।

कूर्चप्रसाधनं श्मश्रुप्रसाधनार्थं द्रव्यम् ।

विस्मापनीयं यत् किञ्चित् दत्त्वाऽत्यन्तं सुखी भवेत् ।

विस्मापनीयमाश्चर्य्यजनकम् ।

इति विष्णवे दानानि ।

---

अथ दुर्गायाः ।

भविष्यपुराणे—

अश्मसारमयं कृत्वा नानादीपसमन्वितम् ।

दीपवृक्षं समुद्बोध्य दुर्गायाः पुरतो नृप ॥

दत्त्वा कन्यायुतं साग्रं दुर्गालोके महीयते ।
पुनरेत्य नरो वीर राजराजो भवेन्नरः ॥

अश्मसारमयं लौहघटितम् ।

चन्द्रांशुनिर्म्मलं स्वच्छं दर्पणं मणिभूषितम् ।
पर्य्यन्तशोभितं कृत्वा नानामाल्योपलेपनैः ॥
दुर्गायाः पुरतः कृत्वा श्रद्धया परयान्वितः ।
राजसूयफलं प्राप्य हंसलोके महीयते ॥

हंस आदित्यः ।

सम्प्रसारितदेहो यो दण्डवत् पतितो भुवि ।
चण्डिकापुरतो वीर स याति परमां गतिम् ॥
सर्व्वयज्ञोपवासेषु तीर्थवेदिषु यत्फलम् ।
तत्फलं लभते वीर प्रणम्य शिरसा सतीम् ॥
ध्वजं श्वेतपताकाढ्यामथवा पञ्चवर्ण्णिकम् ।
किङ्किणीजालसम्वीतं श्वेतकचोपशोभितम् ॥
नानाबुद्बुदसम्पन्नं महासिंहोपशोभितम् ।
दत्त्वा देव्यै महाबाहो शक्रलोके महीयते ॥
शङ्खकुन्देन्दुसङ्काशं राजतं यानमुत्तमम् ।
समारूढो वसेद्वीर दिव्यं वर्षशतं दिवि ॥
ध्वजमालाकुलं यस्तु कुर्य्याद्दै चण्डिकालयम् ।
महाध्वजाष्टकं वापि दिशासु विदिशासु च ॥
[1]स विमानसहस्रेस्तु समन्तादुपशोभितम् ।

---

१ A B सुविमान— ।

कल्पानाञ्च शतं साग्रं दुर्गालोके महीयते ॥
शङ्खकुन्देन्दुसङ्काशं प्रवालमणिभूषितम्।
मणिदण्डमयं छत्रं दुर्गाया यः प्रयच्छति ॥
स छत्रेण विचित्रेण किङ्किणीजालमालिना।
धार्य्यमाणेन शिरसा हरलोके महीयते ॥
विमानवरसंघातैरावृतः सततं नृप।
अप्सरोगणगन्धर्व्वैः सेव्यमानः समन्ततः ॥
चण्डिकायतने रम्ये घण्टानां यः कदम्बकम्।
कुर्य्याद्दि शृङ्खलायुक्तं नानानाद[1] गणावृतम् ॥
मयूरपत्रसंवृत्तं स गच्छति सुरालयम्।
विमानवरमारूढ़ो घण्टा-चामरभूषितः ॥
भेरी मृदङ्ग मुरजा तिमिला पटहादिकम्।

तिमिला वाद्यविशेषः।

वीणावंशं शताङ्कं यो देव्यै भूप[2] प्रयच्छति।
स गच्छति महाबाहो यत्र देवी व्यवस्थिता ॥
विमानवंशैर्बहुभिर्वावृतः सततं नृप।
कल्पायुतं शतं साग्रं दुर्गायाऽनुचरो भवेत् ॥
पुनरेत्य भुवं वीर राजा भवति धार्म्मिकः।
कृत्वा हेममयं शूलं हेमपात्रादिषु स्थितम् ॥
पुष्पमालापरिच्छिन्नं विमानवरशोभितम्।
गृहीत्वा तु व्रजेद्वीर चण्डिकायतनं परम् ॥

---

१ D नानानाग—। २ D भूयः।

धारयेच्छिरसा पात्रं नानावाद्यगणैर्वृतः।
कुर्य्यात् प्रदक्षिणञ्चापि प्रणम्य शिरसा शिवाम् ॥
विन्यसेद्विधिवद्वीर दुर्गायाः पुरतो नृप।
य एवं विन्यसेद्वीर त्रिशूलं विधिवन्नरः ॥
स गच्छति परं स्थानं यत्र देवस्त्रिशूलधृक्।
शङ्खस्वस्तिकपुष्पाद्यैर्भुवि शोभां नराधिप ॥
कृत्वा वर्णकपिष्टाद्यैश्चण्डिकायतने नृप।
समारुह्य विमानाख्यं नानारत्नोपशोभितम् ॥
मोदते दिवि गन्धर्व्वैः तथाचाप्सरसां गणैः।
दुर्गापूजोपकरणं दत्त्वाल्पं यदि वा बहु ॥
भक्त्या वित्तानुसारेण रुद्रलोके महीयते ॥
चण्डिकायतने यस्तु श्रद्धया परयाऽन्वितः।
वापी-कूप-तड़ागञ्च दीर्घिकां यश्च कारयेत् ॥
स कुलानां शतं साग्रं तारयित्वा भवार्णवात्।
चण्डिकापुरमासाद्य मोदते चण्डिकानुगः ॥
यावन्नोपैति मरणं यावन्नाक्रमते जरा।
यावन्नेन्द्रियवैकल्यं तावत् पूजय चण्डिकाम् ॥
चण्डिकार्च्चनतुल्योऽस्ति धर्म्मो नान्यो नराधिप।
इत्थं विज्ञाय यत्नेन पूजयेत् सर्व्वमङ्गलाम् ॥
भक्त्या वै सततं देवीं शिवां शान्तां त्रिशूलिनीम्।
इह लोके श्रियं प्राप्य ते यान्ति परमं पदम् ॥
चण्डिकां पूजयित्वा तु प्रहृष्टेनान्तरात्मना।

कृताञ्जलिपुटो भूत्वा इदं स्तोत्रमुदीरयेत् ॥
दुर्गां शिवां शान्तिकरीं ब्रह्माणीं ब्रह्मणः प्रियाम् ।
सर्व्वलोकप्रणेत्रीञ्च प्रणमामि सदाशिवाम् ॥
मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम् ।
विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम् ॥
सर्व्वदेवमयीं देवीं सर्व्वरोगभयापहाम् ।
ब्रह्मेशविष्णुनमितां प्रणमामि सदा उमाम् ॥
विन्ध्यस्थां विन्ध्यनिलयां दिव्यस्थाननिवासिनीम् ।
योगिनीं योगमाताञ्च चण्डिकां प्रणमाम्यहम् ॥
ईशानमातरं देवीमीश्वरीमीश्वरप्रियाम् ।
प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम् ॥
इदं यः पठते स्तोत्रं शृणुयाद्वापि भक्तितः ।
स मुक्तः सर्व्वपापैस्तु मोदते दुर्गया सह ॥

[1]इति दुर्गादानानि ।

---

स्कन्दपुराणे—

सुगन्धाः शीतलाश्चापो रसैर्दिव्यैः समन्विताः ।
यः प्रयच्छति विप्रेभ्यस्तस्य पुण्यफलं शृणु ।
विमानं सूर्य्यसङ्काशमप्सरोगणसेवितम् ।
सोऽधिरुह्य दिवं याति वरुणस्य सलोकताम् ॥

---

१ A B पुस्तके पतितः ।

तत्रासावयुतान्यष्टावुषित्वा देववत् सुखी ।
कुले महत्यसङ्कीर्णे जायते धनधान्यवान् ॥

असङ्कीर्णे सुवृत्तिमात्रोपजीविनीत्यर्थः ।

तथा—

भाजनं यः प्रयच्छेत सहेमरत्नभूषितम् ।
अप्सरःगतसङ्कीर्णे विमाने दिवि मोदते ॥

तथा—

राजतं यः प्रयच्छेत विप्रेभ्यो भाजनं शुभम् ।
स गन्धर्व्वपुरं प्राप्य उर्व्वश्या सह मोदते ॥

तथा—

ताम्रं यो भाजनं दद्याद्ब्राह्मणेभ्यो विशेषतः ।
स भवेद् यक्षराजस्य यक्षो बलसमन्वितः ॥
आसनं यः प्रयच्छेत्तु सम्वीतं ब्राह्मणाय वै ।
स राज्यस्थानमाप्नोति स्वर्गं प्राप्नोति विज्वरः ॥

तथा—

गृहं यस्तु प्रयच्छेत सर्व्वकामसमृद्धिमत् ।
स लोके ब्रह्मणः प्रेत्य सर्व्वकामैर्निषेव्यते ॥
वर्षकोटीः स तत्रोष्य चतस्रस्तेन कर्म्मणा ।
गृहमेधी सदा दाता भोगवांश्चैव जायते ॥
ओषधीर्यः प्रयच्छेत धान्यानि च धनानि च ।
सर्व्वकामसुसंयुक्तः सोमलोकं समश्नुते ॥
तत्र वर्षसहस्राणि सप्त स्थित्वा पुनर्नरः ।

इह लोके धनोपेतो भोगवानभिजायते ॥
आत्मानं यः प्रयच्छेत्तु सम्बीतं ब्राह्मणाय वै।
स राज्यस्थानमाप्नोति स्वर्गं प्राप्नोति विज्वरः ॥
यस्तु चैवं प्रयच्छेत निष्पन्नं फलवत्तरः।
स तु चैवं पुनर्भुक्त्वा प्राजापत्यं समश्नुते ॥
यस्तु भूमिं प्रयच्छेत ब्राह्मणाय महात्मने।
सर्व्वलोकसुखी भूत्वा विमानेन सुवर्च्चसा।
बह्वन्यब्दसहस्राणि चरते कामरूपवान् ॥
यदि मानुष्यमायाति स नरः कालपर्य्ययात्।
तस्य कामदुघा लोके मही भवति सर्व्वतः ॥

तथा—

यस्तु वस्त्रं प्रयच्छेत ब्राह्मणाय महायशाः।
स लोकं प्राप्य वैराजं वर्षकोटिं सुखं वसेत् ॥
यस्तु शय्यां प्रयच्छेत स्वास्तीर्णां नरसत्तमः।
स तु भार्य्यां प्रियां दिव्यां बह्वीं भक्तां समश्नुते ॥

तथा—

यस्तु कन्यां प्रयच्छेत ब्राह्मणाय स्वलङ्कृताम्।
स गत्वा पितृलोकं वै वर्षायुतशतं वसेत् ॥
इह चापि पुनर्जातः सर्व्वकामसमन्वितः।
भार्य्याः प्राप्नोति भक्ताश्च पूजावांश्चोपजायते ॥

तथा—

अश्वं यस्तु प्रयच्छेत हेमचित्रं सुलक्षणम्।

स तेन कर्म्मणा दिव्यो गन्धर्व्वं लोकमश्नुते ॥

तथा—

रथमश्वं गजं दासीं कन्यां गृहमथापि वा।
भूमिञ्च यः प्रयच्छेत स राजा भुवि जायते ॥
विधिना मन्त्रयुक्तेन तस्य पुण्यफलं महत्।
सर्व्वकामदुघा भूत्वा धेनुस्तस्योपतिष्ठते ॥

संवर्त्तः—

नानाविधानि द्रव्याणि धनानि विविधानि च।
आयुष्कामेन देयानि स्वर्गमक्षयमिच्छता ॥

---

## अथ सर्व्वमासोभयपक्षसाधारणपञ्चदशतिथि-द्रव्यविशेषदानानि।

विष्णुधर्म्मोत्तरे—

प्रतिपद्यथ पुष्पाणां द्वितीयायां घृतस्य च।
तृतीयायान्तु वस्त्राणां चतुर्थ्यां कनकस्य च ॥
पञ्चम्यान्तु फलानां वै षष्ठ्यां स्नानस्य मानवाः।

स्नानस्य स्नानीयतैलामलकादेः।

सप्तम्याञ्चाप्यपूपानामष्टम्याञ्च गुडस्य च ॥
कुल्माषस्य नवम्यां वै दशम्यां रजतस्य च।

कुल्माषः पश्चिमदेशे कुलत्थ इति प्रसिद्धो व्रीहिविशेष इति सागरः।

एकादश्यां सुवर्णस्य द्वादश्यां वसनस्य च ॥
त्रयोदश्यां सुगन्धानां शितायास्तदनन्तरम् ।

सुगन्धाश्चन्दनादयः । शिता शर्करा ।

दानस्तु परमान्नस्य पञ्चदश्यां महाफलम् ॥

परमान्नं पायसम् । दानं महाफलमिति सर्व्वत्रानुषङ्गो बोद्धव्यः ॥

इति महासान्धिविग्रहिकठक्कुर श्रीवीरेश्वरात्मज महासान्धिविग्रहिकठक्कुर श्रीचण्डेश्वरविरचिते कृत्यरत्नाकरे प्रकीर्णकतरङ्गः ॥

---

## अथ वारकृत्यानि ।

तत्र भविष्यपुराणे— दितिरुवाच—

ये त्वादित्यदिने ब्रह्मन् पूजयन्ति दिवाकरम् ।
स्नानदानादिना तेषां किं फलं स्याद्ब्रवीहि मे ॥

ब्रह्मोवाच ।

ये त्वादित्यदिने प्राप्ते श्राद्धं कुर्व्वन्ति मानवाः ।
सप्तजन्मानि ते प्राप्ताः सम्भवन्ति विरोगिणः ॥
नक्तं कुर्व्वन्ति ये त्वत्र मानवास्तं समाश्रिताः ।
[1]जपमानाः परं प्राप्यमादित्यहृदयं परम् ॥

---

१ A B जप्यमानाः ।

आरोग्यमिह वै प्राप्य सूर्य्यलोकं व्रजन्ति ते ।
उपवासन्तु कुर्व्वन्ति ये त्वादित्यदिने सदा ॥
जपन्ति च महाश्वेतां लभन्ते ते यथेप्सितम् ।
अहोरात्रेण नक्तेन त्रिरात्रनियमेन च ॥
जपमानो महाश्वेतामीप्सितं लभते फलम् ।
विशेषादादित्यदिने[1] जपमानो गणाधिप ।
षड़क्षरं महाश्वेतां गच्छेदैरोचनं पदम् ॥

आदित्यहृदयमन्त्रः—

घृणिः सूर्य्य आदित्यः—

ॐ महाश्वेता ॐ ह्रां ह्रीं सः इति मन्त्रः ।
षड़क्षरमन्त्रः-ॐ खखोल्काय नमः इति केचित् ।
ह्रां ह्रीं सः सूर्य्याय इत्यन्ये ।

तथा—

यो वै सूर्य्यदिने भक्त्या भानुं सम्पूज्य श्रद्धया ।
नक्तं करोति पुरुषः स यात्यमरलोकताम् ॥

इदञ्च व्रतमेकदिनसमाप्यमेव आवृत्तौ प्रमाणाभावात् ।

योऽब्दमेकं प्रकुर्व्वीत नक्तं मम दिने नरः ।
ब्रह्मचारी जितक्रोधो ममार्च्चनपरः खग ॥
[2]वत्सरान्ते च सामगान् भक्तांश्च मम वै द्विजान् ।
पूजयित्वा ततो ब्रूयात् प्रीयतां मे दिवाकरः ॥

---

१ C विशेषतश्च आदित्यम् । २ C संवत्सरान्ते च सगान् ।

एवं भक्तिसमायुक्तो मम लोकं स गच्छति ।
न च मानुष्यकं लोकमध्रुवं प्राप्नुयान्नरः[१] ॥

इत्यादित्यवारे नक्तादिव्रतानि ।

---

तथा तत्रैव ।

शुक्लपक्षस्य षष्ठ्यान्तु माघे मासि गणाधिप ।
यो वारः स भवेन्नन्दः सर्व्वपापभयापहः ॥
तत्र नक्तं स्मृतं पुण्यं घृतेन स्नपनं रवेः ।
अगस्तिकुसुमानीह भानोस्तुष्टिकराणि तु ॥
विलेपनं सुगन्धञ्च श्वेतचन्दनमुत्तमम् ।
धूपस्तु गुग्गुलुः श्रेष्ठो नैवेद्यं पूपमेव च ॥
दत्त्वा पूपञ्च विप्राय ततो भुञ्जीत वाग्यतः ॥
प्रस्थमात्रं भवेत् पूपं गोधूमजमनुत्तमम् ।
यवोद्भवं वा कुर्व्वीत सगुड़ं सर्पिषा युतम् ॥

प्रस्थमात्रमिति षोड़शपलानि ।

सहिरण्यन्तु दातव्यं ब्राह्मण सेतिहासके ।
भौमे दिव्येऽथवा देयं न्यसेद्वा पुरतो रवेः ॥

देवब्राह्मणा मगाः, तदितरब्राह्मणा भौमाः ।

दातव्यो मन्त्रतश्चायं मण्डको ग्राह्य एव च ।
भूत्वा दिव्येन वै भक्त्या आदित्यपरमस्य तु ॥
आदित्यतेजसोत्पन्नं राज्ञीकरविनिर्म्मितम् ।
श्रेयसे मम विप्र त्वं प्रतीच्छापूपमुत्तमम् ॥

---

१ C प्राप्नुते नरः ।

कामदं सुखदं धन्यं पुत्रदं धनदं तथा ।
सदा तेऽस्तु प्रतीच्छामि मण्डकं भास्करप्रियम् ॥
एतावेव महामन्त्रौ दानादाने रविप्रियौ ।
अपूपस्य गणश्रेष्ठ श्रेयसे नात्र संशयः ॥
एष नन्दविधिः प्रोक्तो नराणां श्रेयसे विभो ।
अनेन विधिना यस्तु नन्दे पूजयते रविम् ।
सर्व्वपापविनिर्म्मुक्तः सूर्य्यलोके महीयते ॥
न दारिद्र्यं न रोगस्य कुले तस्य महात्मनः ।
यस्त्वेवं पूजयेद्भानुं न क्षयः सन्ततेः सदा ॥

तस्येति शेषः ।

सूर्य्यलोकागतश्[1]चायं राजा भवति भूतले ।
बहुज्ञातिसमायुक्तः तेजसा द्विजसन्निभः ॥

द्विजसन्निभो रवितुल्यः ।

नन्दविधिः ।

---

तथा—

नक्षत्रं रोहिणी वीर यदा वारेऽस्य वै भवेत् ।
यात्यसौ सौम्यतां वीर स सौम्यः परिकीर्त्तितः ॥
स्नानं दानं जपो होमः पितृदेवाभिपूजनम् ।
अक्षयं स्यान्न सन्देहस्तस्य वारे महात्मनः ॥
नक्तं समास्थितो योऽत्र पूजयेद्भास्करं नरः ।

---

१ A B प्रायः ।

यति लोकं स देवस्य भास्करस्य महात्मनः॥
रक्तोत्पलानि तत्रैव तथा रक्तञ्च चन्दनम्।
सुगन्धश्चापि धूपोऽत्र नैवेद्यं पायसं ध्रुवम्।
ब्राह्मणाय च दातव्यं भोक्तव्यं चात्मना तथा॥
य एवं पूजयेत् सौम्ये चित्रभानुं गवां पतिम्।
स विमुक्तस्तु पापेभ्यस्त्वाष्ट्रीं कान्तिमवाप्नुयात्॥

इति सौम्यविधिः।

---

तथा तत्रैव।

पञ्चतारं भवेद्यत्र नक्षत्रं गोवृषध्वज।
वारे तु देवदेवस्य स वारः पुत्रदः स्मृतः॥

पञ्चतारं रोहिणी हस्ता च।

उपवासो भवेत्तत्र श्राद्धं कार्य्यं नराधिप।
प्राशनञ्चापि पिण्डस्य मध्यमस्य प्रकीर्त्तितम्॥
तत्रेति कथितो वीर वारव्रतविधौ तव।
सोपवासस्तु वै भक्त्या पूजयेत्तत्र गोपतिम्॥
धूपमाल्योपहारैश्च दिव्यगन्धसमन्वितैः।
एवं पूज्य विवस्वन्तं तस्यैव पुरतो निशि॥
भूमौ सुप्यात्ततो वीर जपन् श्वेतां महामते।
प्रभाते तु ततः स्नानं कृत्वा दत्त्वार्घ्यमुत्तमम्॥
रक्तचन्दनसम्मिश्रैः करवीरैर्गणाधिप।
सम्पूज्य ग्रहभूतेशमंशुमन्तं त्रिलोचनम्॥

वारन्तु पूजयित्वा तु ततः श्राद्धं प्रकल्पयेत् ।
[१][पञ्चभिर्ब्राह्मणैर्देव दिव्यैर्भौमैश्च सुव्रत ॥
ब्राह्मणौ मगसंज्ञौ तु तत्र दिव्यौ प्रकल्पयेत् ।]
त्रयस्तु ब्राह्मणा भौमाः प्रकल्प्यान्धकसूदनम्(?) ॥
कुर्य्यादेवं ततः श्राद्धं पार्व्वणं भास्करप्रियम् ।
श्राद्धे त्वथ समाप्ते तु प्राश्नात् पिण्डन्तु मध्यमम् ॥
पुरतो देवदेवस्य स्थित्वा मन्त्रेण सुव्रतः ।
स एष पिण्डो देवेश योऽभीष्टस्तव सर्व्वदा ॥
अश्नामि पश्यतस्तुभ्यं येन मे सन्ततिर्भवेत् ।
प्रसादात्तव देवेश इति मे भावितं मनः ॥
इति सम्पूजितो ह्यत्र भास्करः पुत्रदो भवेत् ।
अतोऽयं पुत्रदो वारो देवस्य परिकीर्त्तितः ॥

अत्र भास्करस्य दिने उपवासस्तदग्रिमदिने श्राद्धं मध्यमपिण्डप्राशनञ्च ।

इति पुत्रदविधिः ॥

---

दक्षिणे त्वयने यः स्यात् स जयः परिकीर्त्तितः ।
अत्रोपवासो नक्तञ्च स्नानं दानं जपस्तथा ॥
भवेच्छतगुणं देव भास्करप्रीतये कृतम् ।
तस्मान्नक्तादि कर्त्तव्यं स स्याच्छतगुणो विधिः ॥

इति जयविधिः ।

---

१ [ ] चिह्नितश्लोकः C पुस्तके अधिकः ।

जयन्तो द्वितयो ज्ञेयो अयने गणनायक।
वारो देवस्य यः स्याद्वै तत्र पूज्यो दिवाकरः॥
पूजितस्तत्र देवेशः सहस्रगुणितं फलम्।
ददाति देवशार्दूल स्नानदानादिकर्म्मणि॥
घृतेन पयसा यत्र स्नानमिक्षुरसेन च।
विलेपनं कुङ्कुमस्य प्रशस्तं भास्करप्रियम्॥
धूपक्रिया गुग्गुलुना नैवेद्ये मोदकाः प्रियाः।
इत्थं सम्पूज्य देवेशं कुर्य्याद्धोमं ततस्तिलैः॥
ब्राह्मणान् भोजयेत् पश्चान्मोदकांस्तिलशष्कुलीः।
इत्थं यः पूजयेद्भानुं मित्रवारे गणाधिप॥
सहस्रगुणितं तस्य फलं देवो ददाति वै।
स्नानदानव्रतादीनामुपवासस्य वै विभो॥

इति जयन्तविधिः।

---

शुक्लपक्षस्य सप्तम्यां प्राजापत्यर्क्षसंयुतः।
स ज्ञेयो विजयो नाम सर्व्वपापभयापहः॥

प्राजापत्यर्क्षं रोहिणी।

तत्र कोटिगुणं सर्व्वं फलं पुण्यस्य कर्म्मणः।
ददाति भगवान् देवः पूजितः स गणाधिपः॥
स्नानं दानं जपो होमः पितृदेवाभिपूजनम्।
नक्तं वाप्युपवासस्य सम्पूज्योऽत्र दिवाकरः।
सप्तलोकाधिपत्यञ्च प्राप्यते सप्तसप्तितः॥

इति विजयविधिः॥

रविसंक्रमणे यः स्याद्रवेर्वारो गणाधिप ।
स ज्ञेयो हृदयं नाम आदित्यहृदयप्रियः ॥
तत्र नक्तं समाश्रित्य देवं सम्पूज्य यत्नतः ।
गत्वा चायतनं भानोरादित्याभिमुखस्थितः ॥
जपेदादित्यहृदयं संख्ययाऽष्टशतं बुधः ।
अथवास्तमयं यावत् भास्करं चिन्तयेद्धृदि ॥
गृहमेत्य ततो विप्रान् भोजयेच्छक्तितः शिव ।
भुक्त्वा तु पायसञ्चैव ततो भूमौ स्वपेद्बुधः ॥
योऽत्र सम्पूजयेद्भानुं भक्त्या श्रद्धासमन्वितः ।
स कामान् लभते सर्व्वान् भास्कराद्धृदयेप्सितान् ॥

इति हृदयविधिः ॥

---

पूष्णो वारे यदा ऋक्षं भवेद्वै भगदैवतम् ।
स वारो रोगहः प्रोक्तः सर्व्वरोगभयापहः ॥
भगदैवतं पूर्व्वफल्गुनी । उत्तरफल्गुनीत्येके ।
योऽत्र पूजयते भानुं शुभगन्धविलेपनैः ।
सर्व्वरोगविनिर्म्मुक्तो याति संज्ञापतेर्गृहम् ॥
संज्ञापतेः सूर्य्यस्य ।
अर्कपत्रपुटे कृत्वा पुष्पाण्यर्कस्य सुव्रत ।
देवस्य पुरतो रात्रौ भक्त्या सम्पूजयेद्बुधः ॥
पूजयित्वार्कपुष्पैस्तु अर्कमर्कप्रियैः सदा ।
प्राशयित्वार्कपुष्पन्तु दत्त्वा विप्राय दक्षिणाम् ॥

भुक्त्वा तु पायसं वीर रात्रौ स्वपिति भूतले ।
अनेन विधिना यस्तु पूजयेद्‌च वै द्विजम् ॥
स मुक्तः सर्व्वरोगैस्तु गच्छेद्दिनकरालयम् ।
तस्मादपि व्रजेल्लोकं ऊङ्कारवरहेतिनः ॥
ऊङ्कारवरहेतिनो ब्रह्मणः ।

इति रोगहाविधिः ॥

---

यस्यादित्यग्रहे स्याद्वै वारो देवस्य सुव्रत ।
स खखोल्कप्रियो लोके ख्यातो गोश्रुतिभूषण ॥
यस्तु पूजयते तस्मिन् पतङ्गं पन्नगप्रिय ।
गन्धपुष्पादिधूपैस्तु स्तोत्रैर्नानाविधैस्तथा ॥
सोपवासो गणश्रेष्ठ आदित्यग्रहणे शुचिः ।
अपमानो महाश्वेतां खखोल्कमथवापि वा ॥
पूजयेज्जगतामीशं तमोनाशनमाशुगम् ।
पूजयित्वा दिनकरं महाश्वेतां ततोऽर्च्चयेत् ॥
पूजयित्वा महाश्वेतां रविं देवं ततोऽर्च्चयेत् ।
महाश्वेतां प्रतिष्ठाप्य गन्धपुष्पैः सुपूजिताम् ॥
तस्या एव पुरः कुर्य्यादग्निकार्य्यं समाहितः ।
पूजयित्वा महाश्वेतां खखोल्कञ्च ग्रहाधिपम् ॥
ब्राह्मणान् वाचयित्वा च ततो भुञ्जीत वाग्यतः ।
आदित्यग्रहयुक्तेऽस्मिन् वारे त्रिपुरसूदन ॥
यत्कर्म्म क्रियते पुण्यं तत्सर्व्वं शुभदं भवेत् ।

स्नानदानजपादीनां कर्म्मणां गोवृषध्वज ॥
अनन्तं हि फलं तेषां भवत्यस्मिन्न संशयः ।
कृतानान्तु गणश्रेष्ठ भास्करस्य वरो यथा ॥
तस्मात् सूर्य्यदिने कार्य्यं पुण्यकर्म्म विचक्षणैः ।
एकभक्तञ्च नक्तञ्च उपवासमथापि वा ॥
ये त्वादित्यदिने कुर्य्युस्ते यान्ति परमं पदम् ।
धन्यं पुण्यं यशस्यञ्च पुत्रीयं कामदं तथा ॥
तस्मिन् दानमपूपस्य गोदानेन समं मतम् ।
द्वादशैते महाबाहो वारा भानोर्महात्मनः ॥
तुष्टिदाः कथितास्तुभ्यं सर्व्वपापभयापहाः ।
कृत्वैकमेषां विधिवद्वार वृषभवाहन ॥
ततो याति परं लोकं वृषकेतोर्महात्मनः ।

[1][भद्रकामदादित्याभिमुखा वारा भाद्रमार्गमाघेषु कथिताः ।
इति भविष्यपुराणीय नन्दादिरविवारविधिः ॥]

---

## अथ सप्तवारव्रतम्[2] ।

तच पद्मपुराणे। पुलस्त्य उवाच ।

आदित्यवारं हस्तेन सर्व्वमादाय भक्तितः ।
नक्तेन क्षपयेत्तावत् यावत् सप्ताभिसंख्यया ॥
ततस्तु सप्तमे पूर्णे कुर्य्याद्ब्राह्मणभोजनम् ।
आदित्यबिम्बं सौवर्णं कृत्वा यत्नेन मानवः ॥

---

१ D [ ] चिह्नितांशः पतितः। २ C सप्तराचव्रतम् ।

सितवस्त्रयुगच्छन्नां कञ्चिकां पादुके तथा।
उपानहौ च दातव्ये स्थापयेत्ताम्रभाजने॥
घृतेन स्नपनं कृत्वा सम्पूर्णाङ्गं द्विजातये।
दीपं दद्याच्च विदुषे ब्राह्मणाय विशेषतः॥
एवं कृत्वा फलन्तस्य भवेदारोग्यमुत्तमम्।
द्रव्यसम्पत्सुतप्राप्तिरिति पौराणिकी क्रिया॥
अविसम्वादिनी चेयं शान्तिपुष्टिप्रदा नृणाम्।
[1]तदच्चिचासु संगृह्य सोमवारं विचक्षणः॥
नक्तेन क्षपयेदष्टौ सोमवारान् प्रयत्नतः।
प्रत्येकं ब्राह्मणान् भोज्य यथाशक्त्या विचक्षणः॥
नवमे तु ततः पूर्णे कुर्य्याद्ब्राह्मणभोजनम्।
श्वेतयुग्मं प्रदातव्यं ततः सोमन्तु दापयेत्॥

श्वेतयुग्मं श्वेतवस्त्रयुग्मम्।

कांस्यभाजनसंस्थन्तु चीरसम्पूरितन्ततः॥
तद्वच्छत्रं पादुके च तथोपानत्समन्वितम्।
सम्पूर्णाङ्गाय दातव्यं ब्राह्मणाय विशेषतः॥
स्वात्यामचारकं गृह्य क्षपयेन्नक्तभोजनम्।
अष्टावेतानि यावच्च ततो ब्राह्मणभोजनम्॥
अङ्गारकन्तु सौवर्णं स्थापितं ताम्रभाजने।
दापयेद्ब्राह्मणाचार्य्ये सम्पूर्णाङ्गाय चैव हि॥

---

1 C तद्धि चित्रासु।

नक्षत्रानुक्रमेणैव गृह्य वारांस्तु सप्त वै ।
उपोष्यैकोत्तरं पश्चात् सौवर्णं दापयेत् सुधीः ॥
अग्निकार्य्यञ्च कुर्व्वीत यथादृष्टविधानतः ।

उपोष्यैकोत्तरमिति एकमन्तिमसुपोष्येत्यन्वयः ।

एवं कृत्वा भवेद् यद्वै तन्निबोध नराधिप ॥

सर्व्वे ग्रहाः सौम्यरूपा भवन्ति वामास्तुष्टिमायान्ति देवताः ।
तुष्यन्ति नाम पितरस्तर्पिताः स्युर्दुःस्वप्नश्च श्रवणा[1]च्चाशमेति ॥

यदि सोमो रविसुतो भास्करो राहुणा सह ।
केतुश्च मूर्द्धि तिष्ठन्ति रौद्राः पीडाकरा ग्रहाः ॥
अनेन कृतमात्रेण सर्व्वे सौम्या भवन्ति हि ॥
य एवं कुरुते राजन् सदा भक्तिसमन्वितः ।
तस्य सानुग्रहाः सर्व्वे यच्छन्ति विजयं नृप ॥
शनैश्चरं राहुकेतू लोहपात्रे तु विन्यसेत् ।
[2]लोहानाराधयेद्धीमान् ब्राह्मणेभ्यश्च दापयेत् ॥
कृष्णवस्त्रयुगं देयमेतेषां प्रीणनाय वै ।
सौवर्णकाश्च दातव्याः शान्तिश्रीविजयेप्सुभिः ॥
व्रतान्ते सर्व्वे एते हि ग्रहाः सौवर्णका नृप ।
दातव्याः शान्तिमिच्छद्भिर्व्रतान्ते द्विजभोजनम् ॥
यथाशक्त्या दक्षिणान्तु ग्रहाणां प्रीतये तथा ।
अल्पायासेन राजेन्द्र सर्व्वान् कामानवाप्नुयात् ॥

इति सप्तवारव्रतानि ॥

---

१ C दुःस्वप्नश्रवणं विनाशमेति ।   २ D लोहानाधारयेत् ।

मत्स्यपुराणे—

कृष्णपत्नीं प्रति दाल्भ्य उवाच—

यद् यदन्यद्व्रतं सम्यगुपदेक्ष्याम्यहन्ततः ।
अविचारेण सर्व्वाभिरनुष्ठेयन्तु तत्पुनः ॥
संसारोत्तरणायालं यत्तु वेदविदो विदुः
यदा सूर्य्यदिने हस्तः पुष्यो वाथ पुनर्वसुः ॥
भवेत् सर्व्वौषधिस्नानं सम्यङ्नारी समाचरेत् ।
तदा पञ्चशरस्यापि सन्निधानत्वमिष्यते ॥
अर्च्चयेत् पुण्डरीकाक्षमनङ्गस्यानुकीर्त्तनैः ।
कामाय पादौ सम्पूज्य जङ्घे वै मोहकारिणे ॥
मेढ्रं कन्दर्पनिधये कटिं प्रीतिमते नमः ।
नाभिं सौख्यसमुद्राय रामाय च तथोदरम् ॥
हृदयं हृदयेशाय स्तनावाह्लादकारिणे ।
वामाङ्गं पुष्पचापाय पुष्पवाणाय दक्षिणम् ॥
[1]नमोऽनन्ताय वै मौलिं विलोलायेति मूर्द्धजान् ।
सर्व्वात्मने शिरस्तद्वत् देवदेवस्य पूजयेत् ॥
नमः शिवाय शान्ताय पाशाङ्कुशधराय च ।
गदिने पीतवस्त्राय शङ्खचक्रधराय च ॥
नमो नारायणायेति कामदेवात्मने नमः ।
नमः शान्त्यै नमः प्रीत्यै नमो रत्यै नमः श्रियै ॥

---

1 D मानसायेति ।

नमः पुष्ट्यै नमस्तुष्ट्यै नमः सर्व्वार्थसम्पदे ।
एवं सम्पूज्य गोविन्दमनङ्गात्मानमीश्वरम् ॥
गन्धैर्माल्यैस्तथा धूपैर्नैवेद्येन च भूरिणा[१] ।
अत आहूय वेदज्ञं ब्राह्मणं वेदपारगम् ॥
अव्यङ्गावयवं पूज्य गन्धपुष्पार्चनादिभिः ।
शालेयतण्डुलप्रस्थं घृतपात्रेण संयुतम् ॥
तस्मै विप्राय सा दद्यान्माधवः प्रीयतामिति ।
दृष्टाहारन्तु कुर्व्वीत तमेव द्विजसत्तमम् ॥
रत्यर्थं कामदेवोऽयमिति चित्तेऽवधार्य्य तम् ।
यद्यदिच्छति विप्रेन्द्र तत्तत्कुर्य्याद्विलासिनी ॥
सर्व्वभावेन चात्मानमर्पयेत् स्मितभाषिणी ।
एवमादित्यवारेण व्रतमेतत् समाचरेत् ॥
तण्डुलप्रस्थदानञ्च यावन्मासास्त्रयोदश ।
ततस्त्रयोदशे मासि सम्प्राप्ते तस्य भाविनी ॥
विप्रस्योपस्करैर्युक्तां शय्यां दद्याद्विलक्षणाम् ।
सोपधानकविश्रामां आस्तीर्णास्तरणां शुभाम् ॥
दीपकोपानहच्छत्रपादुकासनसंयुताम् ।
सपत्नीकमलङ्कृत्य हेमसूत्राङ्गुलीयकैः ॥
सूक्ष्मवस्त्रैः सकटकैः धूपमाल्यानुलेपनैः ।
कामदेवं सपत्नीकं गुड़कुम्भोपरिस्थितम् ॥

---

१ C कामिनी ।

ताम्रपात्रासनगतं हेमपात्रपटान्वितम्।
स कांस्यभाजनोपेतमिक्षुदण्डसमन्वितम्॥
दद्यादनेन मन्त्रेण तथैव गां पयस्विनीम्।
यथान्तरं न पश्यामि काम-केशवयोः सदा॥
तथैव सर्व्वकामाप्तिरस्तु विष्णो सदा मम।
यथा न कामिनी देहात् प्रयाति तव केशव॥
तथा ममापि देवेश शरीरं स्वीकुरु[1] प्रभो।
तथा च काञ्चनं देवं प्रतिगृह्य द्विजोत्तमः॥
कोऽदात् कामोऽदादिति वैदिकं मन्त्रमुच्चरेत्।
ततः प्रदक्षिणीकृत्य विसर्ज्य द्विजपुङ्गवम्॥
शय्यासनादिकं सर्व्वं ब्राह्मणस्य गृहे नयेत्।
ततः प्रभृति योऽन्योपि रत्यर्थं गृहमागतः॥
सामान्यतः सूर्य्यवारे स सम्पूज्यो भवेत् सदा।
एवं त्रयोदश यावन्मासमेकं द्विजोत्तमम्॥
तर्पयेत्तु यथाकालं प्रोषितोऽन्यं समाहरेत्।
तदनुज्ञया रूपवन्तं यावदस्यागमो भवेत्॥
आत्मनोपि यथाविघ्नं[2] हतकं गर्भसूतकम्।
दैवञ्च मानुषं वा स्यादुपरागेण वा ततः॥
[3]आचारानष्टपञ्चाशद्यथाशक्त्या समाचरेत्।
सुधर्म्मोऽयं मतो भव्यो वेश्यानामिह सर्व्वदा॥

---

१ A D स्वीकुरु। २ मूलपुस्तके गर्भभूतिकरं प्रियं।
३ D स चारान्।

पुरुहूतेन यत् प्रोक्तं दानवीषु पुरा मया ।
तदिदं साम्प्रतं सर्व्वं भवतीष्वपि युज्यते ॥
सर्व्वपापप्रशमनमनन्तफलदायकम् ।
कल्याणिनीनां कथितं तत्कुरुध्व वराननाः ॥
करोति याऽशेषमखण्डमेतत्
कल्याणिनी माधवलोकसंस्था ।
सा पूजिता देवगणैरशेषै-
रानन्दकृत्स्थानमुपैति विष्णोः ॥
इति वेश्यादित्यवारानङ्गदानव्रतम् ॥

तथा नन्दिकेश्वर उवाच—

यत्तु विश्वात्मनो धाम परं ब्रह्म सनातनम् ।
सूर्य्याग्निचन्द्ररूपेण तत्त्रिधा जगति स्थितम् ॥
तस्मादादित्यवारेण सदा नक्ताशनो भवेत् ।
यदा हस्तेन संयुक्तमादित्यस्य च वासरम् ॥
तदा शनिदिने कुर्य्यादेकभक्तं विमत्सरः ।
नक्तमादित्यवारेण भोजयित्वा द्विजोत्तमान् ॥
पद्मैर्द्वादशभिर्युक्तं रक्तचन्दनपङ्कजम् ।
विलिख्य विन्यसेत् सूर्य्यं नमस्कारेण पूर्व्वतः ॥
दिवाकरन्तथाग्नेये विवस्वन्तमतःपरम् ।
भगञ्च नैर्ऋते तद्वद्वरुणं पश्चिमे दले ॥
महेन्द्रमनिले तद्वदादित्यञ्च तथोत्तरे ।
शान्तमीशानभागे तु नमस्कारेण विन्यसेत् ॥

कर्णिकापूर्व्वपत्रे तु सूर्य्यस्य तुरगान् न्यसेत्।
दक्षिणे यमनामानं[१] मार्त्तण्डं पश्चिमे दले॥
उत्तरे तु रविं देवं कर्णिकायान्तु भास्करम्।
रक्तपुष्पोदकेनार्घं सतिलारुणचन्दनम॥
तस्मिन् न्यसेत्तदा दद्यादिमं मन्त्रमुदीरयेत्।
कालात्मा सर्व्वभूतात्मा वेदात्मा विश्वतोमुखः॥
यस्मादग्नीन्दु[२]रूपस्त्वमतः पाहि प्रभाकर।
अग्निमीड़े नमस्तुभ्यं इषेत्वोर्ज्जे च भास्कर॥
अग्न आयाहि वरद नमस्ते ज्योतिषाम्पते।
अर्घं दत्त्वा विसृज्याथ निशि तैलविवर्जितम्॥
भुञ्जीत वत्सरान्ते च काञ्चनं कमलोत्तमम्।
पुरुषञ्च यथाशक्त्या कारयेद्द्विभुजन्तथा॥

सुवर्णशृङ्गीं कपिलां यथार्घ्यां
रूप्यैः खुरैः कांस्यदोहां सवस्त्राम्।
पूर्णं गुड़स्योपरि ताम्रपात्रे
विधाय पद्मं पुरुषञ्च दद्यात्॥
सम्पूज्य रक्ताम्बरमाल्यधूपै
र्द्विजञ्च रक्तैरथवा पिशङ्गैः।
अव्यङ्गरूपाय जितेन्द्रियाय
कुटुम्बिने देयमनुद्धताय॥

---

१ मूलपुस्तके अर्य्यमनामानम्।
२ C यस्मादग्नीन्द्ररूपस्त्वम्।

नमो नमः पापविनाशनाय
विश्वात्मने सप्ततुरङ्गमाय ।
सामर्ग्यजुर्धामनिधे विधात्रे
भवाब्धिपोताय जगत्सवित्रे ॥
इत्यनेन विधिना समाचरे-
दब्दमेकमिह यस्तु मानवः ।
सोऽधिरोहति विनष्टकल्मषः
सूर्य्यधाम धूतचामरावलिः ॥
कर्म्मसंचयमवाप्य भूपतिः
शोकदुःखभयरोगवर्ज्जितः ।
द्वीपसप्तकपतिः पुनः पुन
र्धर्म्ममूर्त्तिरमितौजसा युतः ॥
या च भर्त्तृगुरुदेवतापरा
देवमूर्त्तिं दिननक्तमाचरेत् ।
साऽपि लोकममरेशपूजिता
याति नारद रवेर्न संशयः ॥

इत्यादित्यवारनक्तव्रतानि ॥

---

१ B वेदमूर्त्ति— ।

## अथ वारदानम्।

यमः—

आदित्यवारे विप्राय सहिरण्यं सदैव तु।

यः प्रयच्छत्यपापस्तु तस्य तुष्यति वै यमः॥

विष्णुधर्म्मोत्तरे—

व्याधिनाशकदानानुवृत्तौ।

शरीरागदनाशाय सततं सूर्य्यवासरे।

गुड़ाज्यलवणोपेतं सहिरण्यं द्विजातये॥

दद्यादपूपं धर्म्मज्ञ प्रीणयेच्च दिवाकरम्।

आरोग्यमेतेनाप्नोति कामं वा मनसेप्सितम्॥

लवणाज्यगुड़ोपेतमपूपं सूर्य्यवासरे।

सहिरण्यं नरो दत्त्वा न रोगैस्त्वभिभूयते॥

तथा—

एवम्विधञ्चेन्दुदिने दत्त्वा सौभाग्यमाप्नुयात्।

एवंविधं पूर्व्वोक्तमपूपम्॥

तथा—

सर्व्वतो दिवसे चान्द्रे स्नानमभ्यङ्गपूर्व्वकम्।

यः प्रयच्छति विप्राय सोऽपि रोगैर्विमुच्यते॥

तथा—

काष्ठदानाद् भौमदिने शत्रुनाशमवाप्नुयात्।

[1][बौधे क्रीड़नकानाञ्च दानं बालेषु शस्यते ।

क्रीड़नकानां बालक्रीड़नोचितकन्दुकादीनाम्, अत्र बटुभ्यो दानम्।

तथा—

अभ्यङ्गं शौरिदिवसे दत्वा जीवितमाप्नुयात्] ।

अभ्यङ्गं अभ्यङ्गार्थं तैलघृतादि ।

शनैश्चरदिने दत्वा तैलं विप्राय शक्तितः ।

नित्यमेवं महाभाग रोगनाशमवाप्नुयात् ॥

इति महासान्धिविग्रहिकठक्कुरश्रीवीरेश्वरात्मजमहासान्धि-
विग्रहिकठक्कुरश्रीचण्डेश्वरविरचिते कृत्यरत्नाकरे
वारव्रतादितरङ्गः ॥

---

१ A B [ ] चिह्नितांशः पतितः ।

## अथ संक्रान्तिनिर्णयः।

तत्र देवीपुराणे—

द्वादशैव समाख्याताः समाः संक्रान्तिकल्पनाः।
सप्तधा सा तु बोद्धव्या एकैकैव यथा शृणु॥

मलमासाधिक्येपि संक्रान्तयो नाधिकाः। किन्तु द्वादशैवेत्येवकारेण दर्शितम्। समाः संक्रान्तित्वेन तुल्यफलाः।

मन्दा मन्दाकिनी ध्वांक्षी घोरा चैव महोदरी।
राक्षसी मिश्रिता चैव संक्रान्तिः सप्तधा नृप॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा।
क्षिप्रे ध्वांक्षीं विजानीयादुग्रे घोरा प्रकीर्त्तिता॥

ध्रुवाणि स्थिराणि त्रीण्युत्तराणि रोहिणी च। मृदूनि चित्रानुराधा रेवती मृगशीर्षाणि। क्षिप्रा लघवः, हस्ताऽश्विनी पुष्याः। उग्राः पूर्व्वात्रयं भरणी मघा च।

चरैर्महोदरी ज्ञेया क्रूरे स्तैक्ष्णैस्तु राक्षसी।
मिश्रिता चेह विज्ञेया[1] मिश्रितर्क्षैस्तु संक्रमे॥

चराः पुनर्वसु-श्रवणा-धनिष्ठा-स्वाती-शतभिषाः। क्रूरास्तिग्मास्ते च मूलाज्येष्ठाश्लेषार्द्राः। मिश्रितर्क्षं कृत्तिका विशाखा च।

त्रिचतुः पञ्चसप्ताष्ट नव द्वादश एव च।
क्रमेण घटिका ज्ञेतास्तत्पुण्यं पारमार्थिकम्॥

क्रमेणेति मन्दादिसप्तसंक्रान्तिषु यथासंख्यं त्रिचतुःपञ्चादिनाद्य

---

१ C विख्याता।

सूक्ष्मसंक्रान्तिकालीन-वसोर्धाराद्यनुष्ठानजन्यं यत्पुण्यं तद्धेतवे इत्यर्थः।
वसोर्धारा तु देवीपुराण एवोक्ता।

अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः।
सान्निध्यन्तु भवेत्तत्र ग्रहाणां संक्रमे रवेः॥
व्यवहारो भवेल्लोके चन्द्रसूर्य्योपलक्षितः[१]।
काले विकलते सर्व्वं ब्रह्माद्यं सचराचरम्॥
पुण्यपापविभागेन कामं[२] देवी प्रयच्छति।
एकधापि कृतं तस्मिन् कोटि-कोटिगुणं भवेत्॥
धर्म्मादिवर्द्धते ह्यायू राज्यं पुत्रसुखादयः।
अधर्म्माद्व्याधिशोकादि विषुवायनसन्निधौ॥
विषुवेषु च यज्जप्तं दत्तं भवति चाक्षयम्।
एवं विष्णुपदे चैव षडशीतिमुखेषु च॥

घटिका एव पुण्यहेतुत्वात् पुण्या भोगो भोग्यस्तेनातीताना-गतरूप रविभोग्यपञ्चदशनाड्यः द्वादशसंक्रान्ति-साधारणपुण्यवेला षोडशादिव्यवच्छेदेन तात्पर्य्यम्।

शातातपः—

अर्व्वाक् षोडश विज्ञेया नाड्यः पश्चाच्च षोड़श।
कालः पुण्योऽर्कसंक्रान्तौ विद्वद्भिः परिकीर्त्तितः॥

इत्युभयतः षोड़शनाडीनां पुण्यत्वमाह।
तथा जावालोऽपि—

संक्रान्तेः पुण्यकालस्तु षोड़शोभयतः कलाः। इत्याह।

---

१ B—लक्षिते। २ B फलम्।

एतद्दर्शनाच्च देवीपुराणेऽपि पञ्चदशनाडीभोगोऽप्युभयत एव बोद्धव्यः । विकल्पते स्वभावाच्च्यवते । देवी दुर्गा ।

तथा च संक्रान्त्युपक्रम एव देवीपुराणम् ।

[1]समाऽयनर्त्तु-मास-पक्षाहादि क्रमेण तु ।
स्थूलसूक्ष्मविभागेन देवी सर्व्वगता विभो ॥

विषुवे तुलागमने मेषगमने चायने मकरगमने कर्कटागमने च तत्सन्निधौ ।

विष्णुपदीषडशीतिस्वरूपमुक्तं ज्योतिःशास्त्रे यथा—

धनुर्मिथुनकन्यासु मीने च षडशीतयः ।
वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी स्मृता ॥

पुनर्देवीपुराणम्—

[2]अयनेषु विकल्पोऽयं तन्मे निगदतः शृणु ।
यावद्विंशकला भुक्ता तत्पुण्यन्तूत्तरायणे ॥
निरंशे भास्करे दृष्टे दिनान्ते दक्षिणायने ।

अयने विंशतिदण्ड पुण्यत्वमुत्तरायणे । दक्षिणायने तु दिनान्तपर्य्यन्तं संक्रान्तौ पुण्यमित्युक्तम् ।

तच्च—

[3]षडशीतिमुखे चैव वृत्ते च विषुवद्वये ।
भविष्यत्ययने पुण्यमतीते चोत्तरायणे ॥

इति वचनपर्य्यालोचनया उत्तरायणे संक्रान्त्यनन्तरं दक्षिणायने

१ B समायनर्त्तुमासः पक्षोऽहश्च क्रमेण तु ॥
२ A C अयने विषुवे कल्पः ।
३ C पुस्तके वचनमिदं नास्ति ।

संक्रान्तिपूर्व्वसमयो नेतव्यः। अत उत्तरायण दक्षिणायन षड़शीति मुखानां संक्रान्तीनामुभयवेला पुण्यनिषेधस्वरसात् रात्रिसंक्रमणेऽनाकाङ्क्षितत्वाच्च षोडशोभयतः कला इति दिनविष्णुपदीमात्रपरम्। एवं पञ्चदशनाड़ीपुण्यातिशयोऽपि तथा। तदेवं दिवासंक्रान्तिषु सर्व्वासु व्यवस्था उक्ता।

रात्रिसंक्रमणे देवीपुराणम्।

मानार्द्धं भास्करे पुण्यमपूर्णे शर्व्वरीदले।
सम्पूर्णे तूभयोर्[1]देयमतिरेके परेऽहनि॥

मानार्द्धं दिवार्द्धं भास्करे निरंशके देयम् योज्यं दलेऽर्द्धं अतिरेके अर्द्धरात्रातिरेके।

तथाचायमर्थः— अर्द्धरात्राभ्यन्तरसंक्रान्तौ पूर्व्वदिनार्द्धं पुण्यं अर्द्धरात्रोपरि संक्रमणे तूत्तरदिनार्द्धं सम्पूर्णार्द्धरात्रसंक्रमणे पूर्व्वापरदिनार्द्धम्॥ एतच्च तिथिपार्थक्ये।

यदि तु पूर्व्वदिने संक्रमणवेलायां चैकैव तिथिर्भवति तथा सम्पूर्णार्द्धसंक्रमणेऽपि पूर्व्वदिनार्द्धमेव पुण्यम्।

आदौ पुण्यं विजानीयाद् यद्यभिन्ना तिथिर्भवेत्।

इति वचनात्।

नन्वेवं रात्रिसंक्रमणे दिवैव पुण्यत्वकथनात्।

राहुदर्शन-संक्रान्ति-विवाहात्ययवृद्धिषु।
स्नानदानादिकं कुर्य्यात् निशि काम्यव्रतेषु च॥

इति देवलवचनं रात्रौ संक्रान्तिकृत्यबोधकमनर्थकमापद्यत।

---

१ A B देयम्।

न रात्रिसन्निहितदिनभागसंक्रान्तौ षोड़शकलादिरूपविहितसमयेन रात्रेरपि [1]व्यवस्थापनात्तद्विषयत्वेनोपपत्तेः। अत्र निशीति पदं निषिद्ध रात्रसौरूपदिनवेलासहितरात्रिपरम्। संक्रान्त्यवच्छिन्नत्वेन तादृग्वेलाया अपि पुण्यत्वस्थैर्य्यात्।

शातातपः—

संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि॥

तथा—

अयनादौ सदा देयं द्रव्यमिष्टं गृहेषु यत्।
षड़शीतिमुखे चैव विमोचे चन्द्रसूर्य्ययोः॥

तथा—

रविसंक्रमणे पुण्ये न स्नायाद्यस्तु मानवः।
सप्तजन्मन्यसौ रोगी दरिद्रश्चाभिजायते॥

तथा देवीपुराणे—

ध्वांक्षी वैश्येषु विज्ञेया घोरा शूद्रे सुखप्रदा।
महोदरी च चौराणां शौण्डिकानां जयावहा॥
चाण्डाल पुक्कसानाञ्च ये चान्ये क्रूरकर्म्मिणः।
सर्व्वेषां कारुकाराणां मिश्रिता भूतिवर्द्धिनी॥
नृपाः पीद्यन्ति पूर्व्वाह्ने मध्याह्ने च द्विजोत्तमाः।
अपराह्ने तथा वैश्याः शूद्राश्चास्तमये रवौ॥
पिशाचाश्च प्रदोषे तु अर्द्धरात्रे तु राक्षसाः।

---

१ C व्यापनात्।

अर्द्धरात्रे व्यतीते तु पीड्यन्ते नटनर्त्तकाः ॥
उषःकाले तु संक्रान्तौ हस्तिगोस्वामिनो जनान् ।
हन्ति प्रव्रजितान् सर्व्वान् सन्ध्याकाले न संशयः ॥
एतत् तत्स्थूलभागस्तु भुक्तिकामस्य कीर्त्तितः ।
परमार्थेन यत्संख्या कथयामि नृपोत्तम ॥
स्वस्थे नरे सुखासीने यावत् स्पन्दति लोचनम् ।
तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्त्तितः ॥
तत्पराच्छतमो भागस्त्रुटिरित्यभिधीयते ।
त्रुटेः सहस्रभागस्तु यः कालो रविसंक्रमे ।
तत्काले तु द्रवीभूतं त्रैलोक्यं सचराचरम् ॥
व्यतीपाते तु चैवं स्यात् भवेत्पुण्यमतोऽधिकम् ।
अत्र ब्रह्मापि मन्दिग्धमुवाच सुरसत्तम ॥
दानाध्ययनजप्यादि विशिष्टं वह्निहोमतः ।
वसोर्धारासु लभ्येत अन्यथा न कथञ्चन ॥

अत्र देवेश्वरधर्म्माधिकरणिकाः—

अर्द्धरात्रादर्व्वागूर्द्धञ्च रविसंक्रान्तौ पूर्व्वोत्तरदिनयोरुत्तर-पूर्व्वार्द्धं अर्द्धरात्रसंक्रान्तौ भिन्नतिथावुभयमर्द्धं यदि त्वर्द्धरात्र-पर्य्यन्तमेकैव तिथिस्तदा पूर्व्वदिनोत्तरार्द्धं पुण्यं भवतीति द्वादश-स्वपि रात्रिसंक्रान्तिषु व्यवस्था । तदच्च सन्ध्यासंक्रान्तिष्वपि ।

दिनसंक्रान्तिषु लग्नप्राप्तविशेषविहितदिनभागासु भविष्यत्वादि-विधिमुपजीव्य भागः[१] पुण्यः, प्राप्तविशेषविहितदिनभागासु विषुव-

१ C रात्रि भागः ।

इयषड़शीतिमुखोत्तरायणसंक्रान्तिषु सर्व्व एवोत्तरदिनभागो वृत्तातीतादिपदेभ्यः। तस्मात्तस्यैवावच्छेदकत्वप्राप्तेः।

दक्षिणायने तु कर्म्मयोग्यपूर्व्वदिनभागप्राप्तौ स एव भविष्यत्ययने पुण्यमिति वचनात् पूर्व्वभागस्यैव पुण्यत्वप्राप्तेः।

तदप्राप्तौ तु दिनान्तपर्य्यन्तः कालः पुण्यः। निरंशे भास्करे दृष्ट इतिवचनात्।

अत्र स्मृतिमहार्णवप्रकाशकृता—

संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः।

इति जावालवाक्यम्—

अर्व्वाक् षोड़श विज्ञेया नाड्यः पश्चाच्च षोड़श।

कालः पुण्योऽर्कसंक्रान्ते[1]र्विद्वद्भिः परिकीर्त्तितः॥

इति शातातपवाक्यञ्च—

सर्व्वदिनसंक्रान्तिविषयतया व्यवस्थाप्य संक्रान्तिषु पुण्यकालयोः द्वात्रिंशद्दण्डावच्छेदो नियमितः। अश्रुतसमयविशेषेषु विष्णुपदीमात्रविषयता च।

यद्येवं विवक्षितं स्यात्तदा निःसन्देहं जावालो विष्णुपद्यामित्येवं ब्रूयात्। स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे इति न्यायात्। एतेनैकमूलतया शातातपोपि समन्वितः स्यादित्युपन्यस्य निरस्ता।

षड़शीतिमुखेऽतीते वृत्ते च विषुवद्वये।

भविष्यत्ययने पुण्यमतीते चोत्तरायणे॥

---

१ B संक्रान्तौ।

इति वाक्यं रात्रिसंक्रान्तिविषयतया व्यवस्थापितम् ।

तथा दिवासंक्रान्तिषु सर्व्वासु पूर्व्वापरभागाभ्यां द्वात्रिंशदेव दण्डः पुण्यकाल इत्युक्तम् ।

रात्रिसंक्रान्तौ च पूर्व्वापरदिनोत्तरभागयोः केवलयोर्म्मिलितयोश्च पुण्यकाल इति दर्शितम् । एवं सन्ध्यासंक्रान्तावपि तत्रापि षड़शीतिमुखविषुवदयोत्तरायणेषूत्तरदिनपूर्व्वार्द्धं दक्षिणायने तु पूर्व्वदिनोत्तरार्द्धं विष्णुपद्यान्तूभयार्द्धमिति निष्कृष्टम् ।

तदेतदपेशलम् । तथा हि—

मानार्द्धं भास्करे पुण्यमपूर्णे शर्व्वरीदले ।

इत्यादिवाक्यानां स्फुटे रात्रिविषयत्वे भविष्यत्ययने पुण्यमित्यादेर्द्दिनादिविशेषानुल्लेखिनः सामान्यविशेषन्यायविषयत्वं को वारयिता ।

तथा च रात्रिसंक्रान्तौ यावद्वाचनिकमादायैवानुष्ठानपरत्वनिर्व्वाहेन तदतिरिक्तविशेषापेक्षा अतः षड़शीतिमुख इत्यादिवाक्यं दिनसंक्रान्तिविषयमेव ।

इत्यञ्च षड़शीत्यादेः समयविशेषावद्धतया प्रतीतौ निराकांक्षत्वे "अर्व्वाक् षोड़श विज्ञेया" इत्येतस्य समयविशेषसाकांक्षस्य पारिशेष्यादश्रुतसमयविशेषतदाकांक्षविष्णुपदीमात्रविषयतैवोचिता ।

अतएव रात्रिसंक्रान्तिविषयत्वे तत्पुण्यकालान्वयमवगम्य तद्विशेषतयान्वयो व्यवहितः, दिनसंक्रान्तिषु भविष्यत्वादेः साक्षादन्वय इति तत्परत्वमेव युक्तमन्यथा वैषम्यापत्तेः ।

तद्विषयत्वे विष्णुपद्यामित्येव ब्रूयादित्युपालम्भो निर्व्वीज एव ।

पदादा सामान्यविशेषन्यायादा विशेषलाभस्य[1] व्युत्पत्तिसिद्धत्वात् ।

एवञ्च षड़शीतिमुखेऽतीते इत्यादेर्विशेषविषयत्वस्थितावर्व्वाक् षोड़श नाद्य इत्येतस्य सामान्यशास्त्रस्य सामान्यविशेषन्यायाद्भिन्नविषयत्वस्थितौ विष्णुपद्येवाऽद्धविषया इति न्यायरत्नो लिखति स्म।

युक्तञ्चैतत् । अयनेषु विकल्पोऽयमित्यादिना प्रतिपादनीयोत्तरायणदक्षिणायनयोरवश्यं दिनसम्बन्धितया विवक्षितत्वात्तत्तन्त्वस्याशुतराचिकत्वस्याचापि षड़शीतिमुख इत्यादौ सम्भवात् पारिशेष्यात् । षड़शीति मुखे वृत्ते इति दिवासंक्रान्तिपरमिति कल्पतरुकारवचनाच्चेति ।

महासान्धिविग्रहिकठक्कुरश्रीवीरेश्वरात्मज-महासान्धिविग्रहिकठक्कुरश्रीचण्डेश्वरविरचिते कृत्यरत्नाकरे संक्रान्तितरङ्गः ॥

---

१ C विशेषभावस्य ।

## अथामावास्यातरङ्गः[1]।

तत्र मनुः—

पितृयज्ञन्तु निर्वर्त्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।
पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम्॥

पितृयज्ञः पिण्डपितृयज्ञाख्यं कर्म अग्निमत्वमत्र बोधनीयकर्मे अधिकार्य्यवच्छेदकं[2] पिण्डान्वाहार्य्यकं पिण्डानामनु आह्रियन्ते यद्यंश्राद्धं तत्तथा एते च पिण्डाः पितृयज्ञीयाः मासानुमासिकं प्रतिमासोद्भवम्।

पिण्डानां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधाः।
तदामिषेण कर्त्तव्यं प्रशस्तेन विशेषतः॥

एषा पिण्डान्वाहार्य्यकमिति गुणविधानाय संज्ञा, आमिषेण प्रशस्तेन खड्गमांसादिना॥

छन्दोगपरिशिष्टे कात्यायनः—

पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते।
यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः।
तत् क्षयापेक्षया प्रोक्तं क्षीणे राजनि चेत्यपि।
यच्चोक्तं दृश्यमानेऽपि तच्चतुर्द्दश्यपेक्षया।
अमावस्यां प्रतीक्षेत तदन्ते वापि निर्वपेत्॥
अष्टमेऽंशे चतुर्द्दश्याः क्षीणो भवति चन्द्रमाः।
अमावस्याष्टमांशे च पुनः[3] किल भवेदणुः॥

---

१ C अमावस्यानिर्णयः। २ A B अग्निकार्य्यावच्छेदकम्।
३ B ततः।

आग्रहायण्यमावस्या तथा ज्येष्ठस्य या भवेत्।
विशेषमाभ्यां ब्रुवते चन्द्रचारविदो जनाः॥
अथेन्दुराद्ये प्रहरेऽवतिष्ठते
चतुर्थभागोनकलावशिष्टः।
तदन्त एव क्षयमेति कृत्स्न-
मेवं ज्योतिश्चक्रविदो वदन्ति॥
सम्मिश्रा या चतुर्द्दश्या अमावस्या भवेत् क्वचित्।
खर्व्वितान्तां विदुः केचिद्गतेध्यमिति चापरे॥
वर्द्धमानाममावस्यां लक्षयेदपरेऽहनि।
यामांस्त्रीनधिकान् वाऽपि पितृयज्ञस्ततो भवेत्॥

राजनि चन्द्रे तृतीयांशे त्रिधाविभक्तदिनतृतीयभागे अपराह्णे इति यावत् चतुर्द्दश्या यामः चतुर्द्दशीयामः तुरीयं चतुर्थं अनुपूरयेत् अमावस्या क्षीयमाणेति सम्बन्धः।

यदुक्तं यदहस्त्वेव इत्यादिना—

चन्द्रादर्शनश्रुतिविरोधमाशङ्क्य परिहारः कृतः अदर्शनस्य [1]क्षयोपलक्षणत्वात्। दृश्यमानेऽप्येक इति यद्गोभिलवचनं तदपीत्यम्भूत चतुर्द्दशीविषयम्। तदन्ते चतुर्द्दशीशेषे यदामावस्या श्राद्धयोग्य-कालव्यापिनी न भवति तदा अयं पक्षः।

इतरथा तु प्रथम एव अमावस्याष्टमेऽंश इति यदा अमा-वस्याया अष्टमोऽंशोऽपराह्णव्यापी भवत्यपरदिने तदाप्यनुरूपस्य चन्द्रमसः सत्त्वेन क्षयाभावात् न तत्र श्राद्धं कर्त्तव्यम्।

---

१ B लक्षयेत्।

यदाष्टमावस्याया न वृद्धिक्षयौ किन्तु साम्येनोभयदिनयो-रमावस्याया अपराह्णसम्बन्धः तदापि पूर्व्वदिन एव श्राद्धं कर्त्तव्यं क्षीणे राजनि शस्यते इति मनुवचनात्।

आग्रहायणी-ज्यैष्ठ्यमावस्ययोस्तु ज्योतिषशास्त्रानुसारेण चन्द्र-गतिवैलक्षण्यात्—

अष्टमेऽंशे चतुर्द्दश्याः क्षीणो भवति चन्द्रमाः।

इत्यादि प्रकारस्यासम्भवादुत्तरदिने एवामावस्याष्टम[१] भागेऽपि श्राद्धमित्यर्थः। तदन्त एव अमावस्यान्त एवेत्यर्थः।

सम्मिश्रेति खर्व्विता निन्दिता श्राद्धानर्हां केचिदाहुः। उपेक्षमिति चापरे श्राद्धार्हतया स्वीकुर्व्वते इति चापरे।

तदेवं संशयं कृत्वाऽग्रे निर्णयो वर्द्धमानामित्यादिना, तेन चतुर्द्दशीमिश्रा अमावस्या यदा पूर्व्वदिनापराह्णे यदा च विहित-भागेनोत्तरापराह्णसम्बन्धिनी तया वर्द्धमानतिथिपक्षे उत्तर-दिने श्राद्धं साम्यक्षीयमाणयोर्द्वयोस्तु[२] पूर्व्वदिने एव इति संक्षेपः। एवञ्च [३]श्राद्धकल्पे साम्यपक्षे उत्तरदिवसे श्राद्धमिति यदुक्तं तन्नादरणीयम्। कल्पतरु-पारिजातविरोधात्॥

इति महासान्धिविग्रहिकठक्कुरश्रीवीरेश्वरात्मज-महा-सान्धिविग्रहिकठक्कुर-श्रीचण्डेश्वरविरचिते कृत्यरत्नाकरे अमावस्यातरङ्गः॥

---

१ C अमावस्यान्तपक्ष—। २ A क्षीयमाणतया।
३ A B D श्राद्धकल्पे इति पदं नास्ति।

## अथ ग्रहणकनिर्णयः ।

तत्र जावालः—

संक्रान्तेः पुण्यकालस्तु षोड़शोभयतः कला ।
चन्द्रसूर्य्योपरागे तु यावद्दर्शनगोचरः ॥

यमः—

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ।
गुणवत् सर्व्वकामीयं पितृणामुपतिष्ठते ॥

देवलः—

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्य्यान्निशि काम्यव्रतेषु च ॥

शातातपः—

सर्व्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्व्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति ॥

अत्र राहुदर्शनस्य भूयोभिर्वाक्यैर्निमित्तत्वबोधनात् कल्पनालाघवेन कर्त्तृत्वसमानाधिकरणस्य च तस्यादेयत्वात् स्नानादिकर्त्तुरुपरागदर्शनं निमित्तं चन्द्रसूर्य्योपरागे तु यावद्दर्शनगोचर इति पुण्यवेलानियामकवचनाच्च यावद्दर्शनयोग्य उपरागो वर्त्तते तावद्दर्शनानन्तरं स्नानादिक्रियेति व्यवस्था ।

कल्पतरुकारस्तु—

चन्द्रसूर्य्योपरागस्य निमित्तत्वप्रतिपादनात् ज्ञातस्यैव च निमित्तत्वात् ज्ञानमात्रे प्राप्ते यावद्दर्शनगोचर इति राहुदर्शन

इत्यादिवचनाच्चाक्षुषज्ञानविषयस्यैव निमित्तता चाक्षुष एव ज्ञाने दर्शनपदस्य मुख्यत्वादित्याह। अत्र च फलतो न विशेषः।

यत्तु पारिजातनिबन्धे दूषितम्—

न तावद्दृष्ट उपरागो निमित्तं तथा हि चाण्डालादिस्पर्श इव येनैव दृष्टस्तं प्रत्येव निमित्तं स्यादिति तदिष्टापादनमेवेति मन्दम्॥

पक्षान्तरदूषणं पारिजातोद्भावितं यत् तदनभ्युपगमेनैव निराकृतम्।

यत्तु येन केनापि दृष्ट उपरागे अन्यः स्नानादि करोत्यलं सामानाधिकरण्येनेति तन्मन्दम्। उक्तयुक्तेः।

विष्णुः— चन्द्रार्कोपरागे नाश्नीयादमुक्तयोरस्तङ्गतयोर्दृष्ट्वा स्नात्वा परेऽहनि।

शातातपः—

अहोरात्रन्तु नाश्नीयात् चन्द्रसूर्य्यग्रहो यदा।
[1]मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः॥
सूर्य्याचन्द्रमसोर्लोकानक्षयान् याति मानवः।
धौतपाप्मा विशुद्धात्मा मोदते तत्र देववत्॥
अयने विषुवे चैव चन्द्रसूर्य्यग्रहे तथा।
अहोरात्रोषितः स्नातः सर्व्वपापैः प्रमुच्यते॥

अहोरात्रोषितः पूर्व्वदिने कृतोपवासः।

नाद्यात् सूर्य्यग्रहात् पूर्व्वमह्नि सायं शशिग्रहात्।
ग्रहकाले च नाश्नीयात् स्नात्वाश्नीयाच्च मुक्तयोः॥

---

१ C मुक्तम्।

मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा।
स्नात्वा दृष्ट्वा परेऽह्न्यद्यात् ग्रस्तास्तमितयोस्तयोः॥

महानिशा रात्रेः सार्द्धप्रहरादुपरि[1] मुहूर्त्तचतुष्टयम्।

ज्योतिःशास्त्रे—

अर्द्धरात्रे व्यतीते तु यदा चन्द्रग्रहो भवेत्।
सायं तत्र न भुञ्जीत न तु प्रातरभोजनम्॥

अत्राहोरात्रन्तु नाश्नीयादित्यादिना विहितमभोजनम् काम्यं सूर्य्याचन्द्रमसोरित्यादिना फलोपस्थितेः॥

अहोरात्राभोजनमदर्शन[2]पक्षे मुक्तदर्शनानन्तरं भोजनविधानात्। कामनाविरहे तु—

नाद्यात् सूर्य्यग्रहात् पूर्व्वमह्नि सायं शशिग्रहात्।

इत्यादिना व्यवस्था।

एवञ्च मुक्तयोः चन्द्रसूर्य्ययोरस्तसमये दर्शनविरहेऽपि भोजनमदुष्टमयमिह समुदायार्थः।

कामनावता उपरागपूर्व्वदिने उपवासः कर्त्तव्यः, निष्कामेन तु ग्रस्तास्तसूर्य्यग्रहे तु न[3] भोक्तव्यम्।

ब्रह्मपुराणे—

नाश्नीयादथ तत्काले ग्रस्तयोश्चन्द्रसूर्य्ययोः।
मुक्तयोश्च कृतस्नानः पश्चात् कुर्य्यात् स्ववेश्मनि॥

कुर्य्यादित्यशनमिति विपरिणतमनुषज्यते।

---

१ C सार्द्धप्रहरद्वयोपरि। २ C मुक्तादर्शनपक्षे।
३ A न पदं नास्ति।

तथा—

नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः।
चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्व्वसु॥
अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम्।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयञ्च तत्॥

देवीपुराणे—

गोदावरी महापुण्या चन्द्रे राहुसमन्विते।
सूर्य्ये च राहुणा ग्रस्ते तमोभूते महामुने॥
नर्म्मदातोयसंस्पर्शात् कृतकृत्या भवन्ति ते।
ये सूर्य्ये सैंहिकेयेन स्पृष्टे रेवाजलं नराः।
स्पृशन्ति चावगाहन्ते न ते प्रकृतिमानवाः॥
स्नात्वा शतक्रतुफलं दृष्ट्वा गोदानजं फलम्।
स्पृष्ट्वा गोमेधतुल्यन्तु पीत्वा सौत्रामणीं लभेत्॥
स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारतः॥
रविचन्द्रोपरागे तु अयने चोत्तरे तथा।
एवं गङ्गाऽपि द्रष्टव्या तद्वदेव सरस्वती॥
शिवादित्यफलं तत्र मण्डले समुदाहृतम्।
सग्रहे मण्डले योगे तदपि प्राप्नुयान्नरः॥

शिवादित्ययोर्मण्डले क्षेत्रे तयोर्यत्फलं तद्राहुग्रस्ते शशिसूर्य्ययोर्मण्डले योगे पूजायां प्राप्नोतीत्यर्थः। इति कल्पतरुः।

ऊषरारण्यक्षेत्रेषु यत्पुण्यं समुदाहृतम्।
तदत्र कालमाहात्म्यादुपरागेऽधिकं भवेत्॥

छन्दोगपरिशिष्टे—

स्वर्धून्यम्भःसमानि स्युः सर्व्वाण्यम्भांसि भूतले।
कूपस्थान्यपि चन्द्रार्कग्रहणे नात्र संशयः॥

अधिकं ग्रहणमधिकृत्य तत्तन्मासेष्वनुसन्धेयम्।

---

अथ ग्रहणस्नानम्।

तत्र मत्स्यपुराणे—

यस्य राशिं समासाद्य भवेद्ग्रहणसंप्लवः।
तस्य स्नानं प्रवक्ष्यामि सर्व्वौषधिविधानवत्॥
चन्द्रोपरागं सम्प्राप्य कृत्वा ब्राह्मणभोजनम्।
सम्पूज्य चतुरो विप्रान् शुक्लमाल्यानुलेपनैः॥
पूर्व्वमेवोपरागस्य समासाद्यौषधादिकम्।
स्थापयेच्चतुरः कुम्भान् ब्राह्मणान् सागरानिति[1]॥
गजाश्वरथ्यावल्मीकसङ्गमाद्ध्रदगोकुलात्।
राजद्वारप्रदेशाच्च मृदमानीय निःक्षिपेत्॥
पञ्चगव्यञ्च कुम्भेषु शुद्धमुक्ताफलानि च।
रोचनां पद्म-शङ्खौ च पञ्चरत्नसमन्वितौ॥
स्फटिकं चन्दनं श्वेतं तीर्थवारि ससर्षपम्।
गजदन्तं सकुमुदं तथैवोशीरगुग्गुलुम्॥
एतत् सर्व्वं विनिःक्षिप्य कुम्भेष्वावाहयेत् सुरान्।
सर्व्वे समुद्राः सरितः तीर्थानि जलदा नदाः[2]॥

---

१ B सागरादिति। २ B ह्रदाः।

आयान्तु यजमानस्य दुरितक्षयकारकाः ।
योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः ॥
सहस्रनयनश्चन्द्रो ग्रहपीड़ां व्यपोहतु ।
यः कर्म्मसाक्षी लोकानां धर्म्मो महिषवाहनः ॥
यमश्चन्द्रोपरागोत्थां ग्रहपीड़ां व्यपोहतु ।
रक्षोगणाधिपः साक्षात् प्रलयानलसन्निभः ॥
खड्गव्यग्रोऽतिभीमश्च रक्षःपीड़ां व्यपोहतु ।
नागपाशधरो देवः सदा मकरवाहनः ॥
स जलाधिपतिश्चन्द्रः ग्रहपीड़ां व्यपोहतु ।
प्राणरूपेण यो लोकान् याति कृष्णमृगप्रियः ॥
वायुश्चन्द्रोपरागोत्थां पीड़ामत्र व्यपोहतु ।
योऽसौ निधिपतिर्देवः खड्गशूलगदाधरः ॥
त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।
ब्रह्मविष्ण्वर्कयुक्तानि पापं तन्मे दहन्तु वै ॥
एवमामन्त्र्य कुम्भैस्तैरभिषिक्तो गुणान्वितैः ।
ऋग्यजुःसाममन्त्रैश्च शुक्लमाल्यानुलेपनैः ॥
पूजयेद्वस्त्रगोदानैर्ब्राह्मणानिष्टदेवतान् ।
एतानेव ततो मन्त्रान् विलिख्य कनकान्वितान् ॥
वस्त्रपट्टेऽथवा पत्रे पञ्चरत्नसमन्वितान् ।
यजमानस्य शिरसि निदध्युस्ते द्विजोत्तमाः ॥
ततोऽतिवाहयेद्वेलामुपरागेऽनुगामिनीम् ।
प्राङ्मुखः पूजयित्वा तु नमस्यन्निष्टदेवताम् ॥

चन्द्रग्रहे निवृत्ते तु कृतगोदोहमङ्गलः ।
कृतस्नानाय तं पट्टं ब्राह्मणाय निवेदयेत् ॥
अनेन विधिना यस्तु ग्रहस्नानं समाचरेत् ।
न तस्य ग्रहपीड़ा स्यात् न च बन्धुजनक्षयः ॥
परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ।
सूर्य्य-ग्रहे सूर्य्यनाम सदा मन्त्रेषु कीर्त्तयेत् ॥
अधिकाः पद्मरागाः स्युः कपिलाश्च सुशोभनाम् ।
प्रयच्छेद्वित्तसम्पत्तौ चन्द्रसूर्य्योपरागयोः ॥
य इदं शृणुयान्नित्यं श्रावयेद्वापि मानवः ।
सर्व्वपापविनिर्मुक्तः शक्रलोके महीयते ॥

इति मत्स्यपुराणे चन्द्रादित्योपरागे स्नानविधिः ॥

इति महासान्धिविग्रहिकठक्कुर-श्रीवीरेश्वरात्मज महा-
सान्धिविग्रहिकठक्कुर-श्रीचण्डेश्वरविरचिते
कृत्यरत्नाकरे ग्रहणतरङ्गः ।

## अथ व्रतादितिथिवेधादि व्यवस्थितिः।

तत्र पूर्व्वदिने स्नात्वा निरामिषमेकवारं भुक्त्वा अपरदिने प्रातर्द्दन्तान् संशोध्य सूर्य्योदयवेलायां ॐ अद्येत्यादिना व्रतममथं निर्द्दिश्य फलमुद्दिश्य भगवन् सूर्य्य भगवत्यः सोमादिदेवता उपवासं नक्तमयाचितं मया कर्त्तव्यमिति संकल्पाभिलापरूप-व्रतग्रहणं कुर्य्यात्।

सोमादिदेवताश्च कथिताः परिभाषायाम्। अनेकाहसाध्येऽद्य-स्थाने अद्यादीति प्रयोज्यम्।

एतच्च

अभुक्त्वा प्रातराहारं स्नात्वा चैव समाहितः।
सूर्य्याय देवताभ्यश्च निवेद्य व्रतमाचरेत्॥

इति देवलवाक्यात् प्रधानान्वयाभ्यर्हिततया प्रातर्व्रतमाच-रेदिति पर्य्यवसिताद्बोद्धव्यम्। विप्रतिपत्तिश्च परिभाषायां निरा-कृता। आहारमभुक्त्वा इत्याहारस्यैकत्वविवक्षया पूर्व्वदिने एकभक्त-लाभः। बहुषु व्रतेष्वेकभक्ताभिधानात् सामान्यत एव तत्कल्पना-लाघवादाचाराच्च।

अन्ये तु

सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे।
धर्म्योपवासे कुर्व्वीत नैव भक्तचतुष्टयम्॥

इति वचनादुपवासे एकभक्तमिच्छन्ति॥

## अथ व्रतचिन्ता।

तत्र व्रतश्चान्द्रायणादीति कल्पतरुकारः।

अन्ये तु

आरभ्य कामचारादसमापितमात्मनः ।

श्रद्धा यद्'मुच भवति हेतुस्तद्व्रतमाचक्षते सन्तः ॥

समयप्रदीपकारैः—

स्वकर्त्तव्यविषयो नियतः संकल्पो व्रतमित्युक्तम् ।

देवेश्वरधर्म्माधिकारिणस्तु

व्रतकाण्डपरिपठितत्वमेव व्रतत्वमित्युचिरे ।

अन्ये तु—

जातिविशेषवान् संकल्पस्तविषयकतया वा व्रतमित्याहुः ।

ननु द्वितीयोक्तप्रवृत्तिनिमित्तं व्रतधर्म्मिणि कथं निश्चेयं, इत्थं पदाव्युत्पत्तावपि व्रतपदार्थस्तत्रैव तद्धर्म्मयोग इति ।

पूर्व्वं व्रतं गृहीत्वा यो नाचरेत् काममोहितः ।

जीवन् भवति चाण्डालो मृतः श्वा चैव जायते ॥

इत्यस्मादेव वाक्याद्बोधोत्पत्तेरविरोधात्तथैवानुभवाच्च । यथा गौस्तथा गवय इति वाक्याद्यो गोसदृशः स गवयपदवाच्य इतिवत् ।

सर्व्वभोगविवर्ज्जितः शास्त्रनिषिद्धभोगशून्यः ।

शिष्टाः—

उपवासे तथा श्राद्धे न खादेद्दन्तधावनम् ।

दन्तानां काष्ठसंयोगो हन्ति सप्तकुलानि वै ॥

अनेन काष्ठकरणकधावनस्योपवासे निषेधाद्दन्तधावनस्य प्रतिप्रसवाद्युक्तमकाष्ठेन दन्तधावनम् ।

---

१ C अद्धेत्यच ।

अथ व्रतादितिथिषु पूर्व्वोत्तरगामिनीषु उभयत्र विहित-कालालाभे दिनाध्यवसायचिन्ता।

तत्र भविष्ये—

षष्ठीसमेता कर्त्तव्या सप्तमी नाष्टमीयुता।
पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम्॥
एकादश्यां प्रकुर्व्वन्ति उपवासं मनीषिणः।
आराधनाय द्वादश्यां विष्णोर्यद्वदियं तिथिः[१]॥

पतङ्गोपासनाय भानोराराधनाय षष्ठीसमेता सप्तमी कर्त्तव्या यथा सप्तम्युपवासं सप्तमीयुतषष्ठ्यां उपोषणमाहुर्यत आराधनाय इत्यादिना दृष्टान्तत्वेन अपराध्यवसायवर्णनं तेनैकादशी द्वादशी मिश्रा कार्य्या षष्ठीमिश्रा तु सप्तमीत्यर्थः।

सम्पूर्णैकादश्यामपरदिनवर्द्धमानायामपि वाक्यमिदं नियामक-मित्येके।

न च दार्ष्टान्तिके नाष्टमीयुतेति निषेधादुभयतिथेरेवा-गमात् दृष्टान्तेऽपि तथैव विवक्षेति वाच्यम्।

मानाभावात् वाक्यस्योभयव्यवस्थापकत्वेन दृष्टान्तदार्ष्टान्तिकस्य विवक्षितत्वात्॥ यदाहुः— सप्तम्येकादश्योर्वाचनिकी व्यवस्थेति।

अन्ये तु

यत्र षष्ठीविद्धा सप्तमी पूर्व्वदिने उत्तरदिने च अष्टमीविद्धा एवं दशमीविद्धैकादशी पूर्व्वदिने उत्तरदिने एकादशीमिश्रा द्वादशी तत्र कृततो दृष्टान्तदार्ष्टान्तिकभावेन पूर्व्वापरतिथ्योरेतद्

१ D यदुदितं तथा।

ग्राह्यत्वं बोधयति। उभयत्र दिवावेधस्यैव विवक्षितः। अन्यत्र तु नेदं वाक्यमुपतिष्ठते इत्याहुः।

एतन्मूलक एव

दशम्येकादशी विद्धा गान्धारी तामुपोषिता।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्ज्जयेत्॥

इत्यादिनिन्दानुवाद इत्यपि। तदेवं तिथिद्वयमात्रमभिधाय मूकायां मूलस्मृतौ संकल्परूपप्रधानव्रतपदार्थानुरोधादेव भूपालानुगतस्याप्यतिप्रसञ्जनसमाकुलत्वे महाजनपरिगृहीतवचनमेव व्यवस्थायां शरणम्।

तच्च

युग्माग्निकृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः।
रुद्रेण द्वादशी मिश्रा चतुर्द्दश्या च पूर्णिमा॥
प्रतिपदा त्वमावस्या तिथ्योर्युग्मं महाफलम्।
एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम्॥

एतेन युग्माग्न्योर्द्वितीयातृतीययोः कृतभूतयोः चतुर्थीपञ्चम्योः षण्मुन्योः षष्ठीसप्तम्योः वसुरन्ध्रयोरष्टमीनवम्योः एकादशीद्वादश्योः चतुर्द्दशी-पौर्णमास्योरमावस्याप्रतिपदोश्च युग्मं महाफलमित्युक्तम्। तेन द्वितीया तृतीयामिश्रा कार्य्येषु ग्राह्या तृतीया द्वितीयामिश्रा एवं सर्व्वत्र।

अत्र केचित्—

द्वितीया प्रतिपन्मिश्रा हेया तृतीया चतुर्थीमिश्रा हेया एवमन्यत्रापि युग्मान्तरं हेयं अयञ्च युग्मविधिराचाराद्दहोरात्र—

साध्योपवासादिकर्म्मणि तिथिद्वैधे सति सर्व्वत्र बोद्धव्यः। देवपूजादावपि विहितपूर्व्वाह्लादिगामितिथिलाभे यदा त्वेकस्मिन्नेव विहितकाललाभस्तदा तत्रैव कर्म्म। ननु व्यस्तनिन्दाश्रवणात्तत्रापि युग्मादरः।

मैवं दिनद्वयगामिविहितकाले सप्तम्यादिनिमित्तं कर्म्म सकृत् कर्त्तव्यं पूर्व्वस्मिन् दिने वा इत्यपेक्षायां तत्रैव युग्मविधिः। अपेक्षितविधिबलात् नियमभावे लाघवाच्चेति।

अत्र किञ्चिदुच्यते—

दिनद्वयगामिनि विहितकाले इति किं यथाश्रुतमेव विवक्षितं दिनद्वये तिथिद्वयदिवाभिप्रायं वा प्रथमे पक्षे व्यापिकायामपि षष्ठ्यामपरदिनसप्तमीयुतायां तथात्वमिति तत्रापि षष्ठी सप्तमीयुतैवादेया द्वितीयस्तु व्यापकषष्ठ्यामुभयदिनगामिन्यामुभयत्र विहितकाललाभे कस्मिन् दिने सा समादर्त्तुमर्हतीत्याकाङ्क्षाभावान्न युक्तः।

अतएव जीकनीयनिवन्धाचार्य्यैरुद्धिद्वासादिना तद्दिनद्वयगामिनि विहितकाले कृत्यं कुत्रदिने क्रियतामित्यवतारयति स्म। तत्प्रकरणं आकाङ्क्षैवात्र न जायत इति तु साहसं तदस्तु तावदिदं। चतुर्द्दशी शुक्ला पूर्णिमायोगात् कृष्णचतुर्द्दशी तु त्रयोदशीमिश्रैव ग्राह्या "कामविद्धो हरः पूज्यः" इति वचनात् कामहरौ त्रयोदशीचतुर्द्दश्यौ। निषेधे त्वष्टम्यादौ मांसादीनां तद्वेलाव्यापकत्वेन निषेधस्यैर्व्याभिषिद्धे कालवर्ज्जनमिति वाक्यान्नाकाङ्क्षा इति न युग्मविधिः।

तथा

षष्ठ्यष्टम्यमावस्या कृष्णपक्षे त्रयोदशी।

एताः परयुताः कार्य्याः पराः पूर्व्वेण संयुताः॥

इदञ्च वाक्यं षष्ठ्यादितिथीः परभूततिथियुक्ताः सप्तम्यादि-तिथीः स्वपूर्व्वतिथियुक्ताः स्वकार्य्ये विदधदनुभूयते। तदेतद्यथा + श्रुतमेवाकाङ्क्षाया उभयपक्षेऽपि प्रयोजकस्यैर्य्यात् + प्रथम एव पक्ष इत्येके।

तथा च द्वैधे व्यवस्थायां कृतायां यत्र नोभयवेधो दिनद्वय-गामिनी च विहितकालवती तिथिस्तत्र का गतिरित्याकाङ्क्षाया-मिदं वाक्यम्।

इति समयप्रदीपेऽपीदमुभयदिनतिथिद्वयवेधे एतद्बोद्धव्यमिति नावतारितम्। किन्तु सामान्यत एव।

अन्ये तु

अत्रापि तिथिद्वयवेधविषयतामेव वदन्ति व्यापकभावेन प्रथमोत्तरतिथौ व्यापकत्वं प्राथम्यञ्च विनिगमकमाहुः।

यत्र तु सम्पूर्णैकादशी दिनान्तरे वर्द्धते तत्र किञ्चिदुत्तरादरे उक्तमेव तिथेः प्रान्तमुपोष्यं स्यादिति नारदपुराणीयवाक्यञ्च पूर्णाप्येकादशी त्याज्या द्वितयं वर्द्धते यदि।

इति वाक्यञ्च शिष्टपरिगृहीतम्। आचारवाहुल्यस्तात्।

गौड़ास्तु—

सम्पूर्णैकादशी यत्र परतोऽपि विवर्द्धते।

तत्रोत्तरां यतिः कुर्य्यात् पूर्व्वामुपवसेद्गृही॥

तथा—

द्वादश्यां पारणाभावे[1] पूर्व्वामुपवसेद्गृही॥ इति वाक्यद्वया-द्व्यवस्थामाहुः।

अन्ये तु व्यापकतया प्राथम्येन प्रथमामेकादशीं मन्यन्ते।

आचारोऽपि चात्र द्विविध एव तस्मात्तत्रैव भूमानमादाय व्यवहर्त्तव्यम्॥

किं वस्तु दोषपरिहीनमिहास्ति लोके
किं वा न राजति गुणोज्ज्वलमर्थजातम्।
स्वं मत्सरं रिपुमिव प्रतिहत्य सन्तो
गृह्णीत तद्गुणमपाकुरुताऽथ दोषम्॥

वृन्दे मन्त्रीश्वराणां परिषदि विदुषां सामगानां समाजे
गोष्ठीषु स्तोमभाजां सदसि सुकृतिनां श्रीमतां मन्दिरेषु।
आगङ्गाम्भःसभासु क्षितिवलयभुजामालये नीतिभाजाम्
श्रीमच्चण्डेश्वरोऽयं निखिलगुणनिधिर्गीयतां गौरवेण॥

महासान्धिविग्रहिक ठक्कुर-वीरेश्वरात्मजमहासान्धि-विग्रहिक-ठक्कुर-श्रीचण्डेश्वरविरचितः कृत्यरत्नाकरः।

समाप्तः॥

---

१ B पारणालाभे।

# कृत्यरत्नाकरधृत-संहिताकार-ऋषीणा-मकारादिक्रमेण नामसूची ।


पृः पं

अङ्गिराः २४, १४ । ६४, १२

आपस्तम्बः ८, १ । २०, १
२४, ७ । ३३, १५-१९
६१, १९ । ३२४, ९
५४५, ४

ऋष्यशृङ्गः २९, २० । ५३८, १

कात्यायनः ४६, १७ । ३२०, ७
३२३, ५ । ५४५, १४
६२२, १२

गार्ग्यः ... २६५ ७

गोतमः ... २६४ १२

गोभिलः ... २९ २०

गौतमः १८, १६ । ३७, ५

जातुकर्णः ... ३२० २१

जाबालः ३७, ७ । ३२९, ७
६१४, २० । ६१९, ९
६२५, २

दक्षः १७, १८ । ४५, २ । ४६, ९
४४१, १६

देवलः १५, १ । १६, १२
१७, १, १५ । २८, १६
३५, १६ । ५३, ७
५४, १६ । ५६, ७
५७, ६ । ३१७, ७
३३१, ४ । ५४७, १
६१६, २०

पृः पं

नारदः ... ११ १

पारस्करः ... २८ १३

पैठीनसिः ७३, ५ । ५४५, २१

वृद्धवसिष्ठः ... ३० ४

वृद्धमनुः ... ३० ४

वृद्धशातातपः ३०, ४ । ५६, १३
५४६, ११

बृहस्पतिः ११, ८ । १४, १४
१५, ७ । २३, १८
२१३, १९

बौधायनः ३२, १६ । ३५, ४
४८, २ । ४९, ११ । ७४, ३
५४५, १८

मनुः ७, १४ । १२, ९ । १७, १०
१८, ५ । २०, १३ । २१, १
२५, १ । २६, २ । ३८, ३
४०, १८ । ४३, १ । ७७, १
२५२, ८ । ३१५, १०
३२०, १३ । ३२१, ४
३२३, ११ । ३३०, १६
४२५, १३ । ५४४, १४
५४८, १४ । ५६६, १२

मरीचिः ६१, ४ । ६७, ३
२६५, १७ । ३२७, ३

यमः २१, १ । २९, १ । ३२, १६
३९, १७ । ४०, २ । १५१, १५

पृः पं

१५६, १२ । १६४, ६
३०७, १५ । ४०६, २
४३२, १ । ४७६, १३
४८८, ८ । ४८६, १५
४६५, १४ । ६११, २
याज्ञवल्क्यः १५, ४ । २७, १
३०, ६ । ४६, ३ । २५१, १२
३१६, १ । ३१७, ६
योगियाज्ञवल्क्यः ३०, ४ । ४७, १६
४६, १६ । ५१, ६ । ६३, ७
योगीश्वरः ... ८१ १४
लघुहारीतः ३०, ४ । ४७, १२
६७, ८ । ५३६, १७
वसिष्ठः १८, ६ । २१, १ । २४, ३
३३, ६ । ४०, १३ । ४४, ७
४६, ४ । १६६, ४ । १६७, १४
२५१, १० । २५२, १ । ३१६, ६
५३८, ५
विष्णुः १४, ८ । ४५, ७ । १४०-३
१५५, १ । २१४, ५ । २५१, ७
२५२, ७ । २६६, १६
३०७, १३ । ३१६, ११
३१८, ८ । ३२४, १६
३६६, १४ । ३६६, २०
४३०, १८ । ४६१, १६
४७३, २० । ४८४, १०
४८७, १६ । ४८६, १६
४६५, १० । ५१३, १
५१६, ११ । ५४५, १
५४६, १७ । ६२६, १०
व्याघ्रादिमुनिः ... ३० १

पृः पं

व्यासः ३८, १६ । ४८, १६ । ३१६, ६
शङ्खः ६२, ११ । ३१७, १३
५४४, २०
शङ्खलिखितौ २८, १८ । ३२, ६
३४, १० । ३६, ११ । ४१, २
शाट्यायनः ... ४८ १०
शातातपः ... ४८ ७
५६, १६ । २१८, १५
३२७, १६ । ३२८, २०
६१४, १६ । ६१७, ५
६१६, १२ । ६२५, १२
संवर्त्तः ... ५६० १८
सुमन्तुः ... २८ ३
हलायुधः ३१६, ६ । ३२७, १३
३३२, ३
हारीतः ६, २ । २१, ४ । २६, ११
३३, १२ । ३६, २०
६१, १७ । ८१, ४


## संहिता नामानि ।


जावालस्मृतिः ... ४०२ १५
वराहसंहिता २६७, १७ । ३७२, ५


## संग्रहग्रन्थनामानि ।


कर्म्मप्रदीपः ... २६४ १८
कल्पतरुः ८, १४ । २६, १८
३८, १५ । ५३, ३ । ५४, १४
५६, १२ । ६६, ११ । ७१, ६
७४, ३ । १७०, ११ । १७५, १८
२६७, १२ । ३१६, ७
३२२, १८ । ३६५, १०

पृः पं
४७६, १० । ४८७, ११
५०१, १८ । ५१५, ८
६२५, २० । ६२८, २०
कामधेनुः ३०, १ । २६६, १८
कृत्यसमुच्चयः २८६, २ । ३१३, ८
४४६, १८ । ५१२, १८
५१५, ६ । ५२२, ६
५३६, १५
गाङ्गेयः ... १८८ ७
गौड़ीयनिबन्धः ... २५८ २१
गौड़ीयवाक्यम् ... १५३ ११
जिकनीयनिबन्धः ... ६३६ १५
दानसागरः ५४, ६ । १६६, ५
३००, २ । ४८७, १८
५१५, ५
पारिजातनिबन्धः ... ६२६ ३
भूपालसमुच्चयः ... २०५ १६
षट्त्रिंशन्मतम् ३१, १
समय प्रदीपः ४००, ८ । ४०१, २
४७६, १० । ५०५, १०
५२२, ६ । ५४०, १३
६३३, ४ । ६३७, ११

## संग्रहकारनामानि ।

गौड़ः ४१२, १२ । ६३७, २२
देवेश्वरधर्म्माधिकरणिकः—
२३६, ६ । ६१८, १५
पारिजातः ३१, ६ । ५४, १५
५८, १४ । ५६ १२ । ६१, १४
६६, ११ । ७४, ३ । ६२, १५
३००, २
पृः पं
पाश्चात्यव्याख्याता ... ३००, २
३१६, ७ । ३२८, २ । ५००, ७
५१५, ८ । ५१६, ७
विश्वरूपः ... २७ ६
भट्टपादः ... २६ १८
भूपालः १७१, ६ । १७५, १८
२७८, ४ । ३१३, ७
४६६, १० । ६३५, ७
भोज भूपालः ... ५८ १७
लक्ष्मीधरः ५१, १२ । ७४, ६ । ८१, ५
शिष्टः २३३, ४ । २७०, १४
२७१, ६ । ४६८, १२
५०४, १ । ६३३, १७
श्रीदत्तोपाध्यायः ६६, १२
सागरः ४६, २ । ५१, ११
६१, १३ । ४३८, ६
५१५, ६ । ५२०, ३
स्मृतिमहार्णवकारः ६१६ ७
हलायुधः ३१६, ६ । ३२७, १४
३३२, ३

## पुराणनामानि ।

अग्निपुराणम् ... २११ ६
आग्नेयपुराणम् ... ११८ १२
१४५, ६ । १५१, ६
१५३, १२ । १८६, १५
४८६, १५
आदित्यपुराणम् ... ५६ १७
१७६, २० । २१४, १७
२१८, १७ । २१६, ११
३६७, १ । ५६१, ७
५६७, ३

